त्यादितत्वसंख्यानादिवचनार्थानुवादोयं ॥ ४-६ ॥ अभावंविभजति ॥ प्राभावःप्रमेयत्वादिभावधर्मवच्चेतिप्राचीनाभिप्रेतमि
नप्रमेयत्वमभ्युपेत्य असदभावयोर्भेदोनास्ति किंतु असत्त्रिविधं प्रागसदुत्तरासत्स्तुतिबहुशोनिरूपितं । मतद्वयस्याप्यर्थतएक
रणेतावत्सन्न्यायरत्नावल्यां "नचस्वरूपेणासतोपिप्रमेयत्वपदार्थत्वादिवज्जगत्कारणत्वादेःभावस्यचासदेवप्रतियोगीति कथम
हितस्यासत्त्वाभ्युपगमात् । सिद्धांतिना यद्यपि प्रमेयत्वादिकमभ्युपगतमसतः तथापि ज[illegible]गी उतारोपितसत्त्वनैविशेषेण ।

संपूर्णामित(शक्तिमान्)सद्गुणः । यदधीनमिदंसर्वमस्वतंत्रंसदैवहि ॥ ४ ॥ अस्वतंत्रंप्रमेयंतु भावा
भावात्मनाद्विधा । प्रथमंविधिबुद्धेस्तु गोचरोभावइष्यते ॥ ५ ॥ अभावःप्रथमज्ञप्तौ निषेधमुखगो
चरः । भावधर्मयुतत्वेन ह्यस्तीतिव्यवहारभाक् ॥ ६ ॥ प्राक्प्रध्वंससदात्वेन त्रिविधोऽभावइष्यते ।

पद्यते । नचाभावस्यप्रमेयत्वादिभावधर्मवत्त्वंनास्तीतिवाच्यं । अभावःप्रमेयमितिविशिष्टप्रतीते"रित्यादिना असतइति
वक्तव्ये अभावस्येत्युक्त्वा प्रमेयत्वादिभावधर्माउपपादिताः । वैशेषिकपरीक्षायांच "यथाऽभावस्यगगनकुसुमादेःप्रमेयत्वादि
भावधर्मा" इत्याद्युक्तं । नयचंद्रिकायांच "अभावस्यहिभावोपिधर्म" इत्यनुव्याख्यानव्याख्यानावसरे अभावस्यखपुष्पादेःप्रमे
यत्वादिभावधर्मश्चे"त्याद्युक्तं । तत्वप्रदीपेचासदधिकरणे "तस्मादसत्कारणंस्यादिति प्राप्तमित्याद्युक्त्वा यद्यप्यभावानांभावध
र्मास्संती"त्याद्युक्तं "नहिवंध्यासूनोस्तद्भावान्यभेदादिभावधर्मवत्त्वेपी"त्यादिच । वैशेषिकपरीक्षायांच "यथाऽभावस्यगगनकुसु

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ श्रीमदानंदतीर्थार्यहृदयांभोजवासिने । नमः श्रीपतयेऽगण्यगुणपूर्णायविष्णवे ॥ १ ॥ शर्वादिसर्वगीर्वाणसेव्यदिव्यपदांबुजान् । श्रीमदानंदतीर्थार्यवर्यान्नित्यंनमाम्यहम् ॥ २ ॥ प्रणम्यचगुरून्सर्वांस्तेषामेवप्रसादतः । सत्तत्त्वरत्नमालाख्यग्रंथव्याख्यांकरोम्यहम् ॥३॥ ग्रंथादौशास्त्राध्यायचतुष्टयोक्तगुणवत्त्वेनभगवंतंस्तुवन्नमति ॥ नारायणमिति ॥ आत्मतंत्रमितिगुणपूर्णत्वाद्युपपादनार्थं । यथोक्तं स्वतंत्रत्वात्सुखस

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ नारायणंगुणगणार्णव
मात्मतंत्रं निर्दोषमब्जजमुखैःपरिसेवितांघ्रिं । मोक्षाद्यशेषपुरुषार्थदमिंदिरेशं श्रीमध्वदेवपरमेष्ठम
हंनमामि ॥ १॥ व्यासंचविज्ञानसहस्रभानुं रामंस्वभक्तार्णवपूर्णचंद्रं । कृष्णंचसंपूर्णगुणांबुराशिं वंदे
रमांमध्वमुनींस्तथागुरून् ॥ २ ॥ श्रीमध्वदेवकृतशास्त्रपयोब्धिगेषु सत्तत्त्वरत्ननिकरेषुकियंतिबुद्ध्या ।
संस्थापितानिगुरुभिर्मम तानिमालां वाक्सूत्रकेणहरयेऽर्पयितुंकरोमि ॥ ३

मादेर्भावरूपाधर्मा''इत्याद्युक्तं । तथाचैतद्वाक्यपर्यालोचनया असदेवात्यंताभावःप्रमेयत्वादिभावधर्मवच्चेतिप्राचीनाभिप्रेतमितिज्ञायते । श्रीमज्जयतीर्थपूज्यचरणैस्तु सुधादिषुसर्वत्रासत्प्रतियोगिकोत्यंताभावइतिबहुशोनिरूपितं । मतद्वयस्याप्यर्थतएकत्वादविरोधइत्याहुः । नन्वभावस्यप्रतियोगिनिरूप्यत्वात्प्रतियोगिनिरूप्ययोश्चभेदादत्यंताभावस्यचासदेवप्रतियोगीति कथमसदेवाभावइतिचेत् अत्रवक्तव्यं किमसच्छशविषाणादिकमसत्त्वप्रकारेणात्यंताभावस्यप्रतियोगि उतारोपितसत्त्ववैशिष्ट्येन । नाद्यः । अभावप्रतियोगित्वंनाम प्रतिषेध्यत्वमेव तच्चशशविषाणादेःसत्त्ववैशिष्ट्येनैवानुभवसिद्धं। तथाहि । शशविषाणंनास्ति शशविषाणस्याभावइतिखल्वत्यंताभावानुभवोजायते । तत्रशशविषाणंनास्तीत्यस्य शशविषाणमस्तित्वोपेतंनभवति तस्यसत्त्वं नास्तीतियावदित्येवार्थः । एवंशशविषाणस्याभावइत्यत्रापिनित्यनिषिद्धस्यनिषेधायोगात्सत्त्वाभावएवार्थः । तथाचारोपितसत्त्ववैशिष्ट्येनैवशशशृंगादेःप्रतिषेध्यत्वेनप्रतियोगित्वं नासत्त्वप्रकारेणेतिनिश्चीयते । किंचासतोसत्त्वप्रकारेणप्रतियोगित्वे असच्छब्दस्यनञ्गर्भत्वान्नञश्चाभावार्थकत्वात्तस्यचप्रागभावत्वाद्यनुपपत्तेरत्यंताभावत्वेपुनस्तस्यासत्प्रतियोगिकतयातत्राप्युक्तरीत्याऽभावबुद्धिनियमात्पुनरेवमित्यनवस्थापातात् । अतउक्तरीत्या आरोपितसत्त्वप्रकारेणैवासदभावप्रतियोगीति द्वितीयपक्षएवांगीकार्यः । तथाचासदित्यत्र सन्नेतिसत्त्वनिषेधप्रतीतेरत्यंताभावइत्यत्रापिसत्त्वाभावरूपनिषेधप्रतीतेर्नतयोरत्यंतभेदः । इयांस्तुविशेषः । निषेधोधर्मी असदितिनिषेध्यमुच्यते । अभावस्तुस्वयमेवनिषेधरूपइति । तत्रनिषेधरूपाभावाख्यधर्मस्य तद्धर्मिणोसतोप्येकत्वविवक्षया असदभावयोरैक्यव्यवहृतिःप्राचीनटीकासु । जयतीर्थश्रीमच्चरणैस्तु वस्तुतोधर्मधर्मिणोरभेदे

पिविशेषव्यवस्थया एकत्वाविवक्षया भेदव्यवहारःकृतइतिज्ञातव्यं । अतएव संयोगीघटइत्यादौ घटस्यसंयोगादिस्वधर्मनिरूपकत्वमिव शशशृंगादेरसत्त्वरूपाभावाख्यधर्मनिरूपकतयाप्रतियोगित्वमुपपद्यते । निरूपकत्वातिरिक्तस्यनिरूपयितुमशक्यत्वात् । ननुप्रमेयत्वाप्रमेयत्वाभ्यांवैलक्षण्यात्कथमसद्भावयोरैक्यमंगीकृत्यविवक्षाविशेषणंवटीकाकारैर्भेदाभिधायतइत्युच्यते । असतः प्रमेयत्वाभावः टीकाकाराभिप्रेतः । यत्प्रमयास्तीतिविधीयते तत्प्रमेयमित्यंगीकारादिति तत्वविवेकटीकादावुच्यते । तथाचप्रमयास्तीतिविधीयमानत्वंप्रमेयत्वं । तच्चाभावस्याप्यस्ति अस्त्यभावोस्तिध्वंसइति तस्यास्तितयाप्रमागोचरत्वात् । असत्तु न प्रमेयं । अस्तीतिप्रमागोचरत्वाभावात् । नह्यसदस्तीतिसंभवति । व्याघातात् । तथाच टीकाकाराणामसद्भावयोरैक्यंसर्वथा नाभिप्रेतमितिचेत् उच्यते । संमतमेवटीकाकाराणामप्यसतोपिप्रमेयत्वं । वंध्यासुतोनवक्तेत्यत्र वक्तृत्वविशिष्टवंध्यासुतलक्षणासतोनिषिध्यतयाप्रमागोचरत्वस्यसुधादौबहुशोऽभिधानात् । यद्वस्तुयत्प्रकारकं तस्यवस्तुनस्तत्प्रकारविशिष्टतयाप्रमितिविषयत्वमेव प्रमेयतोपयोगि नान्यथा । तत्वोद्योतेअसतःसत्त्वप्रतीतिः सतोसत्त्वप्रतीतिरित्यन्यथाप्रतीतिरेवभ्रांतित्वादित्याद्युक्तेः । असदेव रजतंप्रत्यभादितिबाधरूपप्रमायामसतोरजतस्यमानाभ्युपगमाच्च । तथाच प्रमयाऽस्तीतिविधीयमानत्वरूपंप्रमेयत्वमस्तित्वप्रकारोपेतस्यसतएव तादृशंमेयत्वंनासति । निषेध्यत्वप्रकारकवंध्यासुतकूर्मरोमाद्यसतितु प्रमया नास्तीतिनिषेध्यत्वरूपप्रमेयत्वमस्ति । प्रमाविषयत्वातिरिक्तस्यप्रमेयशब्दार्थस्यादर्शनात् । एतादृशंचप्रमेयत्वंनसति यत्प्रमयास्तीतिविधीयते तत्प्रमेयमिति तत्वविवेकटीकावचनंतु सत्पदार्थगतप्रमेयत्वविवक्षयाप्रवृत्तमिति नतद्विरोधः । ननूक्तमेवाभावस्यास्तीतिप्रमितिविषय

त्वंवर्तते नत्वसतीति तत्कथमसदेवाभावइति । सत्यं । अभावेअस्तिताखल्वसत्त्वरूपैव । "अभावस्यास्तितानामस्यादेवाभा वरूपिणी"त्युक्तेः । तत्प्रकारकास्तिता शशविषाणादावप्यस्ति । तत्र नित्यनिषिद्धतारूपास्तितांगीकारात् । घटादौयादृश्य स्तिता तादृशास्तितांगीकारेखलुव्याघातः । असदसत्त्वेनवर्ततइत्युक्तेकानामव्याहतिः । तथाचोक्तंसर्वमनवद्यं । भावंविभजते ॥ चेतनइति ॥ ७ ॥ इदानीमचेतनंविभजति ॥ अचेतनमिति ॥ नित्यमनित्यंनित्यानित्यमितिविभागतइत्यर्थः । "नित्या नित्यविभागेनत्रिधैवाचेतनंमत"मितिवचनादितिभावः ॥ उदाहृतामिति ॥ "यद्देशतोनंतं तन्नित्यमेव वेदाद्यन्यदि" तिगी

चेतनोचेतनश्चेति भावश्चद्विविधःस्मृतः ॥ ७ ॥ अचेतनंत्रिधाप्रोक्तं नित्यंचानित्यमेवच ।
नित्यानित्यंचेतिनित्यं सर्वंव्यासमुदाहृतं ॥८॥ नित्यास्तुवेदावर्णाश्च परमाकाशएवच ॥९॥

ताभाष्येइत्यर्थः । "जीवादन्यद्वेदादिकं आदिपदेनाकाशादय"इतिप्रमेयदीपे ॥८॥ नित्यंदर्शयति ॥ नित्यास्त्विति ॥ "यावद्ब्र ह्मविष्ठितंतावतीवागि"तिश्रुतिः । "केवलंसाक्षिमानेनकालोदेशोपिनांतवान्"इत्यादिवचनानि वेदादीनांव्याप्तत्वे । तन्नित्यत्वेतु "अत्रनित्यत्वंनाम कूटस्थतयाऽऽद्यंतशून्यत्वं । तच्चनित्यावेदाइत्यादिप्रमाणसिद्धं । अत्रवेदाइत्युपलक्षणं । पंचाशद्वर्णानामव्या कृताकाशस्यचतथाभावा"दितितत्वसंख्यानटीकावचनंमानं । अत्रवेदोनाम मातृकारूपपंचाशद्वर्णातिरिक्तःक्रमविशिष्टानंतव

र्णात्मकइत्येकःपक्षः । अत्र पठिततत्वसंख्यानटीकावचनमेवमानं । अपरस्तु बुद्धिनिमित्तकक्रमविशिष्टपंचाशन्मातृकात्मकए
ववेदोनतुपंचाशद्वर्णव्यतिरिक्तइति । अत्रतु क्रमोत्पत्त्यभिधायकानि "क्रमस्यकृतकत्वेपी"त्यादिवचनानिमानं । कूटस्थनित्य
तोक्तिस्तुभूतभविष्यद्वर्तमानैरखिलैरेकप्रकारेणपठ्यमानत्वलक्षणकौटस्थ्यमादायप्रवृत्तेति । अत्रप्राबल्यदौर्बल्यविचारस्तूत्तरत्र
भविष्यति ॥ ९ ॥ ननुवेदवर्णानामानंत्येपिसर्वेषांपंचाशज्जात्यवच्छिन्नत्वाद्वेदानंत्यानुपपत्तिः । यथाकथंचित्पंचाशद्वर्णजाती
यानामेवपरस्परंनानाविधसंश्लेषादिप्रकारेणस्थितानामेववेदत्वेनमितत्वएवपर्यवसानात् । तज्जातीयानामानंत्येपुनःपुनर्वचन

पंचाशतांह्विवर्णानां क्रमाद्योगैःपरस्परं । अनंतानांचवेदानां स्थितिरित्यतिकौतुकं । ईश्वराचिंत्यशक्त्यैव
घटनाकेवलंभवेत् ॥१०॥ मूलवेदश्चोपवेदस्तथावांतरएवच । शाखोपशाखाभेदेन वेदोऽनेकविधोमतः॥११॥

प्रसंगात् द्वितीयपक्षेसुतरामनुपपत्तिः । अतोवेदानामानंत्यानुपपत्तिरित्यतआह ॥ पंचाशतामिति ॥ अतिकौतुकमित्यतःपरं
यद्यपीतिग्राह्यं तथापीतिच । "यत्तुयुक्त्याविरुध्येततदीशकृतमेवही"त्युक्तेरितिभावः ॥ १० ॥ वेदेष्ववांतरविशेषंदर्शयति ॥
मूलवेदइति ॥ अयमाशयः । ऋगादिसंज्ञांविहाय यदासर्वेपिवेदाएकत्वेनैवस्थितास्तदामूलवेदइत्येवनाम । यथोक्तमाथर्वण
भाष्ये । "पंचरात्रमृगाद्याश्च सर्वमेकंपुराऽभवत् । मूलवेदइतिह्याख्या कालेकृतयुगेतदा । नैवक्सामादिनामानि तदावेदस्य
चाभव"न्निति । सचमूलवेदस्त्रेतायुगेप्रविभक्तऋगादिरित्युच्यते "एकोवेदःकृतेह्यासीत्त्रेतायांसत्रिधाऽभव"दित्युक्तेः । सएव

द्वापरेगौतमशापादिनोत्सन्नश्च । तमुत्सन्नंवेदंव्यक्तीकृत्यबादरायणोभगवानैकैकस्माद्दृगादेरेकैकमृगादिकमेकैकदेशेनोद्धृत्य ऋगादिचतुर्वेदानकरोत् । तांश्चपुनश्चतुर्विंशत्याद्यात्मनाव्यभजत् । यथोक्तंतत्वप्रदीपे "ऋग्वेदंचतुर्विंशतिधा यजुर्वेदमेकश तधा सामवेदंसहस्रधा अथर्ववेदंद्वादशधेति" । "ऋचस्सऋचउद्धृत्य ऋग्वेदंकृतवान्प्रभुः । यजूंषिनिगदांश्चैव तथासामानि सामत"इत्यादिभाष्ये ऋग्भाष्येचस्पष्टं । अत्राथर्वणवेदस्यनिगदांतर्भावेणोक्तिः । चतुर्विंशत्यादिभेदेनभगवद्भिर्भक्तशाखासु चावांतरशाखाभेदश्चऋषिभिःप्रणीतः । उक्तंचऋग्भाष्ये । "ऋचश्शाखात्वमापन्नाः शिष्यतच्छिष्यकैरिमा"इति "संक्षेपंकृतवा न्देवःशिष्याश्चतदनुज्ञये"तिच । तथाचाविभक्तोमूलवेदः ( १ ) त्रेतायांविभक्तऋगादिरुपवेदः ( २ ) ऋङ्गदादिरूपेणप्रा गेवविभक्ताद्वेदात् द्वापरेभगवताव्यासेनविभक्तऋग्वेदादिरवांतरवेदः ( ३ ) चतुर्विंशत्यादित्वेनविभक्तःशाखावेदः ( ४ ) तत्रापिऋषिभिःपुनःपुनर्विभक्तोऽवांतरशाखावेद ( ५ ) इतिपंचविधोवेदइतिविवेकः । पुनरन्येपितदवांतरशाखावेदाःसंति । उक्तंचभागवते "व्यदधाद्यज्ञसंतत्यैवेदमेकंचतुर्विधं । ऋग्यजुःसामाथर्वाश्चवेदाश्चत्वारउद्धृताः । तएवमृषयोवेदंस्वंस्वंव्यस्यन्ननेकधा । शिष्यैःप्रशिष्यैस्तच्छिष्यैर्वेदास्तेशाखिनोऽभव"न्निति । केचिदत्र विशिष्टस्यमूलवेदस्यनिःशेषेणचतुर्धाविभागइत्याहुः । तच्चिंत्यं । "चतुर्दशविद्यास्थानानिवेदितव्यानी"तिमूलश्रुतिरीतिवदद्भिराथर्वणभाष्यकारैरवशिष्टांशोमूलवेदोनामास्तीतिसूचनात् । किंच "ऋग्वेदंविज्ञापयति यजुर्वेदंसामवेदमाथर्वणंवेदंचतुर्थंवेदमित्याद्युक्त्वा वाकोवाक्य"मितिच्छंदोगश्रुतौमूलवेदःपृथग्गृह्यते । "वाकोवाक्यं मूलवेद"इतिहितद्भाष्ये। मूलवेदस्यनिश्शेषेणचातुर्विध्ये पृथक्तत्तद्ग्रहणंनस्यात् । तेनजानीमोऽवशि

ष्टोमूलवेदोस्तीति । तत्वप्रदीपिकायांच "प्रतिशाखमित्युक्त्वा पुनःप्रतिवेदमित्युक्तिरविभक्तवेदस्यापिविद्यमानत्वा" दित्युक्तं । वेदःकूटस्थनित्योवा नवा । आद्ये "नहिवयंवेदस्यकूटस्थनित्यतांब्रूमःकिंतु शब्दतोर्थतश्चसर्वदैकप्रकारतामेव । ततश्चक्रमस्याकृत कत्वेपि क्रमविशिष्टवर्णाएववेदो नतुघटादिवदर्थांतरं । क्रमश्चबुद्धिनिमित्तएव नतुस्वतोस्ती" त्यादितत्वनिर्णयटीकाविरोधात् । नापिद्वितीयः । "वेदानांनित्यत्वंनाम कूटस्थतयाऽऽद्यंतशून्यत्वमितितत्वनिर्णयटीकायां, "अत्रनित्यत्वंनाम कूटस्थतयाऽऽद्यंतशून्यत्वं । तच्चवेदानां नित्यावेदाइत्यादिप्रमाणसिद्ध" मितितत्वसंख्यानटीकायांचोक्तत्वद्विरोधादिति । अत्रकेचिदेवंसमाधानमाहुः । नवेदःकूटस्थनित्यः । नचकूटस्थताप्रतिपादकवाक्यविरोधः । भूतभविष्यद्वर्तमानेष्वेकप्रकारेणपठ्यमानत्वरूपानित्यत्वमात्राभिप्रायकत्वात्तद्वाक्यानामिति । अपरेतु कूटस्थनित्यएववेदः ईश्वरबुद्धावसर्वदैकप्रकारेणविपर्यासक्रियमाणत्वात् । तदुक्तं "सर्वज्ञत्वादीश्वरस्यतद्बुद्धौसर्वदाप्रतीयमानत्वा" दिति । नच कौटस्थ्याभावाभिधायकग्रंथविरोधइतिवाच्यं । क्रमोद्विविधः ईश्वरबुद्धिस्थोस्मदादिबुद्धिस्थश्चेति । तत्रेश्वरबुद्ध्युपहितक्रमस्यानादिनित्यत्वेनतद्युक्तत्वविवक्षयाकूटस्थत्वोक्तिः । अतएव "ईशबुद्धिस्थिताःसदे" त्यादिविशेषोक्तिः । अस्मदादीन्प्रतिप्रमापकतोपयोग्यस्मदादिबुद्धिस्थक्रमस्तु बुद्धेरनित्यत्वादेवानित्य उच्चारणादिजन्यश्च । तथाच तद्युक्तत्वविवक्षयावेदस्यकूटस्थत्वाभावोक्तिरितिसंगिरंते । गुरवस्तु भवत्येववेदःकूटस्थनित्यः । ऋचःसामानिजज्ञिरइत्याद्युत्पत्तिवचनान्यभिव्यक्त्यर्थानि । विवक्षिताव्यक्तिरुत्तरत्रवक्ष्यते । उक्तंचगीताभाष्ये "तदुत्पत्तिवचश्चैवभवेद्व्यक्तिमपेक्ष्यत्वि" ति । तत्वनिर्णये "नहिवयंवेदस्यकूटस्थनित्यतांब्रूम" इत्यादिकूटस्थत्वाद्यभावाभिधायकवचनं व्यक्ति

लक्षणविशेषवत्त्वाभिप्रायेणवाऽभ्युपगमवादेनवा प्रवृत्तमिति नविरोधः । अन्यथा "किंतुशब्दतोऽर्थतश्चैकप्रकारतामेवे"त्युत्तर ग्रंथविरोधात् । अर्थतएकप्रकारत्वस्य पुराणादिसाधारणत्वात् । शब्दतएकप्रकारत्वंच नवर्णपदविवक्षया । तस्यापिपुराणादि तुल्यत्वेनापौरुषेयतासाधकतानुपपत्तेः । "अतोवेदस्यनियतविशिष्टानुपूर्वीकत्वेनार्थावबोधनशक्तयाविर्भावोव्यक्ति"रितिवियद धिकरणीयसुधानुसारेण नित्यक्रमवत्पदसंदर्भात्मकत्वमेवास्थेयं । तथाच कथंकूटस्थत्वाभावः । ननु क्रमस्याजन्यत्वेपि सर्वदै कप्रकारकसादृश्यसद्भावेन नियतक्रमत्वोक्तिःसंभवतीतिचेन्न । तत्वनिर्णये"तदेवेदंवाक्यमितिप्रत्यभिज्ञाविरोधा"दिति तट्टी कायांच"यद्वर्णक्रमाद्युपेतंपूर्वंमयाश्रुतंवाक्यं तदेव तद्वर्णक्रमाद्युपेतमेवेदंश्रूयमाणंवाक्यमितिप्रत्यभिज्ञाना"दित्युक्तेः । प्रत्यभि ज्ञेयं सादृश्यविषयतयासावकाशेतिचेन्न । नच "सादृश्यात्प्रत्यभिज्ञा भ्रांतिरितिवाच्य"मित्युत्तरत्रतन्निषेधात् । "तत्क्रमात्मको वेदश्चनित्यएवेतिसिद्ध"मित्युपसंहाराच्च । अतो नहिवयमित्यादि सावकाशमंगीकार्यमिति । क्रमश्चबुद्धिनिमित्तएवेत्यादिग्रंथ जातस्याप्यभिव्यक्त्यादिरूपैवगतिरनुसरणीया । अन्यथाऽनुपपत्तेः । तथाहि । बौद्धक्रमइतिकोर्थः किंबुद्धौजातःक्रमइति अथवा बुद्धीनांक्रमिकत्वात्तदुपाधिकःक्रमइति यद्वा बुद्ध्याविषयीकृतइति । नाद्यः । क्रमनित्यतायाउपपादितत्वेन तद्विरो धात् । किंच बुद्धिजन्यत्वे बुद्धौक्रमोजातइत्येवव्यपदेशःस्यान्नतुबुद्धिस्थइति । बुद्ध्यादृष्टोहिबुद्धिस्थइत्युच्यते । उक्तंचतत्वनि र्णयटीकायां । "दर्शनंचपूर्वसिद्धस्यभवति । नहि योयत्कर्तासतत्पश्यतीतियुज्यत"इति। नापिद्वितीयः । ईश्वरबुद्धेर्नित्यत्वेन क्रमानुपपत्तेः । नित्यत्वेपिबुद्धेर्व्यक्त्यपेक्षयाक्रमोपपत्तिरितिचेन्न । "नित्यव्यक्ताहरेर्मतिः नित्यव्यक्ताहरेर्गुणा"इत्युक्तेर्बुद्धेर्नित्य

व्यक्तत्वेनक्रमिकव्यक्त्ययोगात् । नन्वीशबुद्धेर्नित्यव्यक्तत्वेपि सृष्ट्यादौतत्तद्वर्णविषयकबुद्धिगतस्यक्रमप्रयोजकाकारस्यशक्ति व्यक्त्यंगीकारेणबुद्ध्युपाधिकक्रमोपपत्तिरितिचेत्तत्रवक्तव्यं ।बुद्ध्युपाधिकःक्रमइत्यत्र किंबुद्ध्यासंपादितइति उतेशबुद्ध्याक्रमोव्य क्तइति। आद्येप्रथमपक्षोक्तदोषानतिवृत्तिः। द्वितीयेक्रमस्यनित्यतासिद्धिः। बुद्ध्याविषयीकृतइतितृतीयपक्षेपि किमीश्वरबुद्धिर विद्यमानंक्रमंविषयीकरोति उतविद्यमानं। नाद्यः। भ्रांतित्वापत्तेः । अविद्यमानंक्रमंस्वयंसंपाद्यविषयीकरोतीतितुनिरस्तं। अतोजीवानांयोग्यतातारतम्यक्रमवद्देशकालबुद्ध्याद्युपाधिरहितःस्वाभाविकःक्रमएवास्त्येयः। तंचेश्वरबुद्धिर्विषयीकरोतीत्युप पद्यते। तर्हि तद्बुद्धौसर्वदाप्रतीयमानत्वादितिविशिष्योक्तिःकुतइतिचेत् वेदानांपौरुषेयत्वमतदूषणायैतन्नित्यतासाधनार्थंत स्योपन्यासोनतुवेदेक्रमसंपादनार्थमित्यवेहि। ननु“नित्यत्वान्नक्रमःस्वत”इतितंत्रसारे वर्णानांस्वतःक्रमंनिषिध्य“व्यक्तिक्रमंब्रह्म बुद्धावपेक्ष्यक्रमउच्यत”इतीश्वरबुद्धिस्थक्रमएवेत्युच्यते। अतःस्वाभाविकक्रमांगीकारेतद्विरोधइतिचेन्नैवं। स्वतःक्रमोनेत्यस्य देशतःकालतोवाक्रमोनेत्यर्थांगीकारात् । अन्यथा नित्यत्वादितिहेतुकथनमनुपपन्नंस्यात् । “नित्यत्वात्सर्वगतत्वाच्चस्वतः क्रमशून्य”इतितत्वनिर्णयटीकोक्तेश्च। एतेन नस्वतोस्तीतितत्वनिर्णयटीकाविरोधोप्यपास्तः। तथाच स्वाभाविकक्रमस्तंत्रसारे ननिषिध्यते येनतद्विरोधः। किंतु कालिकदैशिकक्रमएव। नापीश्वरबुद्धिस्थक्रमत्वोक्त्ययोगः। तत्रहि प्रणवादिमंत्रोत्पन्नत्व मष्टाक्षरादिमंत्राणामुच्यते। तत्क्रमानुपपत्तिमाशंक्य प्रणवादिव्याख्यानतयाऽष्टाक्षरादिमंत्राणामीशबुद्धिस्थत्वमेव तदुत्पन्नत्व मितिप्रतिपाद्यतइति नतद्विरोधइति। क्रमविशिष्टवेदनित्यत्वानंगीकारे तत्वसंख्यानटीकाविरोधः।तत्रकूटस्थतयाऽऽद्यंतशून्य

त्वरूपनित्यत्वंवेदानामुक्त्वा वेदाइत्युपलक्षणं पंचाशद्वर्णानामव्याकृताकाशस्यचेतिग्राह्यमिति पंचाशद्वर्णानांपृथगभिधानात् । क्रमनित्यत्वाभावे वर्णव्यतिरेकेणवेदोपलक्षणकरणानुपपत्तिः । तद्वर्णक्रमाद्युपेतमेवमयाश्रुतमितिश्रुत्यभिज्ञयाचतत्वनिर्णये नित्यत्वसाधनात् । "तत्क्रमात्मकोवेदश्चनित्यएवेतिसिद्धं । तत्क्रमैरेवतैर्वर्णैस्तैःस्वरैरेवे"त्यादिषुस्पष्टंक्रमनित्यताभिधानाच्च । पद्मनाभतीर्थश्रीमच्चरणैःसन्न्यायरत्नावल्यांतथैवचेत्यतद्विवरणतया"तत्क्रमेणैवतैर्वर्णैस्तैस्स्वरैरेवनान्यथे"त्यादि येपूर्वकल्पेवेदाः स्थिताः येसंहितादिपदादिपूदात्तादिस्वराःस्थिताः येचतत्रवर्णाःस्थिताः यश्चतत्रक्रमःस्थितः तएव एतत्कल्पादौविष्णुनोदीर्यंत इत्यादिना वर्णादिसाम्येन क्रमनित्यता प्रतिपाद्यतइति । किंच"संततंचिंतयेत्कंठं भास्वत्कौस्तुभभासकं । वैकुंठस्याखिलावेदा उद्गीर्यंतेऽनिशंयत"इतिद्वादशस्तोत्रे प्रतिक्षणमपि यावद्वेदजातस्योच्चारणोक्तेः क्रमरहितवेदाभावात्क्रमनित्यत्वंज्ञायते । नच प्रलयेतदभावइतिवाच्यं । अनिशमित्युक्तिविरोधात् । अत्रानिशमित्यस्यक्षणतदर्धतदर्धादिक्रमेणापर्यवसितकालावयवेष्वेकै कत्रापिसमग्रवेदाउच्चार्यंतइतितदर्थः । तदुक्तंबृहद्भाष्ये"सकृन्निगदमात्रेणगृहीतंब्रह्मणापुरा । तेनचानन्तशक्तित्वाद्युगपत्समुदी रित"मिति । ननुकथमेतदुपपद्यते प्रतिक्षणंवेदोच्चारणस्यप्रयोजनाभावात् । प्रयोजनंनतावत्स्वस्य । नित्यपूर्णत्वात् । नापिप रस्य । प्रतिक्षणमनंतवेदोच्चारणेप्रयोजनानुपलंभात् । द्वित्रिवारमुपदेशेनैवविशेषार्थज्ञानोपपत्तेः । क्षणांशांशकालावयवेषुपृथ गुपदेशस्यवैयर्थ्यादितिचेत्सत्यं । केवलानंदोद्रेकादेवैवमुच्चरतीत्यभ्युपगमात् । दृश्यतेचलोकेआनंदोद्रेकान्नृत्तगानादिप्र वृत्तिः । किंचनित्यसुव्यक्तपरिपूर्णानंदोपिहरिरतीतानागतयावच्छुभविषयभोगंप्रतिक्षणंकरोतीतिप्रमितं । तेनचाचिंत्यशक्त्या

सुखसद्भावः "आगमिष्यत्सुखंचापि तच्चास्त्येवसदापितु । तथाप्यचिंत्यशक्तित्वाज्जातंसुखमतीवचे" तिगीताभाष्योक्तरीत्यांऽगीक्रियते । तथाचस्वभोगार्थमेवसूक्ष्मसूक्ष्मकालेसमग्रवेदोच्चारणमितियुज्यते । गायनंसंगीतश्रवणंच यथाभोगस्तथा स्वमहिमोच्चारणतच्छ्रवणयोरपिभोगत्वात् । नह्येकवारंभोगमात्रेणालं । राजादौपुनःपुनःस्वमहिमश्रवणभोगदर्शनात् । "अहमर्कमयश्चाग्नि त्रमर्च" इत्युक्त्याप्रतिक्षणंस्वात्मार्चनवत्स्वस्तुत्युपपत्तेरितिसंक्षेपः । तदेतदभिप्रेत्योक्तं स्वाभाविकेति ॥ अत्र पंचाशद्वर्णातिरिक्त वेदांगीकारे वैदिकपदानामेवसर्वत्रोपयोगितया पंचाशद्वर्णवैयर्थ्यमितिचेन्न । अजादिभगवद्रूपप्रतिपादकतयाऽभ्यासकृत भाषोपयोगित्वाच्च । ननु ध्वनिभिःश्रोत्रदेशेव्यक्तवर्णानांखल्वर्थावबोधकत्वं । श्रोत्रदेशेच तदवच्छिन्नोवर्णैकदेशएवव्य

वेदःसर्वोपिनित्यश्च स्वरवर्णपदात्मकः । स्वाभाविकक्रमादेस्तु व्यक्तिरुच्चारणाद्भवेत् ॥ १२ ॥

ज्यतेनतुव्याप्तःसकलोयंवर्णः । तथाच गकारैकदेशस्यव्यक्तस्य कथंविशिष्टयावद्गकारार्थप्रत्यायकत्वमितिचेत् उच्यते । यथा घटपर्वतादिपूर्वभागेस्थितस्य चक्षुपातत्पूर्वभागमात्रसंबंधेपि घटोऽयं पर्वतोऽयमित्यादिसमग्रघटादिप्रकारक ज्ञानमेवजायते नतु घटाद्येकदेशभूतकपालादिप्रकारकज्ञानं । दृष्टभागेन भागांतरानुमानंतत्रेतिचेन्न । लिंगाद्य नुसंधानाभावेपि झडित्येवपरिज्ञानात् । अन्यथा पुनःपश्चाद्भागंगतस्यतद्भागदर्शने पूर्वदृष्टएवायंघटादिरितिप्रत्य भिज्ञा नस्यात् । तद्वदीशशक्त्यैवश्रोत्रेणगृहीतैकदेशत्वेपिवर्णस्यसामग्र्येणज्ञातत्वोपपत्तेरर्थावबोधकत्वमुपपद्यतएवेति । किंचैकैकक्षणस्यापि यावद्देशव्याप्तिरस्ति । तत्रभिन्नदेशगतानंततत्तत्क्षणावयवासंबंधेपि यथासमग्रक्षणलवादिकालनि

मित्तककार्यकरत्वं तद्वदिहाप्युपपत्तिरिति । अत्रवेदे "भगवद्दृष्टमेवान्यैर्ब्रह्माद्यैर्दृश्यतेयदि । ऋषिभेदस्तुतत्रस्या"दित्युक्त्या ऋषिभेदोऽवगंतव्यः । वेदद्रष्टृलक्षणंच "विंशल्लक्षणतोऽनून" इत्यादावभिहितं । तेषांमध्येविंशल्लक्षणतोऽन्यूनलक्षणवानित्यादि तट्टीकारीत्या विंशल्लक्षणेभ्योन्यूनलक्षणश्चेद्द्वादशैकादशलक्षणवांश्चेन्नवेदद्रष्टा किंतु द्वात्रिंशन्महापुरुषलक्षणेष्वेकोनत्रिंशल्लक्षणन्यूनोपित्रयोदशलक्षणवानपिभवत्येववेदद्रष्टेति ॥ ११ ॥ १२ ॥ अनित्यंनिर्दिशति ॥ असंसृष्टमिति ॥ विज्ञानतत्वस्यमहत्तत्वएवांतर्भावादनुक्तिः । अत्रबुद्धितत्वस्यमनस्तत्वेंतर्भावविवक्षायांनित्यानित्यांतर्भूततयाऽव्यक्ततत्वेनसहचतुर्विंशतित्वंज्ञेयं

असंसृष्टंचसंसृष्टमितिद्वेधाह्यनित्यकं । असंसृष्टंमहत्तत्वमहंकारस्तथैवच ॥ बुद्धिर्मनःखानिदश मात्रा
भूतानिपंचच ॥ १३ ॥ संसृष्टमंडंतद्गंच समस्तंसंप्रकीर्तितं । पूर्वपूर्वंकारणंस्यात्प्रकृत्यंशैश्चसंयुतं ॥ १४ ॥
महदादिषुतत्वेषु त्वंडाद्यंतात्विकंस्मृतं । सूक्ष्माणिमहदादीनि स्थूलान्यंडादिकानिच ॥ १५ ॥

॥ १३ ॥ नन्वेषांचतुर्विंशतितत्वानामसंसृष्टत्वंनाम यद्येकदेशेनोत्पत्तिस्तर्ह्यनुत्पन्नस्यासत्त्वादुत्पन्नमेवतत्वं । तच्चसंसृष्टमेवेति कथंद्वैविध्यं । मैवं । प्रलयेसूक्ष्मरूपेणसतोमहत्तत्वस्यगुणत्रयांशैरुपचयः । तथैवसतोऽहंकारतत्वस्य महदंशैरुपचयइत्यादिप्रकारेणतत्वानामुत्पत्तेरीषदुपचयमात्रत्वादसंसृष्टत्वोपपत्तेरित्याशयेनाह ॥ पूर्वपूर्वमिति ॥ १४ ॥ अंडतदंतर्गतानितु तत्वेभ्यःस्वरूपतएवोत्पन्नत्वेनसंसृष्टानीत्याशयवानाह ॥ अंडाद्यमिति ॥ असंसृष्टेभ्यस्तत्वेभ्यःसम्यगुत्पन्नं तात्विकमित्यर्थः । स्पष्ट

मेतत्तत्त्वविवेकटीकायांसूक्ष्मरूपेणसतांमहदादीनांप्रकृत्यंशैरुपचयमात्रंक्रियतइति तान्यसंसृष्टानि । नचैवमंडांतर्गतानीति तानिसंसृष्टानीति । वियदधिकरणसुधायांच महदादिसूक्ष्मरूपताच श्रुत्यादिसिद्धेति । महदादीनांचोपचयावाप्तिर्विशेषलाभ इतिच । महदादीनामसंसृष्टत्वमंडादीनांसंसृष्टत्वंचैकादशतात्पर्येणोपपादयति ॥ सूक्ष्माणीति ॥ अप्रतिघानीत्यर्थः । स्थूलानि सप्रतिघानि । तथाचाल्पोपचयवत्त्वादेवसूक्ष्मत्वमित्युक्त्याऽसंसृष्टत्वंज्ञायते । अंडादिकंतु स्वरूपतएवजन्यमिति

व्यासश्चैवमहान्कालोव्यासाचप्रकृतिर्मता । पुराणाद्याइतिह्येव नित्यानित्यंत्रिधेष्यते ॥ १६ ॥
कालांशायावदेवस्युस्त्रुटिक्षणलवादिकाः । तदंशांशास्तदंशाश्चेत्यपर्यवसिताःपुनः ॥ १७ ॥
सर्वेतेजनिमंतःस्युः सर्वेव्यासामहाद्भुताः । कालप्रवाहएवैको नित्यएवंमहाद्भुतः ॥ १८ ॥
तदुपादानभूतास्तु(तत्सूक्ष्माएवनान्यथा)तएवस्युर्नचापरः । तएवपरिवर्तंतेतत्तत्कार्यांतरेपुनः १९.

नसूक्ष्ममिति ॥ १५ ॥ नित्यानित्यंदर्शयति ॥ व्यासश्चेति ॥ देशःकालोपिनांतवानित्युक्तं । यद्देशतोऽनंतंतन्नित्यमेवप्रकृत्याद्यन्यदपीत्यादिनागीताभाष्येप्रकृतेर्व्याप्तिरुपपादिता । विवक्षाविशेषमाश्रित्य तत्वविवेके प्रकृतिनित्यतोक्तिः । तत्वसंख्यानेतु विवक्षांतरेण नित्यानित्यतोक्तिरिति ॥ १६ ॥ कालस्यनित्यानित्यत्वमुपपादयति ॥ कालांशाइति ॥ १७ ॥ १८ ॥ ननु कालांशानामुत्पत्तिरुक्ता नोपादानंविनाकेवलोत्पत्तिः । प्रकृतेर्किमुपादानमित्यतआह ॥ तदुपादानेति ॥ उक्तंचवैशेषिकपरी

क्षासुधायां । "अनित्यत्वेकारणंवाच्यमितिचेत्सत्यं । उपादानंप्रकृतिरेवे"ति । नन्वेवंजगदुपादानभूतप्रकृतेःकालावयवोपादानत्वेसतिसर्वेषामपिकालावयवानांप्रत्येकंव्याप्तत्वेनव्याप्तकृत्स्नप्रकृतेरेवकालोपादानत्वंवक्तव्यमितिकालस्यचप्रवाहतःसदातनत्वेनसदाचप्रकृतेरुपादेयकालत्वेनैवावस्थानात्कालंविनापृथक्प्रकृत्यभावापत्तिःस्यात् । अपिच सृष्टिकालेसर्वस्याःप्रकृतेर्व्याप्तकालोपादानतयैवावस्थितत्वेनजगदुपादानत्वासंभवाज्जगदुदयानुपपत्तिश्चेतिचेदुच्यते । जगदुपादानप्रकृत्यतिरिक्तःकालद्रव्यविशेषएव कालोपादानतयापरिवर्तते । नतुत्रिगुणात्मिकाप्रकृतिः । तस्यचोपादानतया प्रकर्षेणकरोतीतिव्युत्पत्त्या प्रकृतिनामत्वोक्तेर्नसुधाविरोधः । कालस्यातिविलक्षणत्वेनस्वगतत्वेनचनचोद्यांतरावकाशः । भवतुवा त्रिगुणात्मिकाप्रकृतिरे

तेषांविलक्षणत्वेपि प्रकृतित्वंविकारतः । नित्याकाशस्तथाकालो महांतौसर्वकारकौ ॥ २० ॥

वकालोपादानं तथापिनोक्तदोषः । यथाहि दर्पणादेर्दर्पणत्वाद्यनपायेनैवप्रतिबिंबोपादानत्वं । तदादर्पणप्रतिबिंबयोरुभयोः सद्भावः । यथाचैकस्यैवदर्पणस्ययुगपदनेकविधमुखवृक्षार्कमंडलादिविचित्रप्रतिबिंबोपादानता ईशशक्त्यादृश्यते । तथात्रापीशशक्त्याप्रकृतित्वानपायेनैव कालप्रवाहिणांमहदादीनांचोपादानत्वोपपत्तेः । ननु प्रकृतेःकालोपादानत्वेप्रलयकालेपिविकारवती सा स्यात् । स्यान्नामनकोपिदोषः । उक्तंचसमयपादांतोदाहृतपंचरात्रवाक्ये प्रकृतेर्निर्विकारित्वं । "अचेतनापराधीना नित्यासततविक्रिये"ति । उपादानोपादेययोरभेदान्नानुपपत्तिः । महाद्भुतइत्यनेन एकैकक्षणानंतभागेपिततोपिसूक्ष्मसूक्ष्मतरसूक्ष्मतमत्वादिप्रकारकयावदव्याकृतव्याप्तानंतांशवत्त्वेनसकलजडेष्वतिशयमभिप्रैति ॥ १९ ॥ सर्वकारकाविति ॥

सर्वोत्पत्तिमन्निमित्तकारणभूतावित्यर्थः ॥ २० ॥ कालदेशपरमाण्वोरपर्यवसितानंतावयवोपेतत्वेऽनुव्याख्यानंपठति ॥ अपर्यवसितिरिति ॥ देशपरमाणौदैशिकांशाः कालपरमाणौकालिकांशाअनंताः । उभयत्रापि तादृशांशेषुपुनरनंतांशाः । तदेकैकांशेप्येवमित्यपर्यवसितिः दैशिकाणांकालिकाणां साक्षिणादृश्यते । इयांस्तुविशेषः । देशपरमाण्वंशाःसर्वेनित्याः । अल्पाल्पतराल्पतमादित्वेनापर्यवसितांशोपेताः । कालांशास्तुसर्वेऽनित्याः । कालतःसूक्ष्मसूक्ष्मतरसूक्ष्मतमादिरूपेणापर्यवसितांशोपेताइति ॥ २१ ॥ ननु कालःकदास्ति देशःकुत्रास्ति स्वस्मिन्नेवेतिब्रूमः । "कालस्यकालगत्वेन नविरोधोस्तिकश्चने"त्यनु

अपर्यवसितिश्चाण्वोर्दृश्यतेसाक्षिणाद्वयोः । अतोनाणुत्वविश्रांतिर्महत्त्वस्यचकचित् ॥२१॥

ईशोदेशश्चकालश्च स्वगताएवसर्वदा । ईशाधीनौचतौनित्यं तदाधारौचतद्गतौ ॥ २२ ॥

सत्वंरजस्तमइति त्रिविधाप्रकृतिर्मता । सूक्ष्मरूपेणनित्यापि विकारित्वादनित्यका ॥ २३ ॥

व्याख्यानात् । तर्हिकालादेः स्वाधारत्वं स्वस्कंधारोहणमिवविरुद्धमित्यतआह ॥ ईशइति ॥ स्वगताइत्युक्त्याप्राप्तां देशकालयोःस्वातंत्र्यशंकांवारयति ॥ ईशाधीनाविति ॥ २२ ॥ प्रकृतेर्नित्यानित्यत्वमुपपादयति ॥ सत्वमित्यादिना ॥ अत्रायं निष्कर्षः । एकैवहिप्रकृतिः । अजामेकामित्याद्युक्तेः । एकत्वेपिनायःपिंडादिनिबिडपदार्थवदप्रतीतांतर्भेदवदेकत्वं । तादृशंत्वव्याकृताकाशादेरेव । प्रकृतेरेकत्वंतु यथा वालुकापिंडस्यैकत्वेपिधान्यसमुदायादिवैलक्षण्येनघटादिवदेकसंस्थानत्वेपि

वालुकानामवांतरभिन्नानांसंश्लेषविश्लेषवत्त्वेनैकएवायंवालुकापिंडइतिसमुदायिवैलक्षण्येनप्रत्यक्षसिद्धैकत्वाधिकरणत्वेपि स्थूल सूक्ष्मादितयाऽवस्थितवालुकानांभेदः प्रतीयते एवमंतर्भेदघटितमेव। अतएवशास्त्रे प्रकृतयइतिक्वचिद्बहुवचनं प्रकृतिरितिक्वचिदेकवचनं अजामेकामित्याद्येकत्वोक्तिश्चोपपद्यते। तथाचैवमेकैवप्रकृतिः सर्वत्रव्याप्ता। "महांतंचसमावृत्य प्रधानंसमवस्थितं। अनंतस्यनतस्यांतः संख्यानंचापिविद्यत" इत्युक्तेः ॥२३॥ तत्रचप्रलयकालेमहदादितत्वविनाशेतत्तत्सूक्ष्माण्यव्यक्ततामापद्यंते। तदुपचायकगुणत्रयांशभूतमहदाद्युपादानभागविशेषास्तुगुणत्रयेप्रविशंति। गुणत्रयेपियद्रजस्तत्सत्वेतमसिचामिश्रीभवति। नतदासत्वादिनाम। प्रकृतिरेवहिसोच्यते। विस्तृतंचैतत्तृतीयस्कंधेएकादशाध्यायतात्पर्ये। इयंसाम्यावस्थाप्रलयः। उक्तंच

एतत्साम्यंतुविलयो वैषम्यंसृष्टिरुच्यते ॥ २४ ॥

"अव्यक्तस्याप्यन्यथाभावाख्योविनाशोस्ती"तिगीताभाष्ये। "अन्यथाभावो वैषम्यपरित्यागेनसाम्यावस्थापत्ति"रितिप्रमेयदीपिकायां। अथ सृष्टिकालेतु प्रकृतेःक्षोभकंरूपंदेवंनारायणाभिधंयत्तेन प्रकृतेःक्षोभेकृतेसमस्तप्रकृतौकिंचिद्विकारेणपूर्वमेकीभूतांशविशेषस्यविभागे ततःकिंचित्स्थूलत्वेनोपचयरूपविकारेसति विभक्तभागत्रयस्य सत्वंरजस्तमइतिनाम। एवंप्रकृतेरेकदेशतोगुणत्रयात्मनाविकृतत्वेन समग्रप्रकृतेःक्षोभविशेषसद्भावेनच "विकारोऽव्यक्तजन्माहि प्रकृतिश्चजडत्वात्परिणामिनी"तिगीताभाष्ये, अव्यक्तस्याजन्मवतोविकारोजनिरुच्यतइत्येकादशतात्पर्ये, प्रधानंविकृतेरपी"त्यनुव्याख्यानादौच प्रकृतिजनिव्यवहारः। प्रकृतिविकारतयातज्जन्यत्वमपेक्ष्य। "त्रयःप्रकृतिजागुणाः, ससर्जभगवानादौ त्रीन्गुणान्प्रकृतेःपरः।" इत्यादौ

गुणत्रयस्यप्रकृतिकार्यत्वव्यपदेशः । वस्तुतोव्याप्तमूलप्रकृतेरपि गुणत्रयसूक्ष्मभागरूपतया "त्रिगुणात्मकंप्रधानंचरजस्सत्वं तमस्तथेति"जन्यसत्वरजस्तमसांसकाशात्पृथक्प्रधानस्यापित्रिगुणात्मकत्वोक्तिश्चोपपद्यते । एतद्गुणवैषम्यंसृष्टिरित्युच्यते । तदवांतरविशेषस्तु"तमसोरजस्तुद्विगुणं रजसःसत्वमेवचे"त्यादितृतीयतात्पर्येद्रष्टव्यइति ॥ २४ ॥ प्रकृतेर्व्याप्तत्वंकार्यकारणात्मना । कार्यावस्थानप्रदेशेकार्यमेववर्तते नकारणप्रकृतिः । सातुतदन्यदेशइत्येवं क्वचित्कार्यं क्वचित्कारणमितिव्याप्तिरितिभ्रमंवारयति ॥ मूलात्त्विति ॥ "कारणेषुस्थितंकार्यं व्याप्तंकार्येपुकारण"मितिगीतातात्पर्ये । ननु कार्यस्यपरिमितपरिमाणस्यमहदादेः कथंकारणप्रकृत्यादाववस्थानमितिचेत् क्लृप्तपरिमाणानामपिमहदादीनां सूक्ष्मांशविशेषैःस्वकारणेषु

मूलातुप्रकृतिःसर्वकार्येषुविततासदा । हरेरचिंत्यशक्त्यैव घटनेसर्वमेवच ॥ २५ ॥

त्रिगुणेषु मूलप्रकृतावपि । स्वकार्येष्वहंकारादिषुचावस्थानंसंभवति । "अधश्चोर्ध्वंप्रसृतास्तस्यशाखा"इत्यस्यभाष्येअव्यक्तेच सूक्ष्मरूपेणसंतीत्युक्तेः । "अधश्चमूलान्यनुसंततानि"इत्यत्रमूलानिभगवद्रूपादीनीतिभाष्ये । आदिपदेनजडाजडप्रकृत्योस्सत्वादीनांचग्रहणमितिप्रमेयदीपिकायामुक्तेश्च । महदादिसूक्ष्मांशानांप्रकृतावस्थानंचनसर्वत्र किंतुक्वचित्प्रदेशएव । अतएव स्थितमित्येवोक्तं । अन्यत्रतुव्याप्तमिति । ननुगुणत्रयमहदादीनां"अवग्नीरनभोऽहंकृन्महत्तत्वगुणत्रयैः । क्रमाद्दशोत्तरै"

रितिनिर्णये, "तमसोरजस्तुद्विगुणं"इत्यादितृतीयतात्पर्यादौचपरिमितत्वावगमात्कथंमितस्योपादानद्रव्यस्यानंतजगदुपादा

नत्वं । नचनानंत्यंजगतः । "अनंतजनसंकीर्णाः स्थूलाअपिहिसंस्थिताः । अनंताराशयोनंताअनंतैर्जंतुभिर्वृता" इत्यादिषुस्थूलशरीराणामनंतानंतानांप्रतीयमानत्वात् । तत्तद्भोग्यानामप्यनंतत्वात् । किंच व्याप्तायाःप्रकृतेःकिंसामस्त्येनैवकारणत्वमुतैकदेशेन । आद्येजगदतिरेकेणप्रकृत्यवस्थानायोगः । द्वितीये व्याप्तैकद्रव्यस्यैकदेशेप्रवृत्त्यनुपपत्तिः । एकदेशेनकार्यतापत्तौतत्रप्रकृत्यभावात्प्रकृतेर्व्याप्त्ययोगइतिचेन्न । मितकारणद्रव्यस्याप्यमितकार्योपादानत्वं व्याप्तस्यापिव्याप्त्यविरोधेनैकदेशेनकार्यजनकत्वंचेत्यादिसर्वमीश्वराचिंत्यशक्त्यैवोपपद्यते । अतएवहिसुधायां परिमितस्यहिकारणत्वेसार्वत्रिककार्यानुत्पत्तिमभिधाय अपरिमितस्यकारणत्वेकृत्स्नैकदेशविकल्पानुपपत्तिरिति निरीश्वरसांख्यमतेदूषणमभिधायास्माकंत्वीश्वरशक्त्यै

पुराणादीनिजन्यानि विनाशरहितानिच । कल्पांतरपुराणादि समार्थान्यखिलान्यपि ॥ २६ ॥

वोपपद्यतइत्यचिंत्यशक्त्यैव शंकासमाधानमभिहितमितिसर्वंसमंजसं । केचित्तु उपादानद्रव्यस्याप्यानंत्यं । तथापीशाचिंत्यशक्त्याऽमितदेशावस्थानेन तमसोरजस्तुद्विगुणं, क्रमाद्दशोत्तरैरित्याद्युपपत्तिरित्याहुः ॥ तदेतदभिप्रेत्योक्तं हरेरचिंत्येति ॥ २५ ॥ पुराणादेर्नित्यानित्यत्वमुपपादयति ॥ पुराणादीनीति ॥ अत्रपुराणादिपदेनवेदानुसारीण्येवोच्यंते । अन्येषामुत्प्रेक्षादिमूलत्वेनार्थव्यत्यासस्यापिभावादितितत्वनिर्णयटीकायां । नच कपिलादयोहिपूर्वैःप्रणीतानिशास्त्राणि कालबलादुत्सन्नानि तपःप्रभावादिनावगम्य प्रबंधांतररचनयाप्रवर्तयंतीति सुधायांदुर्दर्शनानामप्येकप्रकारेणार्थवत्त्वस्याभिधानात्तद्विरोध

इतिवाच्यं । अनादिकालादारभ्यापितत्तद्दुर्वाद्युत्प्रेक्षितार्थस्यैवपश्चात्तनैरवगम्यतइत्यादितोप्यौत्प्रेक्षिकार्थस्यैवप्रवाहतःप्रवृत्तत्वाभ्युपगमात् । उत्प्रेक्षायांचार्थव्यत्यासोपिभवति । अतएकप्रकारत्वेप्यर्थविशेषेषुव्यत्यासइत्युपपत्तेरिति । अतः"अनादिकालतोवृत्ताः समयाहिप्रवाहत"इत्यादिविरोधोनिरस्तः । तत्रसर्वप्रकारेणार्थतएकप्रकारत्वाभावात्प्रायिकत्वेनतदुक्त्युपपत्तेरितिज्ञेयं । उक्तंचवेदानुसारिपुराणादीनांनियमेनार्थतएकप्रकारत्वं । तदर्थाःपूर्वसर्गवदिति, पुराणानितदर्थानीतिच तत्वनिर्णये, इतिहासादिरर्थतइतिबृहद्भाष्येच ॥ २६ ॥ ननु सर्वपुराणानामेकार्थत्वे उत्तरोत्तरपुराणानांनिरधिकारिकत्वमापद्येत । तदर्थानांपूर्वपुराणैरेवज्ञातत्वात् । अर्थीह्यधिक्रियते । नचाद्यकल्पीयसमग्रार्थस्याज्ञातत्वादस्त्यर्थीतेतिवाच्यं ।

एकस्मिन्ब्रह्मकल्पेतु दिनकल्पव्यपेक्षया । पूर्वपूर्वपुराणेभ्यो ह्यर्थाधिक्यंविदुर्बुधाः ॥ २७ ॥

तर्हितदातावदर्थज्ञातुरधिकारिणोऽभावेनतावदर्थकग्रंथप्रणयनायोगइत्यतआह ॥ एकस्मिन्निति ॥ सर्वब्रह्मकल्पसंबंधिपुराणानांतत्तद्दिनेषुतथैवेतिसमानार्थकत्वं । एकस्मिंस्तुब्रह्मकल्पेयानिषट्त्रिंशत्सहस्रदिनानि तत्संबंधिपुराणानांपूर्वपूर्वापेक्षयोत्तरोत्तराणामर्थाधिक्यमेव । अतोदेवादिभिःप्रथमदिनादिपुराणार्थस्यसमग्रस्यज्ञातत्वेपिद्वितीयादिकल्पीयानामर्थाधिक्येनतत्रजिज्ञासासद्भावादधिकारोपपत्तेः । तथापूर्वब्रह्मकल्पीयपुराणसमानार्थकत्वेप्युत्तरब्रह्मकल्पीयपुराणानांननिरधिकारिकत्वापत्तिः । प्रतिब्रह्मकल्पेषुदेवादीनामन्यान्यत्वादिति । अतः साधिकारिकत्वं समानार्थकत्वंच नविरुध्यतइति ॥ २७ ॥

नन्वनंतब्रह्मकल्पीयानंतपुराणानांसमानार्थकत्वेतदानंत्यंनोपपद्यते । एकैकार्थप्रतिपादकपदानांमितत्वेन जन्माद्यस्ययतः सृष्ट्याद्यस्ययतः सर्गाद्यस्ययतः जन्मप्रभृतिमतः अस्ययस्मादुत्पत्तिमुख्यं यस्माज्जन्मादीत्यादिप्रकारेणक्रमव्युत्क्रमादिरूपेण पदकदंबकसंबंधपरिवर्तनेनापि भेदकानांमितत्वेन ग्रंथानंत्यानुपपत्तेरित्यतः ईशाचिंत्यशक्त्यैवोपपद्यतइत्याशयेनाह ॥ ऐकार्थ्येपीति ॥ ननुवेदवत्पुराणादेरपीशबुद्धिगतत्वयुक्त्यानित्यत्वंवक्तुंशक्यतइतिचेत् कोनेत्याह । अतएवमुक्तैरपिपठ्यते । श्रूयतेहि "ब्रह्मात्वोवदतिजातविद्या"मित्यादौ । एतदेवहिपुराणादीनांनित्यानित्यत्वं यदुत्पत्तिमत्त्वेसत्यविनाशित्वं । तर्हिरचनातःपूर्वमपीशबुद्धौभावादनादित्वमपिस्यादितिनवाच्यं । ईश्वरेणवर्तमानतयासर्वदानुभूयमानत्वस्यैवानादिभाव

ऐकार्थ्येपिपुराणानामनंतत्वंमहाद्भुतं ॥ २८ ॥ पूर्वमुक्तपदार्थायेसर्वेतेप्यशिनांशकाः ।

प्रयोजकत्वात् । कृतेःपूर्ववर्तमानतयानुभवाभावात् । किंतुभविष्यत्त्वेनैव । तच्च पुराणानांजनिप्रतिपादकवाक्यान्यथानुपपत्त्यैवसिध्यतीति । ननूत्पन्नपुराणादीनांविनाशाभावेकल्पांतरेपुनारचनंकुतइति । परिहृतमेतद्विष्णुतत्वनिर्णयटीकायां । प्रमाणप्रश्नश्चेदुक्तादेवपुराणवाक्यादितिब्रूमः । प्रयोजनप्रश्नस्त्वयुक्तः । ईश्वरप्रवृत्तेःसर्वत्रस्वप्रयोजनशून्यत्वात् । परप्रयोजनानितुसूक्ष्माण्युत्प्रेक्षितुंनवयंप्रभवामः । भगवानाचार्योपीदानींप्रयोजनाभावात्तन्नावादीदिति ॥ २८ ॥ एवंपदार्थरूपं निरूप्य इदानींभेदादितद्धर्मान्विचारयति ॥ पूर्वमित्यादिना ॥ अंशिनोंशैरित्यनुव्याख्यानवचनं । अत्रसद्यायरत्नावली

अशेषांशैर्विना अभावादंशिनोऽभेदः । एकैकांशेन विनापीतरांशात्मकतयाभावाद्भेद इति भेदाभेदावनुभवसिद्धावित्यर्थ इति । नयचंद्रिकाचांशिनस्सर्वांशैरभेदः । सर्वांशैर्विनाऽशिनएवाभावात् । एकैकांशेनतुभेदाभेदौ । तद्विनाऽप्यंशिनःस्थितेरिति । अत्रचर्चातुप्रायःसुधानुसारेणक्रियते । ननुयदुक्तं पटादेरंशिनःसर्वैरंशैरत्यंताभेदः एकैकांशेनभेदाभेदाविति तदयुक्तं । सर्वतंतुभावेपिकदाचित्पटस्याभावेनखंडितत्वात् । खंडितेभेदाभेदस्वीकारात् । अतएकैनैवसर्वैरपितंतुभिःपटस्यभेदाभेदावेवोचितौ । अन्यथा "तंतुभ्योन्यःपटःसाक्षात्कस्यदृष्टिपथंगतः । अनन्यश्चेत्तंतुभावेपटाभावोपिनोभवे"दितिगीतातात्पर्यं सर्वतंतूनांपटस्यचभेदाभेदयोरेवसमर्थितत्वेनतद्विरोधादिति । उच्यते । व्यतिषंगविशिष्टाहितंतवोऽवगम्यंते । तएवहिपटांशाः । अव्यतिषक्ततंतुभ्यःपटजन्माभावेनतेषांकारणत्वाभावात् । नचव्यतिषंगविशिष्टतंतुसद्भावेकदाचित्पटस्याभावोदृष्टः । तस्मादखंडितत्वाद्व्यतिषंगविशेषविशिष्टैःसर्वतंतुभिःपटस्यात्यंताभेदएवयुक्तः । अविवक्षितव्यतिषंगैस्सर्वतंतुभिर्भेदाभेदावेवेतिन विरोधः । तथाहि । अविवक्षितव्यतिषंगाणांसर्वतंतूनां पटेनभेदाभेदावेवयुक्तौ । तेषांतंतुत्वप्रकारेणैवबुद्ध्युपस्थितानांपटंप्रति कारणत्वात् । कार्यकारणयोश्चखंडितत्वनियमात् । तथोक्तं "खंडितंरूपमेवात्रविकारोपिविकारिण" इति । विवक्षितव्यतिषंगास्तुसर्वतंतवःपटांशाएव नतुकारणानि । व्यतिषिक्ततंतुव्यतिरेकेणपटाभावेन तेभ्यःपटजननाभावाभावात् । अतोयावदंशैरंशिनोत्यंताभेदएवयुक्तइति । ननुव्यतिषंगविशिष्टतंतुव्यतिरेकेणपटाभावे परमाणुपुंजवादापत्तिः । उक्तरीत्याव्यतिषक्तपरमाणूनामेवघटादित्वापातादितिचेन्मैवं । यथाहि यावद्द्रव्यभाविगुणानांद्रव्यात्यंताभेदेपि नद्रव्यं निर्गुणं किंतु धर्मिभूतं

द्रव्यं तद्धर्मभूतागुणाश्चसंति विशेषबलात् । तथा व्यतिषक्तयावत्तंतुपरमाण्वादीनामेव पटघटादित्वेपि सविशेषाभेदान्नतंत्वादिव्यतिरेकेणपटाद्यभावः । किंतु संति व्यतिषक्तास्तंत्वादयःपटादिश्च । सचतेभ्योनभिद्यतइति नदोषः । तथाच व्यतिषक्ततंतवःपटइत्यभेदप्रतीतेः । संबंधवस्तुद्वयप्रतीतिविलक्षणायाःसाक्षिसिद्धत्वाद्भेदेप्रमाणाभावाच्चात्यंताभेदः । एकैकतंतुनातुभेदाभेदौ । नचैकैकतंतुपरित्यागेनसर्वेतंतवोनामसंति । अतस्तत्राप्यस्त्येवाभेदप्रतीतिः । एकैकत्र पटबुद्ध्यभावस्तु भेदमाक्षिपतीति । एकैकांशेनभेदाभेदइत्यत्रद्वेधासंप्रदायः । यावद्द्रव्यभाविनामाकाशादिनित्यपदार्थगतानांहस्तवितस्त्यादिपरिमितांशानामंशिनाऽत्यंताभेदएव । अनित्यवस्तुगतयावद्द्रव्यभाव्यंशानांचात्यंताभेदः । पटाद्यंशानामयावद्द्रव्यभाविनांतुभेदा

अंशिनोंशैरभेदोयमंशेनतु भिदाऽभिदा । परस्परंतथांशानां भेदएवप्रकीर्तितः ॥ २९ ॥

भेदावित्येकःपक्षः । "खंडितेभेदऐक्यंचयावद्वस्तुनभेदवदिति"तत्वविवेकेअत्यंताभेदस्य भेदाभेदयोश्च यावद्द्रव्यभावित्वायावद्द्रव्यभावित्वाभ्यांव्यवस्थापितत्वात् । बृहद्भाष्येच"अंशिनोंशैर्गुणस्यापी"त्याद्युक्त्वा, भेदाभेदःसमुद्दिष्टोविनाशोयत्रदृश्यत"इत्ययावद्द्रव्यभाविस्थलएवभेदाभेदयोःस्पष्टमुक्तेश्च । उपाधिखंडनटीकायांच "यदाआकाशेभेदोनास्ती"तिह्युक्तं । सुधायांच निर्भेदमप्याकाशमनंतांशोपेतं । एतेनभेदहीनेप्याकाशादावौपाधिकोभेदोदृष्टइत्यप्यपास्तं । विशेषनिबंधनानामाकाशाद्यंशानामेकस्मिन्सविशेषेपीति घटाद्युपाधिभिःस्पष्टीकरणादित्यादिना समयचरणेआकाशांशानामभेदस्यासकृदुक्तेश्च ।

नच"आकाशाअप्यतस्त्वेतेविभिन्नाअप्कणादिव"दितिछांदोग्यभाष्यविरोधः। तस्यभेदप्रतिनिधिविशेषपरत्वेनसावकाशत्वात्। पक्षांतरसाधकत्वेनोदाहरिष्यमाणानुव्याख्यानादौ घटादिकार्यांशानामेवप्रस्तुतत्वान्नतद्विरोधोपि। तथाच यावद्द्रव्यभाविनामेकैकांशानामंशिनाऽत्यंताभेदएवेति। संप्रदायांतरंतु आकाशादौसर्वत्राचेतनगतांशानामंशिनाभेदाभेदौ। परस्परमंशानामत्यंतंभेदएवेति। "अंशिनोहिपटाद्याये भिन्नैरेवपरस्परं। अंशैरंशिनउच्यंते नैवमेवहिचेतना"इति कृत्स्नप्रसक्तिसूत्रानुव्याख्याने अंशांश्यभेदे चैतन्यमवच्छेदकंविधायाचेतनांशानांपरस्परंभेदाभिधानात्। चैतन्यमवच्छेदकंविधायेत्यादि सुधायां। तथाचाकाशादेरप्युक्तावच्छेदकानवच्छिन्नत्वेन तदंशानांभेदएववक्तव्यः। नह्यंशानामंशिनाऽत्यंताभेदे परस्परंभेदोघटते। यद्येनात्यंताभिन्नं तदत्यंताभिन्नस्यतदत्यंताभिन्नतेतिन्यायात्। अतोंशांशिनोर्भेदाभेदएव। अपिच "जडानामंशतोभेदः समुदायेनचोभय"मितिऋग्भाष्ये जडत्वावच्छिन्नेसर्वत्रांशानांभेदाभेदोक्तेश्च। अपिच "यस्तुभिन्नःस्वयंखादिस्तस्यभेदोह्यबुद्धिनां। उपाधिभिन्नोप्यएव नतुभेदंस्वयंसृजेत्। आकाशाअप्यतस्त्वेते अनंताअप्कणादिवदि"तिच्छांदोग्यभाष्येस्पष्टंभेदोऽभिधीयते। नात्रभेदशब्दोविशेषपरइतिशक्यतेवक्तुं। भेदपदाभ्यासात्। अप्कणादिवदित्यत्यंतभेदोपेतदृष्टांतोपादानाच्च। नच खंडितेभेदऐक्यंचेतिवचनविरोधः। तत्र"गुणक्रियाजातिपूर्वा धर्माःसर्वेपिवस्तुनः। रूपमेवद्विधंतच्च यावद्वस्तुच खंडित"मितिधर्मधर्मिणोरेव भेदाभेदात्यंताभेदव्यवस्थोपपादकतया खंडितत्वादेस्तत्रोपादानं नतुसर्वत्र। "येधर्मानियमेनैव धर्मिणोनवियोगिनः। जडस्थाअप्यभिन्नास्ते भिन्नाभिन्नाविभागिन"इत्युक्तेश्च। अतएवतट्टीकायां यत्खंडितंगुणादितत्रैव

भेदाभेदौप्रतिपत्तव्याविति धर्मपरतयैवव्याख्यानं । एतेन बृहद्भाष्यविरोधोपि परिहृतः । तत्र यथाकार्योपादानयोश्चेत्युक्त कार्यकारणस्थले नखंडितत्वादिन्यायप्रवृत्तिः । तत्राखंडितत्वनैयत्येनयावद्द्रव्यभावित्वादिविभागाभावात् । तथा अंशांशिस्थलेपि "विनाशोयत्रदृश्यत"इतिन्यायविषयता नास्ति । अन्यथोदाहृतच्छांदोग्यभाष्यादिविरोधात् । अतः कार्यकारणांशांशिस्थलव्यतिरेकेण गुणगुण्यादिनाधर्मधर्मिभावापन्नस्थले भेदाभेदव्यवस्थायामेव विनाशोयत्रदृश्यतइतिन्यायइत्यंगीकार्यं । सुधायां यस्यविभिन्नावयवेषुसत्स्वपि तेषांविभागोनकदाचिद्भवितुमर्हति सपरमाणुरिति यावद्द्रव्यभाविनामपिपरमाण्वंशानांभेदाभिधानाच्च । नचोपाधिखंडनटीकाविरोधः । किंघटाकाशमठाकाशयोर्भेदउपाधिकृतइत्युच्यते उतघटाकाशमठाकाशयोःस्वरूपं । आद्योत्तरत्वेनकारिकाखंडंव्याचष्टे । यदेति । द्वितीयोत्तरत्वेनतदेवव्याचष्टे । यदात्वितीति । पूर्वपक्षाभिप्रायंविकल्प्यतद्दूषणतयामंदारमंजर्यांव्याख्यातत्वेनान्यथासिद्धत्वात् । नापिप्रागुदाहृतसमयपादीयसुधाविरोधः । तस्यपररीत्याप्रवृत्तत्वात् । अतएवन्यायदीपिकायांमूलेऽनुपपत्तिमाशंक्य अयंचाभ्युपगमवादः आकाशस्यांतर्भेदवत्त्वादितिसमाधानमुक्तं । वादावल्यांच अथयथा घटाकाशमठाकाशयोर्नभेदस्तथा जगदेकदेशयोरपीतिचेन्न । साध्यविकलत्वाद्दृष्टांतस्येति भेदाभावरूपसाध्यस्य दृष्टांतीकृताकाशेवैकल्योपपादनंचाकाशांशानां निरुपाधिकभेदपक्षएवयुज्यते । प्राचीनटीकाकारैरेवंबहुशोभिधानाच्च । "खेपिदेशांतरस्ये"त्युपाधिखंडनटीकायांश्रीपद्मनाभतीर्थैः नचघटाकाशमठाकाशवदुपाधिवशात्सुरनरादिजीवेशभेदइतिवाच्यं । मठाकाशाद्याकाशानांस्वभावतएवभिन्नत्वादित्युक्तत्वात् । तथाचजडगतांशानांयावद्द्रव्यभाविनामप्यंशिना

भेदाभेदावेवेतिसर्वमनाकुलं ॥ २९ ॥ कार्यकारणयोर्भेदाभेदनैयत्यमित्याह ॥ भेदाभेदइति ॥ अत्रकेचिदापणस्थतंत्वादेःकारणत्वावस्थायामपिभेदाभेदइत्याचक्षते । समयचरणसुधायां कारणतावस्थायांघटादिकार्यस्य सदसत्त्व भेदाभेद व्युत्पादनप्रकरणे भेदासत्त्वयोःपरेणाप्यंगीकृतत्वादभेदसत्त्वेसाधयतीति "तस्मात्प्रध्वस्तभेदादि सदित्येवावगम्यते" इतिमूलमवतार्य प्रध्वस्तस्य घटादेर्भेदः । आदिपदेनानुत्पन्नस्य कारकत्वं । "नष्टानामपिवस्तूनांभेदोनैवविनश्यतीति" यत्प्रध्वस्तभेदस्यसत्त्वमवगम्यते यच्च घटोजायते घटंजनयतीत्येवमनुत्पन्नस्यापिकर्तृकर्मकारकत्वंच तत्तस्मात्कार्यस्यकारणाभेदात्प्रागुत्पत्तेर्विनाशोत्तरंचसत्त्वादेवहियुज्यतइति कारणत्वावस्थायामपिकार्याभेदः कार्यसत्त्वंचव्युत्पादितं । तथाचानेनभेदाभेद

भेदाभेदःपरिज्ञेयः कार्यकारणयोरपि ॥ ३० ॥

एवापणस्थतंत्वादेरवगम्यतइतिनियामकंचाहुः । वस्तुतस्तु कारणत्वावस्थापन्नस्यापणस्थतंत्वादेर्भविष्यत्कार्येणभेदएव । "प्रागूर्ध्वंभेदएवेतिमंतव्य"मितिऋग्भाष्यटीकोक्तेः । न्यायदीपिकायांच"विनाशानंतरंतुभेदएवेतिसिद्धं । विनष्टेत्वभेदायोगादितिनाशानंतरमभेदनिषेधपूर्वकंभेदमात्रोपादानात्तन्न्यायेनप्रागपिभेदएववक्तव्यः । तत्वविवेकटीकायांच प्रागूर्ध्वंसत्स्वपितंतुषुपटस्याभावादित्युक्तं । अपिच वैशेषिकपरीक्षासुधायां समवायनिरासायकार्यकारणयोरत्यंतभेदंविघटयितुं स्पष्टंमृद्घटः मृदात्मकोघटइत्याद्यभेदव्यवहारबलेनकार्यकारणयोरभेदंसाधयित्वा सत्स्वपितंतुषुपटस्याभावात् सत्यपिमृत्पिंडेघटस्याभावा

दितिभेदप्रदर्शनेनभेदाभेदसमर्थनंकृतं । यदिपूर्वमपिभेदाभेदःस्यात्तर्हितद्रीत्यातदापि मृद्घटइत्याद्यभेदव्यवहारःस्यात् । कार्यत्वावस्थायांमृत्त्वानुस्यूतिवत्कारणत्वावस्थायांघटत्वानुस्यूत्यनुभवप्रसंगश्च । अतःपूर्वोत्तरंभेदएव । नचप्रागुदाहृतसुधावचनविरोधः । वस्तुतोऽस्यैवमृत्तंत्वादेः कारणस्योत्तरत्रकार्यरूपेणविकरिष्यमाणत्वेनजनिष्यमाणकार्यस्यपूर्वंकारणात्मनासत्वात्तद्विवक्षयासुधावचनंयुक्तं । नहिपृथुबुध्नोदराकारादिविशिष्टस्यघटादिरूपकार्यस्यतदवस्थतयापूर्वंसत्त्वंवाऽभेदोवाशक्यतेवक्तुंप्रत्यक्षादिविरोधात् । किंत्वनुत्पन्नस्यापिघटादेःकर्तृकर्मत्वादिरूपंकारकत्वं यादृशेनसत्वेनाभेदेनचविना नोपपद्यते तावदेवाक्षिपतीति तावन्मात्रमेवस्वीकार्यं । नाधिकं बाधितत्वात् । तच्च कारणात्मतयासत्त्वेन कारणसत्तयैवसत्तावत्कार्या

गुणक्रियाजातिपूर्वा धर्माःसर्वेऽपिवस्तुनः । रूपमेव द्विधं तच्च यावद्वस्तु चखंडितं ॥ ३१ ॥

भेदेनचोपपद्यतइति तन्मात्रविवक्षयैव सदसत्कार्यवादो भेदाभेदोक्तिश्च नतुपृथुबुध्नोदराकाराद्यवस्थाविशेषविशिष्टस्य कारणाभेदःसुधाभिप्रेतः । अतएवारंभणाधिकरणे "असद्यत्कार्यरूपेण कारणात्मतयाऽस्तिही"त्यनुव्याख्यानसुधायां यद्घटादिकं मृदादिकारणात्मतया प्रागुत्पत्तेरस्तीतिप्रमितं तदेव पृथुबुध्नोदराकारादिनाप्रागुत्पत्तेरसद्धीत्युक्तं । सन्न्यायरत्नावलीपर्यालोचनायामप्येवमेवप्रतीतेश्च । "कुतोभस्मत्वमाप्तस्यनरत्वंपुनरिष्यत"इत्यत्रसुधायांविनष्टेभेदसाधनाच्चेत्यास्तांविस्तरः ॥ ३० ॥ इत्यंशांशिविचारः ॥ अथधर्मविचारः ॥ ॥ गुणक्रियादिधर्माणांधर्मिस्वरूपत्वेपि क्वचिद्भेदाभेदौ क्वचिदत्यंताभेद इत्यत्रतत्वविवेकवाक्यंपठति ॥ गुणेति ॥ पूर्वपदेन शक्तिसादृश्यविशिष्टादिग्रहणं । ननु यथाचेतने कदाचिदप्रतीयमाना

नामपि स्वरूपभूतबलज्ञानादीनां शक्तिरूपेणावस्थानमंगीकृत्य तदत्यंताभेदःसमर्थितः तथा घटादौरक्ततादशायामपिश्या मतादीनांशक्तिरूपेणावस्थानमंगीकृत्यात्यंताभेदःकिंनोच्यतइतिचेन्न । सुप्तोऽयंबलवान्विद्वानित्यादिव्यवहारबलेनसुप्तौ स्वरूपबलादीनांशक्त्यात्मनाऽवस्थानसिद्धेर्युक्तस्तत्रात्यंताभेदः । नचैवंश्यामतादीनां । तथाव्यवहारादर्शनात् । नहिरक्ते नीलमितिव्यवहारोस्ति । अतः कल्पकाभावान्नतत्रात्यंताभेदः । किंतुखंडितत्वसिद्धेर्युक्तौभेदाभेदौ । तदुक्तंगीतातात्पर्ये । "चेतनेशक्तिरूपेण गुणादेर्भावइष्यते । सुप्तोऽयंबलवान्विद्वानित्यादिव्यवहारतः । नचैवंशक्तिरूपेण जडेव्यवहृतिर्भवे"दिति । बाह्यबलज्ञानादीनामत्यंतभिन्नत्वेपिबहुकालावस्थायित्वेनोक्तव्यवहारसिद्धिः । नच क्षणिकत्वाच्चेतिसूत्रे ज्ञानस्यक्षणिकतोक्तेः

खंडितेभेदएक्यंच यावद्वस्तुनभेदवत् । सत्वकालेह्यभेदःस्याद्भेदःपूर्वोत्तरंभवेत् ॥ ३२ ॥

कथंज्ञानस्यशक्तिव्यक्त्यंगीकारइतिवाच्यं । संस्कारस्यशक्तित्वाभ्युपगमात् । अन्यथा "यत्कामःस्वापमाप्नोति तदेवोत्थापितः पुनः । अवशोपिव्याहरतिकुतःसुप्तावकामने"त्यादिवचनविरोधात् । एवंयावद्द्रव्यभाविविशिष्टशुद्धयोरत्यंताभेदः । यथा सर्वतेश्वरयोः । जीवेष्वपियावद्द्रव्यभाविनोरत्यंताभेदः । अयावद्द्रव्यभाविनोस्तु "भेदाभेदौचेतनेषुकर्तृभोक्तृविशेषणे" इति गीतातात्पर्योक्तन्यायेन भेदाभेदौ । ननु विशिष्टस्यायावद्द्रव्यभावित्वेजन्यत्वमंगीकर्तव्यं । तर्हिकिमुपादानमितिचेत् चूतफलादिश्यामतापगमेनरक्ततोत्पत्तौकिमुपादानमितिपृच्छामः । धर्म्यैवेतिचेदत्रापिविशेष्यमेवेतिब्रूमः । नच दंडादिविशेषणा

भावेविशिष्टानुदयाद्दंडणादिविशिष्टंप्रति विशेषणमेवोपादानमितिवाच्यं । तर्हिविशिष्टानयनादौनियमेनविशेषणस्याप्यानयनाद्यन्वयप्रसंगात् । चित्रगुरानीयतामित्यादौतदभावएवहिदृश्यते । ननुविशेष्यस्यविशिष्टोपादानत्वे तत्वविवेकेभेदाभेदस्थलप्रदर्शनायकार्यकारणयोरित्युक्त्या पुनर्विशिष्टशुद्धयोरितिपृथग्ग्रहणंनस्यात् । शुद्धस्योपादानत्वेकारणपदेनैवतस्यगृहीतत्वादितिचेत्सत्यं । गोबलीवर्दन्यायेनपृथग्ग्रहणोपपत्तेः । उक्तंचमंदारमंजर्यांगोबलीवर्दन्यायेनेत्यवेहीति । ननु विशेषणमात्रस्यविशेषणविशेष्ययोर्मिलितयोर्वाविशिष्टोपादानत्वमुक्तमितिचेत्सत्यं । विशेष्यस्यैवोपादानत्वमुपपाद्यबाधकानिपरिहृत्य प्रौढवादतयैवततःपरंतथोक्तिर्नतुसिद्धांततया । अन्यथा सुधान्यायदीपादिविरोधात् । तथाहि । सुधायांतावत् विशिष्टाकारोनविशेषणं नापिसंबंधः । किंनाम विशेष्यं । नचतन्मात्रं । द्विविधोहिविशिष्टाकारः यावद्विशेष्यभाव्ययावद्विशेष्यभावीचेति । तत्राद्योविशेष्येणात्यंताभिन्नः । यथेश्वररूपेणसर्वज्ञः । एवंयत्रविशेषणसंबंधोयावद्विशेष्यभावी तत्रविशिष्टाकारोपितथाभूतविशेष्येणात्यंताभिन्नोद्रष्टव्यः । द्वितीयस्तुविशेष्येणभिन्नाभिन्नः । यथापर्वतोग्निमानित्यत्राग्निमान् । तत्रयथासंयोगविशेषसचिवास्तंतवःपटाकारेणपरिणमंते तथा आगंतुकविशेषणसंबंधाद्विशेष्यस्वरूपंविशिष्टाकारेणपरिणमतइत्यादि । न्यायदीपेच विशिष्टश्चत्रिविधः औपाधिको विशिष्टः उपलक्षितश्चेति । तत्राद्योयथा । पाचकोयाजकइत्यादिः । द्वितीयस्तु नीलमुत्पलमग्निमान्पर्वतइत्यादिः । तृतीयस्तु उत्पलेनीलत्वमित्यादिरिति सुधायां विशिष्टोपलक्षितयोर्भेदःस्पष्टमुक्तः । समानाधिकरणंव्यावर्तकंविशेषणं । यथोत्पलस्यनीलरूपं । व्यधिकरणंतुव्यावर्तकमुपलक्षणं । यथानीलरूपगतंनीलत्व

मुत्पलस्य । अन्येतु कार्यप्रवेशाप्रवेशाभ्यांविशेषणोपलक्षणयोर्भेदमाचक्षते । यथालंबकर्णआनीयतां चित्रगुरानीयतामित्यादी त्यादिना । ननुयद्येवमयावद्द्रव्यभाविविशिष्टशुद्धयोर्भेदाभेदावित्यभिमतं । कथंतर्हिचक्रीश्वरयोरत्यंताभेदः । चक्रित्वस्यायावद्द्रव्यभावित्वेनात्यंताभेदासंभवात् । रामव्यासाद्यवतारेपुचक्रित्वाभावात् । रूपांतरेपुचक्रित्वसद्भावेन तदभेदादस्तिव्यासादावपिचक्रित्वमितिचेन्न । अचिंत्यशक्तिघटितविशेषावलंबनेनसर्वत्रभावाभावव्यवहारात् । यथोक्तंमांडूकभाष्ये "अभेदमपितद्ब्रह्मबहुरूपंविशेषतः । करोतिनकरोतीतिव्यवहार्यंस्वशक्तित"इति । अन्यथा अखंडब्रह्मवादापत्त्यासर्वव्यवहारलोपप्रसंगाच्च । अस्तुवाव्यासादेश्चक्रित्वादिकं तथापिप्रलयेचक्रनाशात्खंडितत्वमेव । तस्यप्रलयेपिस्वरूपात्मकरमात्मकचक्रसद्भावोभ्युपगम्यतइतिचेत् तथापिकामाभिमन्यमानजडचक्रस्यानित्यत्वेनतद्वैशिष्ट्यंखंडितमेवेतिकथंतद्विशिष्टस्यशुद्धेनात्यंताभेदः । अस्तुतर्हिभेदाभेदइतिचेन्न । अयावद्द्रव्यभाविस्थले सुधायां विशेष्यंविशिष्टाकारेणपरिणमतइत्युक्तत्वेनेश्वरस्यपरिणामित्वप्रसक्तेः । "यइहनानेवपश्यति ईषद्भेदप्रदर्शीचमध्यमंतुतमोविशेत्"इतिवचनविरोधात् । "समुदायस्तुभिन्नग"इति, ब्रह्मणिद्वित्वमपेक्षाबुद्धिजन्यंभिन्नाभिन्नमंगीकृतमितिचेन्न । विप्रतिपत्तेः । अंगीकारेवा बलवद्वाक्यबलेनतन्मात्रस्यापवादात् । नचैतदपितथास्त्वितिवाच्यं । तद्वदत्रनिरवकाशप्रमाणादर्शनात् । "खंडितेभेदऐक्यंचे"त्यत्रैवाशंकनात् । किंच "समुदायस्तुभिन्नग" इतिब्रह्मणिद्वित्वमपेक्षाबुद्धिजन्यंभिन्नाभिन्नमंगीक्रियतइतिचेत्सत्यं । अन्यत्रद्वित्वस्यभिन्नाभिन्नत्वंव्यासज्यवृत्तित्वंच । नेश्वरे । रामकृष्णाविविद्वित्वस्य "द्वित्वंचैकस्ययुज्यत"इतिब्रह्मस्वरूपतयांगीकारात् । तत्रैकत्वसंख्याविशिष्टेप्यचिंत्यशक्तिबलेनैवबहु

संख्यागोचरत्वस्यवक्ष्यमाणत्वात् । घटेश्वरावितिद्वित्वंतुयथाघटनिरूपितसंयोगःपटे पटनिरूपितसंयोगोघटइतिसंयोगद्वयेन घटपटयोःसंयोगइतिव्यवहारः तथा घटनिरूपितद्वित्वमीश्वरे ईश्वरनिरूपितद्वित्वंघटइति द्वित्वद्वयांगीकारेणोपपद्यतइत्यंगीकार्यं । अन्यथेश्वरस्य द्वित्वंप्रत्युपादानत्वस्य भिन्नाभिन्नधर्मवत्त्वस्यचायातेन बहुप्रमाणविरोधात् । अतोनविशिष्टेद्वित्वप्रतिबंदीति । तस्मादयावद्द्रव्यभाविविशिष्टशुद्धयोःसर्वत्रभेदाभेदावित्ययुक्तमिति । अत्रोच्यते । चक्रित्वंहिचक्रसंयोगित्वं । तच्च ब्रह्मधर्मभूतमेवेतिनित्यमेव । अतोयावद्द्रव्यभावित्वाच्चक्रसंयोगित्वस्यभगवदत्यंताभेदएवोपपद्यते । चक्रविनाशेकथंतत्संयोग इतिचेत् । संयोगस्यतदाशक्त्यात्मनाऽवस्थानोपपत्तेः । ननु"नित्यव्यक्ताहरेर्गुणाः"इत्युक्तं । सत्यं । तत्रगुणशब्देनज्ञानानंदादीनामेवप्रस्तुतत्वात्संयोगस्यगुणत्वासंमतेः । वैशेषिकपरिभाषयैवसंयोगस्यगुणत्वं नास्मन्मते । अतोज्ञानादिगताकारवत्संयोगस्यशक्तिव्यक्तीइतिनदोषः । "विशेषात्मतयातेषां नित्यशक्त्यात्मनातथा । नित्यंस्थितेर्नधर्माणां क्रियादीनामनित्यते"त्यनुव्याख्याने आदिपदेन क्रियातिरिक्तानामपिकेषांचिद्धर्माणांशक्तिव्यक्त्यभिधानाच्च । "शक्तिव्यक्तिविशेषण"मित्येकादशतात्पर्येप्युक्तेश्चेति । यद्वा चक्रादिविनाशेवा देशादिव्यवधानेवा सदाचक्रहस्तत्वादिकंयुज्यतेभगवतः । "सन्निधानेथदूरेवा कालव्यवहितेपिवा । स्वभावाद्वाव्यवहिते वस्तुव्यवहितेपिवा । नाशक्तिर्विद्यतेविष्णो"रितिनिर्णयोक्तेः । "अन्यभावाभावकालेदेशेचे"तिद्वितीयतात्पर्येदेशकालयोर्व्यवधायकत्वाभावाभिधानात् । गोमंताचलदेशगतकिरीटसंयोगित्वस्यश्वेतद्वीपगतेहरौदर्शनाच्च । नचैवंसति क्रियायाअपि नशक्तिव्यक्ती । तद्विषयत्वस्ययदाकदाचित्सत्त्वेनकालादेरव्यवधायकत्वाच्चसदातद्विषयक्रियाव्यक्त्यु

पपत्तेरितिवाच्यं । तद्विषयक्रियाफलस्यरावणहननादेःसदाऽभावेनचर्वितचर्वणक्रियायावैयर्थ्यप्रसंगात् । आकाशरोमंथनादि वन्निर्विषयपरिस्पंदादिरूपविशेषस्यदोषरूपत्वात् । स्पष्टंप्रमितत्वाच्चतत्रशक्तिव्यक्त्योः । नचसदाचक्रधारणेनापिप्रयोजनाभावः । चक्रधारणादेर्लक्षणत्वेनभूषणधारणादितुल्यत्वेनतात्कालिकयुद्धादिप्रयोजनाभावेपितद्धारणसंभवात् । राजादिषुसदाऽऽयुधधारणस्यदृष्टत्वाच्चेतिदिक् । अत्रसर्वत्र पूर्वोत्तरंभेदः धर्मादिसद्भावदशायामभेदइत्येवमयुगपद्भेदाभेदावितिपंडिताचार्यसिद्धांतः । तथाहिनयचंद्रिकायां । ननुयदिफलादिभिःश्यामत्वादिधर्माणामभेदस्तर्हि तेभ्यःपूर्वविनाशासंभवइत्यतआह । भेदइति । गुणादीनांनाशेसतिभेदोभवेत् । तर्हिकथंसर्वात्मनाविनाशिनाभेदिना पूर्वमभेदः । भेदाभेदयोरेकत्रविरुद्धत्वादित्याशंकांपरिहरति । विशेषणमिति । इदंफलंश्याममेवेत्यभेदस्य नेदानीमिदंफलंश्यामं किंतुरक्तमेवेतिभेदस्यच एकत्रैवदृष्टिप्रमाणतश्चभेदाभेदौयुज्येते । अतएवधर्मिणिसत्येवसामस्त्येनोच्छेदिनोधर्माभिन्नाभिन्नाःफलश्यामतादयः । तदेवविशिनष्टि । भावइति । धर्माःस्वानांभावे ते धर्मिणएव उच्छेदानंतरंतुभिन्नाश्चेत्यादिना । "भेदोनाशेभवेत्तथा । विशेषमेवसंश्रित्य विशेषोबलवान्यतः । सामस्त्योच्छेदिनोन्यत्र धर्माउभयरूपकाः । भावे तएव चोच्छेदात्तदन्येचे"त्यनुव्याख्यानव्याख्यानावसरे कालभेदेनभेदाभेदोपपादनं । तत्वप्रदीपिकायांच । यद्यपिकार्यत्वविनाशित्वरूपेणभेदः । मृद्घटइतिसामानाधिकरण्यान्मृदादिरूपेणाभेदः । सत्त्वेचाभेदोघटस्य । मृद्घटः विनाशीघटइत्युभयत्राप्यनुभवादित्यादिपर्यालोचनयातथाप्रतीतेः । सन्न्यायरत्नावल्यांतु पूर्वंतुभेदाभेदौ । अत्यंताभेदेविनाशासंभवात् । भगवदितरत्रायावद्द्रव्यभाविनोधर्मास्तु स्वसद्भावदशा

यांधर्मिणोभिन्नाभिन्नाः । स्वासद्भावदशायामत्यंतभिन्नाइति युगपदेवभेदाभेदोपपादनंकृतं । टीकाकाराणामप्ययमेवपक्षः । उक्तंच भावेतएवेत्युदाहृतानुभाष्यसुधायां "किं स्वसद्भावदशायामभेदिनः । स्वासद्भावदशायांभेदिनइति कालभेदेनभेदाभेदइत्यतउक्तंभावइति । स्वसद्भावदशायामेवोभयरूपकाइत्यर्थः । विनष्टेभेदचिंतानवकाशात् । प्रागत्यंताभेदेविनाशासंभवाच्चे"त्यादिनागीतातात्पर्यटीकायांच जडवस्तुनिगुणक्रियादिविशेषाणामयावद्द्रव्यभाविनां स्वसद्भावदशायामेवभेदाभेदौ युक्तावित्याद्युक्त्वा विनाशानंतरंभेदएवेत्युक्तं । ननु विनाशानंतरंभेदएवेत्ययुक्तं । विनष्टेभेदचिंतानवकाशादितिसुधाविरोधादितिचेन्न । भावानवबोधात् । तत्रसत्यपिभेदेकार्यकारणयोर्भेदाभेदोपयुक्तभेदचिंतानवकाशादित्यर्थः । इहतुनष्टेपिपदार्थे

अन्योन्याभावनामापि भेदोवस्तुस्वरूपकः ।

कारणानुगतभेदस्यसत्त्वमुच्यतइतिकुतोविरोधः । तथाच युगपदयुगपद्भेदाभेदावितिपक्षद्वयं ॥ ३१ ॥ ३२ ॥ ननुतथापिनाभावस्त्रिविधः । अन्योन्याभावस्यचतुर्थस्यसत्त्वादित्यतआह ॥ अन्योन्याभावेति ॥ तत्वविवेके"भावाभावस्वरूपत्वान्नान्योन्याभावतापृथ"गित्युक्तेः । अनुव्याख्याने"भावस्याभावधर्मतः । धर्मधर्मैक्यतश्चैवे"त्याद्युक्तेः । तादात्म्यप्रतियोगिकाभावरूपस्याप्यन्योन्याभावनामकभेदस्यभावस्वरूपत्वंयुज्यते । पदार्थस्वरूपत्वाद्भेदस्येतिविष्णुतत्वनिर्णयटीकायांप्रपंचितमेतत् । ननुअन्यतादात्म्यप्रतियोगिकाभावोऽन्योन्याभावः । तादात्म्यंचासत् । असत्प्रतियोगिकश्चाभावोत्यंताभावइति निश्चितं । तत्कथमत्यंताभावात्मकस्यभेदस्यघटादिरूपभावपदार्थात्मकत्वमितिचेदुच्यते । अत्यंताभावोह्यनुभूयमानःशशविषा

णंनास्तीतिभाति । भेदस्तुघटःपटोनेत्यनुभूयते । एवमत्यंताभावान्योन्याभावविषयकानुभवभेदात्तयोर्भेदोप्यनुभवसिद्धः । नह्यबाधितानुभवसिद्धार्थेयुक्तिविरोधःशंक्यः । किंचात्यंताभावःप्रथमप्रतिपत्तौनिषेधमुखेनस्वतंत्रतयाप्रतीयते । अन्योन्याभावस्तुभेदइतिघटःपटोनेतिप्रथमंविधिमुखतयापश्चान्निषेधतयाघटपटधर्मतयाचभाति । तथाचैवंविरुद्धधर्माधिकरणयोरनयोर्भेदः स्पष्टएव । तादात्म्यप्रतियोगिकत्वोक्तिःपारिभाषिक्येवेति । ननुधर्मधर्म्यैक्यांगीकारेरूपीघटइत्यादौरूपादेर्घटादिसंबंधितया प्रतीतिर्नस्यात् । नहिघटोघटसंबंधित्वेनप्रतीयते । किंचानेकधर्माभिन्नस्यधर्मिणोनेकत्वंवाएकधर्म्यभिन्नतयाधर्माणामैक्यंवा स्यात् । रूपरूप्यादिशब्दानांपर्यायत्वंचस्यादित्यतआह ॥ अभेदेपीति ॥ विशेषस्यभेदप्रतिनिधित्वान्नोक्तदोषइतिभावः ।

अभेदेपिविशेषस्य सर्वत्रांगीकृतत्वतः । नकश्चिद्विशेषोस्ति स स्वनिर्वाहको भवेत् ॥ ३३ ॥

ननुविशेषस्यविशेषिणाभिन्नत्वेकिंधर्मांतरेणापराद्धं । विशेषविशेषिणोर्भेदे अपसिद्धांतश्च । अभेदेपुनर्व्यवहाराद्यनुपपत्तिः । विशेषांतरस्वीकारेऽनवस्थेत्यतआह ॥ सइति ॥ सएवविशेषोविशेषांतरमंतरेण विशेषतद्वद्भावंगमयति । एकस्यनिर्वाह्यत्वं निर्वाहकत्वंचतद्बलादेवसिध्यति । "स्वनिर्वाहकतायुक्ताः संतिवस्तुष्वशेषत" इत्युक्तेः । विशेषोनाम निर्भेदत्वेनप्रमितेष्वपी श्वरजीवजडेषुनानाविधरूपज्ञानानंदादिगुणक्रियासंयोगसंख्याजातिविशिष्टशक्तिसादृश्यादीनामवांतरबहुत्वादिघटकोभेदप्र तिनिधिःशक्तिविशेषः । तदुक्तंबृहद्भाष्ये । "एकस्मिन्नेवशब्दानांयस्तुनानास्वरूपिणां । प्रयोजकत्वहेतुस्स्यात्स विशेषःप्रकी

र्तित" इति । निर्भेदेवस्तुनिकथंविशेषस्याप्यवस्थानमितिचेदीश्वराचिंत्यशक्त्येतिब्रूमः । तच्चोक्तं । "तस्यत्वशेषशक्तित्वाद्युज्यतेसर्वमेवचे"त्यनुभाष्ये । ईशशक्त्यनंगीकारेबहुविप्लवापत्तेश्च । तथाहि । एकस्मिन्नेवपदार्थेकथंनानाविधगुणरूपक्रियाद्यनेकव्यवहारः । बहुत्वसद्भावादितिचेत्तर्हिलोकेबहुत्वस्यभेदाविनाभूतत्वेनतत्रभिन्नत्वमापद्येत । तथाचेश्वरे "नेहनाने"त्यादिना, जीवे यःसजीवोनिरवयवइत्यादिना, जडेच शुक्लःपटइत्यादौशौक्ल्यपटयोरभेदावगाहिप्रत्यक्षादिनाच अत्यंताभेदावगमेन तद्व्याकोपापत्तेः । नचाभेदग्राहकप्रत्यक्षमेवनास्तीतिवाच्यं । शुक्लःपटइतिप्रतीतेः घटःपटइतिप्रतीतितोवैलक्षण्यानुभवात् । वैलक्षण्येचाभेदएवनिमित्तमंगीकार्यं । नच संबंधमात्रनिबंधनेयंप्रतीतिरितियुक्तं । कुंडबदरादिप्रतीतितोविलक्षणत्वाच्च । अत्यंतभेदे आधाराधेयभावेचसमाने अयुतसिद्धत्वस्याप्रयोजकत्वात् । अतःकुंडबदरादिप्रतीतितोविलक्षणेयंशुक्लःपटइत्यादिप्रतीतिरभेदविषयैवावसीयते । तस्माद्भिन्नत्वांगीकारेतद्व्याकोपःस्यादेव । अथयदिश्रुत्यादिव्याकोपपरिहारार्थंभेदोनेष्यते तदा व्यापकनिवृत्त्याव्याप्यनिवृत्तेरावश्यकत्वाद्बहुत्वमपित्याज्यंस्यात् । त्यागेचैकस्मिन्नानाव्यवहारानुपपत्तिः । ननु वस्तुतःपरस्परंविलक्षणेष्वेवपदार्थेषुबहुत्वंभेदव्याप्तं नत्वेकत्वेनप्रमिते तदवांतरबहुत्वमितिचेत् कुतएवंकल्प्यते । तथादर्शनादितिचेत् कारणंपृच्छामोत्रनप्रमाणं । पदार्थस्वरूपस्यताद्दशत्वान्नकारणमन्वेषणीयमितिचेन्न । तर्हिसर्वत्रापितत्तत्स्वभावस्ताद्दशइतिवक्तुंशक्यत्वेनकारणादितयेश्वरांगीकारवैयर्थ्यादनीश्वरवादापत्तेः । किंचैकत्वेबहुत्वंविरुद्धमित्युक्तेस्वभावस्ताद्दशइतिवक्तुमशक्यत्वात् । विरुद्धश्चस्वभावश्चेत्यस्यानुपपन्नत्वात् । नहि स्वयमेवस्वेनसद्वितीयइतियुक्तं । नचप्रमितत्वादविरोधइतिवाच्यं ।

कारणप्रश्नेप्रमितत्वस्यानुत्तरत्वात् । अथमतं निर्भेदेपिविशेषशक्त्याबहुत्वमुपपद्यते नचविशेषोप्रामाणिकः वैशेषिकप
रीक्षायां "येनप्रत्यक्षसिद्धेन व्यवहारोखिलोभवे" दित्यादिनाप्रत्यक्षव्यवहारान्यथानुपपत्तिभ्यांसिद्धत्वस्यप्रतिपादितत्वात् ।
अतःकिमीश्वरेणेतिचेन्न । यद्यभेदेपिविशेषेणानेकत्वंस्यात्तर्हिघटेपिविशेषशक्त्यैवस्वेनैवस्वस्यानेकत्वमुपपद्यतां । घटेपिविशेष
स्यसत्वात् । अथांशांशिगुणगुण्यादिष्वेवविशेषोबहुत्वंसंपादयति नतुधर्मिण्येवस्वतइतिचेत् कुतोयंविभागः विनिगमकाभा
वात् । विशेषस्यैवायंस्वभावइतितुप्रत्युक्तं । अतईश्वराचिंत्यशक्त्यासंपादितोऽयंविशेषइतिस्वीकर्तव्यं । तथाचैवमीश्वराचिंत्य
शक्त्यनंगीकारे विशेषेणापिगुणगुण्यादिनानात्वनिर्वाहासंभवादघटितघटकाचिंत्याद्भुतशक्तिसंपन्नोभगवान्नारायणएवस्वरूप
स्वभावविशेषाणांनियामकः । स्वशक्त्यैवाभिन्नेविशेषंसंपाद्य तंनिमित्तीकृत्यगुणादिनानात्वमपिसंपाद्याभेदेनैकत्वमनिरस्यैवैकै
कत्रापिचेतनेष्वंशांशिभावं गुणगुण्यादिभावंचांशगुणादीनांनानात्वमित्यादिकं तत्तत्पदार्थगतानंतविशेषैः स्वाचिंत्यशक्त्यासं
पादयतीति । तदेतत्सर्वं सुधायांकृत्स्नप्रसक्तिसूत्रव्याख्याने वैशेषिकपरीक्षायांच निपुणतरंप्रतिपादितं । एकादशतात्पर्येच
"अवयव्यवयवानांच गुणानांगुणिनस्तथा । शक्तिशक्तिमतोश्चैव क्रियायास्तद्वतस्तथा । स्वरूपांशांशिनोश्चैव नित्याभेदोजना
र्दने । जीवस्वरूपेषुतथा तथैवप्रकृतावपि । चिद्रूपाया" मित्याद्युक्त्वा "विष्णोरचिंत्यशक्तेश्चसर्वंसंभवतिध्रुव" मित्यचिंत्यशक्तेरे
वसर्वघटकत्वमुक्तमित्यलंविस्तरेण ॥ ७ ॥ अत्रविशेषोनाम धर्मधर्मिभावघटकस्तदतिरिक्तःशक्तिविशेषइत्येकःपक्षः । अयमनु
पपत्तिशांतिहेतुर्विशेषोनामशक्तिविशेषोंगीकरणीयइतिप्राप्नोतीतिजन्माधिकरणसुधादौबहुशोभिधानात् । एवंबहूनिवचनानि

संति । तथैवहिसर्वेपिप्रतिपन्नाः । अपरस्तु विशेषोनाम धर्मधर्मिलक्षणोनापरोस्तीति । "द्रव्यमेवततोनंतविशेषात्मतयासदा । नानाव्यवहृतेर्हेतु"रित्यनुव्याख्यानेतत्सुधायांच । द्रव्यमेवघटादिकंगुणक्रियाद्यनंतविशेषात्मतयानानाव्यवहारहेतुर्भविष्यतीति । तत्वप्रदीपेच समवायमन्यमंगीकृत्यानवस्थापरिहाराद्वरमेकस्यैवद्रव्यस्यगुणादिविशेषरूपेणस्वनिर्वाहकत्वमितिस्पष्टोक्तेः । सन्न्यायरत्नावल्यांच "विशेषास्तेष्यनंताश्च परस्परविशेषिणः । स्वनिर्वाहकतायुक्ताः संतिवस्तुष्वशेषत"इत्यस्यव्याख्याने नीलमुत्पलंघटस्यशौक्ल्यं इत्याद्येवंविधविशेषाःप्रतिद्रव्यमनंताःस्वनिर्वाहकतायुक्ताःपरस्परविशेषणविशेष्यभावेनप्रतीयमानाः संतीत्याद्युक्त्वा विशेषाणांपरस्परविशेषणविशेष्यभावेनप्रतीयमानत्वमुदाहरणनिष्ठतयाप्रतिपादितं । विशेषणविशेष्यभावश्च शुक्लोघटः घटस्यशौक्ल्यमित्यादिरवगंतव्यइति । नारायणपंडिताचार्यविरचितायांतत्वनिर्णयटीकायांतत्वमंजर्यांच स्वरूपेपीत्यादेरयमर्थः । गुणस्वरूपेपिगुणक्रियादिरूपोविशेषोस्ति । तस्मान्नगुणमात्रत्वप्रसंगः । यथास्वरूपिणएवस्वरूपत्वविशेषोस्त्येव । नहितत्पक्षेपिस्वरूपिणःस्वरूपंभिन्नं । भेदाभावेपितेनविशेषेणैवस्वरूपस्वरूपिव्यवहारो गुणगुण्यादिव्यवहारश्च वर्ततइत्याद्युक्तं । तत्वप्रदीपिकायां सोयमेकत्रापरपर्यायनानाशब्दप्रवृत्तिहेतुरित्यादीनि प्रागस्मदुदाहृतवचनान्येवपठितानि । तथाच गुणादीनामेवविशेषत्वंलभ्यते । पक्षद्वयाविरोधस्त्वित्थं घटतद्रूपयोरभेदेपि घटस्यरूपमित्यादिव्यवहारोविशेषबलेनयुज्यते । तथापिविशेषविशेषिणोरभेदेपि विशेषस्यस्वनिर्वाहकतयाघटतद्रूपयोर्विशेषइतिभेदव्यवहारोयुज्यतइतिसिद्धांतः ॥७॥ अत्रैकेचोदयंति । परैर्घटतद्रूपयोर्भेदव्यवहारबलेनभेदमंगीकृत्य रक्तोघटइत्यादिसामानाधिकरण्यव्यवहारसिद्ध्यर्थंसमवायं

स्वीकृत्यानवस्थादिदोषपरिहारायसमवायस्यस्वनिर्वाहकतांगीकृता । भवद्भिस्त्वभेदमभ्युपगम्य भेदव्यवहारसिद्ध्यैविशेषमुररीकृत्य अनवस्थादिदोषपरिहारायतस्यस्वनिर्वाहकतास्वीकृता । तथाचपक्षद्वयेकल्पनासाम्यान्नसमवायनिरासोयुक्तइति । अत्र ह्येवमुत्तरं । परैर्घटंतद्भिन्नंरूपमंगीकृत्य तदन्यश्चसामानाधिकरण्यघटकःसमवायोनामकल्पितः । तस्यस्वनिर्वाहकत्वंच । अतः कल्पनागौरवंतेषां । अस्माभिस्तुनपदार्थत्रयकल्पनंकृतं । किंत्वेकमेवधर्मधर्मिस्वनिर्वाहकविशेषस्वरूपमेव । अतोनतत्साम्यमिति । अथोच्येत अभिन्नतयापि घटस्तद्रूपंविशेषइतित्रैविध्यस्यांगीकाराद्गौरवसाम्यमेव । त्रैविध्यप्रक्रियायाःसमत्वेनाभेदइत्युक्तिमात्रस्याप्रयोजकत्वादितिचेत् अत्रोच्यते । वस्तुस्वरूपमेव यावत्स्वनिष्ठभेदकार्यनिर्वाहकविशेषस्वभावमितिहेतोरेकस्मिन्नेवगुणगुण्यादिव्यवहारः नतुधर्मधर्म्यन्यतयासमवायइवविशेषोन्यइतिवक्तव्यं । तथाचनतृतीयविशेषावकाशः । तथाहि । एकमेववस्तु रूपत्वादिविशेषवेषेणधर्मइति तदाश्रयत्वलक्षणविशेषवेषेणधर्मीति व्यवह्रियते । रूपरूपित्वादिविशेषाणांच वस्तुस्वभावत्वेनपदार्थांतरत्वाभावात्त्रैविध्याभावाच्चनगौरवं । रूपत्वरूपित्वादीनांचस्वनिर्वाहकविशेषरूपत्वबलाद्धर्मत्वंधर्मित्वं घटे रूपमितिप्रतीतेराधेयत्वमाधारत्वं विशेषत्वंविशेषित्वं स्वस्यैवनिर्वाह्यत्वंनिर्वाहकत्वमित्यादि सर्वंयुज्यते । ननुतथापित्रैविध्यमंगीकार्यं । तथाहि । नरूपरूपिणोरेवस्वेनरूपेणविशेषत्वं तन्मात्रत्वज्ञानेनभेदव्यवहारघटकत्वादर्शनात् । किंनामैकवस्तुनिष्ठाश्रयत्वाद्याकारवैलक्षण्यरूपविशेषवेषेणैव । तथाचरूपरूप्यादिगताकारांतरस्यैवभेदव्यवहारघटकतेति नरूपादेरेवविशेषता । अतस्तृतीयप्रकारएवविशेषोंगीकार्यइतिचेत् । मैवं । नह्याकारांतरेणरूपादिव्यवहारघटकइत्येतावता तस्यघटकविशेषात्मकत्वं

भज्यते । तथात्वेतृतीयप्रकारकविशेषपक्षेपिविशेषःस्वनिर्वाहकइत्यत्रनिर्वाह्यस्यविशेषस्यतद्गतनिर्वाहकत्वस्यचापर्यायशब्दवाच्यत्वं ज्ञातत्वाज्ञातत्वे विशेषेस्वनिर्वाहकत्वमित्याश्रयत्वाश्रयित्वमित्यादिव्यवहारघटनाय विशेषांतरांगीकारेऽनवस्थापत्तेः । वस्तुनिव्यवहारघटकविशेषएवस्वयंस्वनिर्वाहकइतिव्यवहारेपिघटकः । परंतुरूपरूप्यादावाश्रयत्वादिप्रकारकवैलक्षण्यरूपविशेषतयायथाघटकत्वं तथास्वस्मिन्नपिनिर्वाह्यत्वनिर्वाहकत्वलक्षणवैलक्षण्यविशेषवेषेणैवघटकत्वं । तथाचयथाविशेषोप्याकारांतरेणैवविशेषःस्वनिर्वाहकइतिव्यवहारंघटयतीतितावतानविशेषेविशेषांतरं । तथारूपरूप्यादयएवाकारांतरेणसकलव्यवहारनिर्वाहकविशेषात्मकाइति नतृतीयप्रकाराभ्युपगमइति । तथाचाश्रयत्वादिप्रकारकवैलक्षण्यरूपधर्मप्राधान्यविवक्षयातृतीयविशेषव्य

भिन्नाश्चभिन्नधर्माश्च पदार्थानिखिलाअपि । संयोगश्चविभागश्च भेदश्चैवपृथक्पृथक् ।

वहारः । अतएवरूपादौचस्वनिर्वाहकविशेषशक्तिरस्तीत्यादिव्यपदेशाःशास्त्रेधर्मिप्राधान्यविवक्षयागुणादीनामेवविशेषत्वंपक्षइतिनपक्षद्वयविरोधः । अतएवशास्त्रेक्वचित्संकलय्यव्यवहारइति । तत्वप्रदीपिकायांचोक्तं । तस्माद्गुणगुणिनोर्भेदंकल्पयित्वोभयोःसमवायसंबंधमन्यंकल्पयित्वा तदनवस्थापरिहारार्थंतस्यस्वनिर्वाहकत्वकल्पनाद्वरमेकस्यद्रव्यस्यगुणादिविशेषरूपेणैवस्वनिर्वाहकत्वमितिद्रव्यमेवस्वकार्यगुणक्रियादिरूपंस्वनिर्वाहकमितिच ॥ ३२ ॥ ननु नभेदादेर्धर्मस्यपदार्थस्वरूपत्वंयुक्तं । तस्योभयधर्मत्वात् । उभयधर्मस्यैकस्यधर्मस्यधर्मिस्वरूपत्वे धर्मिणोरप्यैक्यापत्तेरित्यतोऽनुभाष्यवचनंपठति ॥ भिन्नाश्चेति ॥

प्रमाणोक्तमेवविशदयति ॥ **संयोगश्चेति** ॥ पृथक्पृथगिति व्यासज्यवृत्तयोनभवंतीत्यर्थः ॥ ३४ ॥ यदर्थंपदार्थस्वरूपंनिरूपितं तदिदानीमाह ॥ **परतंत्रेति** ॥ चेतनप्रकृत्यव्याकृताकाशादीनांजनिसंपादनायपरतंत्रविशेषेत्युक्तं ॥ "ॐनवियदश्रुतेः, अस्तितु, एतेनमातरिश्वाव्याख्यातः, प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः, यावद्विकारंतुविभागोलोकवत्" इत्यादिसूत्रेषुतथोक्तेः । प्रकृतिःपुरुषःकालो वेदास्तदभिमानिनः । महदाद्याश्चजायंते पराधीनविशेषतः । गगनंसाक्षिगोचरं । प्रदेशइतिविज्ञेयंनित्यंनोत्पद्यतेहियत् । तथापिमूर्तसंबंधात्परतंत्रविशेषयुक् । पुरुषाव्यक्तकालानांरमैवैकाभिमानिनी । सिसृक्षुत्वविशेषंतु साक्षाद्भगवदिच्छया । प्राप्तैवसृष्टेत्युदिताप्रधानंविकृतेरपि । पुमांसोदेहसंबंधात्सृष्टिमंतइतीरिताः । एवंप्रलयकालेपि प्रतिभात

**तथाद्वित्वादयोधर्मा नहिव्यासज्यवर्तिनः ॥ ३४ ॥ परतंत्रविशेषाख्या जनिमत्सर्वमेवच ॥ ३५ ॥**

परावरः । मुख्यवायुर्नित्यसत्त्वः शरीरोत्पत्तिकारणात् । पराधीनविशेषेणजनिमानेवशब्दितः । नैवकिंचित्ततोजन्मवर्जितंपरमाद्दते । प्रधानस्यचवेदस्यवेदस्यापीश्वरेच्छया । व्यक्तिर्नामविशेषोस्तितस्मात्तद्वशतैवहि । उत्पत्तिरत्रकथितास्वतंत्रत्वात्परात्मनः । अतईशवशंसर्वंचेतनाचेतनंजगदित्यनुभाष्ये । तत्रतावद्रमा सिसृक्षुत्वविशेषमीश्वरेच्छयाप्राप्नोतीति पराधीनेच्छाविशेषलाभएवोत्पत्तिः । नचेच्छायाअपिनित्यत्वात्कथमपूर्वतयालाभइतिवाच्यं । शक्त्यात्मनास्थितेच्छायाव्यक्त्यंगीकारात् । नच भगवद्रूपादिगताकारसंख्याक्रियादावपिशक्तिव्यक्तिसद्भावात्कथमयंविशेषोरमायाउत्पत्तिनिर्वाहकइतिवाच्यं । परदत्तस्वाम्यस्या

भिमानित्ववत्प्रलयेऽसतःसृष्टिकालेआगंतुकपराधीनविशेषस्यजनितयाविवक्षितत्वात् । "भूतिकृदेवभूत्या"इत्युक्तरीत्यापिपरा
धीनविशेषोरमायाज्ञातव्यः । मुक्तानांत्वपरोक्षज्ञानव्यंग्यालंबुद्धिगोचरप्रचुरतरसुखमात्रानुभवःप्रलये । नत्वपरोक्षोत्तरकर्मव्यं
ग्यनानावैषयिकसुखानुभवः । सृष्टौतुतल्लाभःपराधीनविशेषलाभइतिज्ञेयं । तदुक्तंतृतीयतात्पर्ये "ब्रह्माद्यैर्देवैःपरिवृतः प्रलयेपर
मेश्वरं । प्रविश्यसर्गेतुपुनः श्वेतद्वीपेप्रमोदते । ज्ञानधर्मफलास्तत्रभोगान्भुक्त्वालयेपुनः । नारायणंसमासाद्य ज्ञानव्यक्तंनिजं
सुखं । भुंजतेत्वेवमेवैषां कालसर्गविनिर्गमौ । नित्यौनित्यसुखंचैव सृष्टौभोगास्तदुत्तमा"इति । "शरीरंजायतेतेषां षोडश्याकल
यैवत्वि"त्यादिविशेषमुत्तरत्रवक्ष्यामः । एवंप्राप्ततमस्कानां"रूक्षरक्षोरदखरनखरक्षुण्णविक्षोभिताक्षा"नित्यादिविविधोपद्रवज
न्यदुःखवैचित्र्यावाप्तिरेवसृष्टिः । प्रलयेतु द्वेषातिशयव्यक्तस्वरूपदुःखमात्रानुभवः । संसारिणांतुदेहोत्पत्तौतत्राभिमानेनस्वरूप
भिन्नाभिन्नविकारविशेषलाभएवसृष्टिः । स्यादेतत् । स्थूलंशरीरंप्राप्नुवानानामेतादृशोत्पत्तिः । येषांसर्वथाऽस्मिन्ब्रह्मकल्पे
स्थूलशरीरप्राप्तिर्नास्ति किंतु कर्माभिमानितयालिंगदेहेनैवावस्थानमात्रं तेषांकथमितिचेत् सर्वलिंगदेहानामप्युपचयविशेष
लाभस्यादिसृष्टौभावाद्वा प्रलयेसुप्तानां तदाकर्माभिमानप्राप्तेर्वा सर्वेषामपिपराधीनविशेषलाभोस्तीति । चतुर्मुखप्रकरणेचैत
द्विचारयिष्यामः । ननु"ब्रह्मानिरभिमानत्वाच्छरीर्यप्यशरीरवा"नित्युक्तेःकथंतस्यजनिरितिचेत् "मुख्यवायुर्नित्यसमःशरी
रोत्पत्तिकारणात् । पराधीनविशेषेण जनिमानेवशब्दितः" इत्यस्यनयचंद्रिकायां पराधीनविशेषेण शरीराभिमानोत्पत्त्या
ख्येनेति तस्यापिशरीराभिमाननिमित्तकजन्मोक्तेः । तत्वप्रदीपेच प्राणश्रद्धयोः शरीरतदभिमानविशेषःपराधीनउत्पद्यत

इति । अस्मदादाविव बंधकाभिमानाभावएव निरभिमानित्वादित्यनेनोच्यतइतिनतद्विरोधः । अन्यथा महदाद्यभिमानित्वविरोधात् । तथाच बंधकपरदत्तस्वामित्वरूपाभिमानस्यभावात्तस्यापिजन्मेति । उक्तंच मनुष्यावतारेऽस्मदादिवजन्माभावो जातदेहेचोक्तप्रकारकाभिमानमात्रेणावस्थानरूपंजन्म मध्वविजये "संपूर्णलक्षणचणंनवराजमानद्वारांतरंपरमसुंदरमंदिरंतत् । राजेवसत्पुरवरंभुवनाधिराजोनिष्कासयन्परमसौभगवान्विवेशे"तिराजपुरदृष्टांतकथनेन राज्ञःस्वीयपुरइव स्वामिस्वरूपकिंचिदभिमानसद्भावोऽवगम्यते । परंनिष्कासयन्निति गर्भवासदोषोस्यनास्तीतिदर्शयितुं जीवांतरानधिष्ठितस्यगर्भवृद्ध्याद्यभावशंकापनोदनार्थंच । उक्तंचतत्वदीपे "गर्भेवाबहिरेवाथे"तिभाष्यव्याख्यानावसरेअत्रविशिष्टविषयेबहिःप्रवेशवचनमवगम्यते । संजातशरीरेप्रवेष्टुर्गर्भवासप्रसूत्यादिकदुःखग्रामाद्विनैव यथाकामंदेहेप्रवेशसंभवात् । तस्यचजनिभाजामतिदुर्लभत्वात् नारायणप्रसादसामग्रीसमुद्भूतप्रभूतप्रसादस्यैवकस्यचिदेतत्सुलभमुपलभामहइति ईदृशंजन्म मध्वदेवरूपएव । रूपांतरेतु देहेनसहैवजननं सद्योगर्भत्वेनगर्भवासादिदोषाभावात् । अभिमानस्तुतत्ववादाचार्यरूपइवैवेति । ननुकालस्यकथमुत्पत्तिः । प्रवाहरूपस्यकदाप्यजननात् । प्रवाहिणांप्रलयेपिजननादितिचेत्सत्यं । प्रलयकाले ननिमेषक्षणादिभावः । तथात्वे तत्कालीनप्रकृतिवेदादीनां "क्षणादयःक्षणिकास्तद्विशेषा" इत्युक्तन्यायेनक्षणिकत्वादिरूपपराधीनविशेषापत्त्याप्रलीनत्वहानेः । किंतुजगतःक्षणिकत्वजन्माद्यापादकक्षणलवदिनपक्षमासवत्सरादिरूपायेभावास्तद्राहित्येन प्रलयेकेवलंस्वरूपसत्कालत्वमात्रेण प्रवर्ततेकालः । सृष्टिकालेतु प्रागुक्तभावाप्तिविशिष्टतारूपविशेषलाभः । अतएव "सर्वेनिमेषाजज्ञिरे" इतिवाक्यस्यनिमेषत्वादि

रूपनानाजगद्विकारहेतुभूतविविधधर्माक्रांताः निमेषादिसंज्ञाविशिष्टाःकालावयवा जज्ञिरइत्यर्थः । सर्वोत्पत्तिमन्निमित्तकारणत्वस्यमूर्तसंबंधादेश्चतदानींलाभः । उक्तंचद्वितीयतात्पर्ये "कालकर्मस्वभावादि नित्यंयेशेच्छयासदा । प्राप्तमेवविशेषेणसृष्ट्यादावुन्नयत्यज" इति । गगनस्यापिमूर्तसंबंधनिमित्तकारणत्वादिलाभएवोत्पत्तिः वेदेतुव्यक्तिरेवजनिरित्युपपादितंपुरस्तात् । प्रधानस्यतु गुणत्रयमहदाद्यात्मनाविकारःप्रागेवोपपादितः । अपादानभागेपिकिंचिद्विक्रियाविशेषसद्भावान्नात्रानुपपत्तिरिति । महदादीनांचोपचयावाप्तिर्विशेषलाभइति सुधोक्तरीत्याक्रमेणविकाराधिक्यंज्ञेयं । अंडंतुसम्यग्विकृतं । "अंडंतुविकृतंज्ञेयं त

एवंसर्वंचेतनाश्च सर्वमीशवशेस्थितं । नित्याअनित्याश्च ततस्तदधीनाइतिश्रुतिः ॥ ३६ ॥

## ॥ इत्यचेतनप्रकरणम् ॥ १ ॥

ज्ज्वैकृतमुच्यते । सूक्ष्माणिमहदादीनि स्थूलान्यंडादिकानिचे"त्याद्युक्तेः । एवंघटपटादेरपिभगवत्सृष्टत्वंमंतव्यं ॥ ३५ ॥ ननु घटमहंकरोमीतीच्छादेःकुलालादिनिष्ठत्वात् ज्ञानेच्छाप्रयत्नपूर्वककृतिमत्त्वरूपकर्तृत्वस्यकुलालादिनिष्ठत्वेनकथमीश्वरस्यघटादिकर्तृत्वं । कर्तृत्वप्रयोजकत्वमेवतस्य । तथाचनघटादिस्रष्टृत्वंहरेरितिचेत् श्रूयतामवधानेन । जीवेश्वरावुभावपिशरीरमधिष्ठायतिष्ठतः । तत्रेश्वरोंतःकरणंस्पष्टंदृष्ट्वा तत्रज्ञानेच्छाप्रयत्नरूपाःप्रवृत्तीःस्वेच्छाज्ञानप्रयत्नैरुत्पाद्य कारणानिचाधिष्ठाय घटाद्युत्पादयति । जीवस्तुतद्दत्तस्वाम्येऽवतिष्ठते । यथोक्तं "बुद्धिर्ज्ञानमित्यादि" । तस्मादीश्वरस्यैवमुख्यंस्वाम्यंकर्तृत्वंच । जीव

स्यत्वमुख्यमेव । तथाचोक्तं"स्वस्वामिभावोध्रुवएषयत्रतर्ह्यच्युतेशावितिकृत्ययोग"इतिसुधायामेवस्पष्टं । "सर्वात्मतंत्रकामादेः किमुतैवपरेशितु"रित्यनुव्याख्यानव्याख्यानावसरेव्युत्पादितं । यद्यपि"कर्ताशास्त्रार्थवत्त्वादि"तिजीवस्यापिकर्तृत्वमस्ति । तच्च नमुख्यं । "इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्ति"रितिस्वातंत्र्येणकर्तृत्वनिषेधात् । तथाचसर्वेषांचेतनानामचेतनानांचसर्वप्रकारेणभगवदधीनत्वस्यसिद्धत्वाद्युक्तंतस्यस्वातंत्र्यमितिसिद्धं ॥ ३६ ॥ इत्यचेतनप्रकरणंसमाप्तं ॥ १ ॥ ॥ ॥

एवमचेतनंनिरूप्याथास्वतंत्रचेतनंविभजति ॥ दुःखस्पृष्टमिति ॥ ननुचेतनाचेतनयोश्चेतनस्यप्राधान्यादचेतनस्याधमत्वात्कथमचेतनंप्रथमंनिरूपितं । "यस्याःसंबंधयोग्यत्वाज्जीवाअप्यवरामताः । तस्याजडायाःप्रकृतेरवरत्वेकसंशय" इतिगीताता

दुःखस्पृष्टंतदस्पृष्टमितिद्वेधैव चेतनं । नित्यादुःखारमान्येतु स्पृष्टदुःखाःसमस्तशः ॥ ३७ ॥

त्पर्येजडानांनीचत्वोक्तेरितिचेत्सत्यं । अचेतनव्युत्पादनस्याल्पत्वेनसूचीकटाहन्यायेन प्रधानस्यापिचेतनस्यपश्चाद्व्युत्पादनोपपत्तेः । ननु नजीवानांसर्वेषामपिजडापेक्षयोत्तमत्वंसंभवति । नित्यंश्रीहरिचरणारविंदविमुखतया शश्वदुद्रिक्तदुःखस्वरूपाणांतमोयोग्यानांसर्वथादुःखसंबंधशून्यजडापेक्षयानीचत्वात् । तथोक्तंगीतातात्पर्ये । "अथावरतरायेतुविमुखाश्चेतनाहरेः । नित्यदुःखैकयोग्यत्वान्नह्येतत्स्यादचेतन"इति । नच तमोयोग्यानांसंसारेकिंचित्सुखमस्ति नचतज्जडेषु । अतःकथंतेषांजडानीचत्वमितिवाच्यं । तत्सुखस्यात्युद्रिक्तदुःखसाधनत्वेनदुःखतुल्यत्वात् अन्यावेशोद्भूतत्वस्यवक्ष्यमाणत्वाच्च । जडेपुतदभा

वस्यैवगुणत्वात् । तथाचसर्वजीवानांजडाधिक्यायोगादुक्तमनुपपन्नमितिचेत् अत्रोच्यते । सत्यं तमोयोग्यानांजडाधमत्वमिति । किंतु तेषांचेतनत्वसाजात्येनोत्तममध्यमचेतनैःसहात्रनिरूपणमात्रं । अर्ध(च)जरतीयानुपपत्तेरितिसर्वमनाकुलं ॥ ३७ ॥ एतेजीवाइति ॥ "सदुःखीससुखीचैवसपात्रंबंधमोक्षयो"रितिवचनादितिभावः ॥ ३८ ॥ जीवानांमितत्वे मुक्त्यादिनापरिसमाप्तेः सर्वदाजगत्प्रवाहाभावः । हरेश्च जगज्जन्मादिकारणत्वानुपपत्त्यादिकंस्यादित्यतो जीवानंत्यंप्रमाणेनाह ॥ अनागताइत्यादिना ॥ ननुपरमाणूनांनित्यत्वात्कथमतीतानागताश्चेतिवचनं । मैवं । "रूपादिमत्त्वाच्चविपर्ययोदर्शना"दितिसूत्रकृतैवतद्

एतेजीवाइतिप्रोक्ताः शरीरेंद्रियबंधनाः ॥ ३८ ॥ अनागताअतीताश्च यावंतःसहिताःक्षणाः ।
अतीतानागताश्चैव यावंतःपरमाणवः ॥ ततोप्यनंतगुणिता जीवानांराशयःपृथक् ॥ ३९ ॥
तथाप्येकैकजीवस्य देहाद्यानंत्यमस्तिहि । वर्णाकृत्यादयस्तत्तद्व्यावृत्तिज्ञापका मताः ॥ ४० ॥

नित्यत्वस्यसमर्थितत्वात् ॥ पृथगिति ॥ ब्रह्मणांरुद्राणांदेवानांदानवानांमानवानांचेत्यादि । ननुपरमाण्वपेक्षयाजीवसंख्याधिक्यमयुक्तं । एकैकजीवस्याप्यतीतानागतदेहानांयावत्संसारेमिलित्वानंतानांसद्भावात् । तत्रैककदेहस्याप्यनेकपरमाण्वारब्धत्वेनातीतानागतयावत्कार्यपरमाणूनांजीवसंख्यापेक्षयानिरुपचरितानंत्यस्यैववक्तव्यत्वात् । अंततोलिंगदेहविवक्षयाजडानां जीवसमसंख्याकत्वावश्यंभावादित्यतआह ॥ तथापीति ॥ यद्यपीतिशेषः । तथापीत्यस्याचिंत्यमेत्यनेनसंबंधः । उक्तमन्यत्रापि

दर्शयति ॥ वर्णाकृत्यादयइति ॥ यद्यपि सर्वेष्वपिदेहेषुवैलक्षण्यंदृश्यते । तच्चव्यावर्तकधर्मसापेक्षं । व्यावर्तकधर्माश्च दीर्घ मध्यह्रस्वकुब्जत्वादयआकारविशेषाः । पीतश्यामरक्तकृष्णत्वादयो वर्णविशेषाः । मार्दवसौष्ठवकाठिन्यादयइत्यादिप्रकाराश्चा मितजातीयाएव । एवंच मितजातीयानां नविचित्रानंतदेहवैलक्षण्यज्ञापकता । अतोनसर्वदेहानांपरस्परवैलक्षण्यमुचितं । तथापि मितजातीयानामेववर्णाकृतिमार्दवादीनामीश्वराचिंत्यशक्त्यैवानंतदेहेषुपरस्परव्यावृत्तिप्रत्ययहेतुत्वमुपपद्यतएवेति ॥ ४१ ॥ दुःखस्पृष्टविभागमाह ॥ नीचेति ॥ यद्यपि तत्वविवेकादौमुक्तोऽमुक्तइतिद्वैविध्येनैवविभागःकृतः । तथापि मुक्तो

तथापि सर्वदेहादिवैलक्षण्यं हि दृश्यते । अचिंत्ययेशशक्त्यैव विरुद्धमपियुज्यते ॥ ४१ ॥
नीचमध्योच्चभेदेन जीवास्तेत्रिविधामताः ॥ ४२ ॥ नीचास्तत्रतमोयोग्या दुःखाज्ञानादिरूपिणः ।

धत्वायत्रित्वेनविभागकथनं । सृतिसंस्थाःसृतेर्मुक्ताइतिद्वैविध्यंचवक्ष्यति ॥ "ॐविशेषानुग्रहंचदर्शयतिःनित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमोवान्यथा"इत्यादिसूत्रसिद्धमेतत्त्रैविध्यं ॥ ४२ ॥ नीचक्रमेणत्रिविधजीवस्वरूपंदर्शयिष्यन् तमोयोग्य स्वरूपंसप्रपंचमाह ॥ नीचाइत्यादिना ॥ "मिथ्याज्ञानादयोखिलाः । स्वाभाविकागुणाज्ञेयाः, असुरादेस्तथादोषानित्याः स्वाभाविकाअपि । अनादिद्वेषिणोदैत्या"इत्यादिमानानि मनसिनिधायतलक्षणान्याह ॥ दुःखेति ॥ मिथ्याज्ञानहरितद्भक्त द्वेषनित्यदुःखप्राप्त्यादिहेतुभूतान्यनादीनि मोक्षयोग्यसलक्षणविरुद्धानि स्वरूपदेहचिह्नानिदुर्लक्षणान्युच्यंते । "सम्यग्दुर्लक्षण

युतःकलि"रितिनिर्णयेविशेषोक्त्याक्रमादितिज्ञायते ॥ ४३ ॥ तमोगुणैकप्रचुराइति मनुष्याधमानारभ्यकल्यंतानामुत्तरोत्त
रंतमोगुणप्राचुर्यंज्ञेयं । यथोक्तंगीतातात्पर्ये "नराधमास्तामसेषुसात्विकास्तत्रराजसाः । दैत्यभृत्या महादैत्यमुख्यास्तामसताम
सा"इति । ननुद्वितीयतात्पर्ये "तामसास्तामसादैत्याः प्रधानादेवशत्रवः । तामसाराजसास्तेषामनुगास्तेषुसात्विकाः । अना
ख्याताऽसुराःप्रोक्तामानुषादुष्टचारिणः । राजसास्तामसाश्चैवमध्याराजसराजसा"इति नराधमानांराजसतामसत्वमुच्यते त
त्कथं नराधमास्तामसेषुसात्विकाइति तेषांतामससात्विकत्वोक्तिविरोधादितिचेत् उच्यते । तमोयोग्यत्वमेवनराधमानामसुर
त्वमितिविवक्षित्वा अनाख्याताऽसुरामानुषादुष्टचारिणइतिसामानाधिकरण्येनवा अनाख्याताऽसुराः मानुषादुष्टचारिणश्चेतिच

अनादिद्वेषिणोविष्णौ दुर्लक्षणयुताःक्रमात् ॥ ४३ ॥ तमोगुणैकप्रचुरा जीवेषुबहुलाह्विते ।

शब्दसंबंधेनानाख्याताऽसुरादुष्टचारिणोमानुषाश्च तेषुसात्विकाइतियोजयित्वा राजसप्रभेदाः राजसतामसाः राजसराजसाश्च
मध्यमानित्यसंसारिणइतियोजनायां नराधमानांतामससात्विकत्वस्यैवलाभेन नविरोधः । युक्ताचैवंयोजना । विष्णौ किंचि
दप्रीतियुक्तास्तामसमध्येसात्विकाः नराधमाइत्यर्थइति स्पष्टंगीतातात्पर्ये नराधमानां तामससात्विकत्वोक्तेः । अतएवन्यायदी
पिकायां "नराधमास्तामसेषुसात्विका" इत्युक्तं । तेकीदृशाइत्यतआह । विष्णावितीत्येतद्वाक्यमवतारितं तत्रैवगीतातात्पर्ये "त्रै
विद्यमात्राविष्णोर्येसर्वाधिक्येससंशयाः । अन्याधिक्यंनमन्यंतेश्रीशाद्राजसराजसा"इतिनित्यसंसारिषुस्वर्गप्रचुराणांराजसरा

जसत्वमभिधाय अज्ञाविष्णौद्वेषहीनाःसर्वैराजसतामसा" इतितदन्यनित्यसंसारिणां राजसतामसत्वमुच्यते। नचतेपिनराधमा इतिवाच्यं। द्वेषहीनत्वानुपपत्तेः। तेनज्ञायते नमनुष्याधमानां राजसतामसत्वमपितु तामससात्विकत्वमेवेति। ननु "तामसे ष्वतुयेसत्वानिरयप्रचुरास्तुते" इतिभागवततात्पर्ये नित्यसंसारिविशेषाणां तामससात्विकत्वमुच्यते तत्कथमेतदितिचेन्न। अत्रसं सारेप्रायोनिरयावाप्तिस्तेषांपश्चादपितामिस्राख्यनित्यनिरयप्राप्तिरित्यभिप्रायेणैव तमोयोग्यानराधमाएव निरयप्रचुरशब्देनो च्यंते। अन्यथाबहुग्रंथविरोधात्। ननुच "दैत्याराजसतामसा" इतिगीताभाष्येकथंदैत्यानांराजसतामसत्वोक्तिरितिचेत् तत्र दैत्यानांरागादिदोषकलुषितत्वेनतामसराजसशब्दप्रतिपाद्यत्वमेवोच्यतेनतुराजसतामसप्रभेदत्वं। अतोनकश्चिद्विरोधइत्य

**मोघाशामोघकर्माणो घोरालोकभयंकराः ॥ ४४ ॥ असुराणांसुखाद्यास्तु देवावेशादुदीरिताः ।**

लंपल्लवितेन। "ॐअतस्त्वितरज्यायोलिंगाच्चे" तिसूत्राभिप्रेतमाह ॥ जीवेष्वित्युलाइति ॥ "सर्वंमोघंशुभंतस्ययोऽ वजानातिकेशवं। मोघाशामोघकर्माण" इत्यादिमानानुसारेणाह ॥ मोघाशाइति ॥ ननुकथंमोघकर्मत्वमसुराणां। तेषामैश्वर्यादेःपुण्यसाध्यत्वात्। आमुष्मिकंनकिंचिदाप्यतइतिनवाच्यं। दुर्योधनादेरपिस्वर्गप्राप्तेःप्रमितत्वादिति। सत्यं। "दक्षिणातर्पितानांतु आचार्याणांतुतेजसा। यांतिस्वर्गंततःक्षिप्रं तमोंधंप्राप्नुवंतिच। तदन्ये नैवचस्वर्गं यांतिविष्णुबहिर्मु खा" इतिगीतातात्पर्येगत्यंतरोक्तेः ॥ ४४ ॥ ननु तथापि कथंतेषांस्वर्गसुखानुभवः दुःखोपलब्धिमात्ररूपत्वात्। नच सुखैका

नुभवस्वरूपाणांमुक्तियोग्यानांकदाचिद्दुःखानुभववदेव तेषामपिस्यात्सुखानुभवइतिवाच्यं । स्यादेतत् अदृढद्वेषाणामितरेषां। दृढतरोद्रिक्तद्वेषाग्रहवत्त्वेनाभिव्यक्ताशेषस्वरूपदोषाणांकथंसुखलेशावकाशइत्यतएकादशतात्पर्यवचनंपठति ॥ असुराणा मिति ॥ अतएवोद्रिक्तभक्त्यादिमतांसुव्यक्तसद्गुणानाममराणामपिदुःखावाप्तावसुरावेशएवनिमित्तमितिवक्ष्यति । ननुसर्वा र्थवैपरीत्यज्ञाने दुःखादावपिसुखादित्वप्रकारकभ्रमःस्यात् । ततश्चसुखादिप्रकारकज्ञानस्योच्चताप्रयोजकत्वेन तद्भावोपिभवे दिति दुःखादेरनिष्टत्वंनस्यादितिचेन्न । "सर्वंज्ञानंधर्मिण्यभ्रांतं प्रकारेत्वविपर्यय"इतिन्यायेन दुःखादिधर्म्यंशे नविपरीतज्ञा

स्वतस्तुनिर्गुणाःसर्वे सर्वदोषात्मकामताः। सर्वार्थान्विपरीतांश्च पश्यंतिज्ञानदुर्बलाः ॥४५॥
विष्णोरूपेषुधर्मेषु तथैवावयवादिषु । भेदाभेदंचभेदंच संपूर्णगुणहीनतां ॥ ४६ ॥

नं । किंतु दुःखादेःसत्यत्वनित्यत्वस्वरूपत्वभगवद्द्वेषनिमित्तकत्वादिप्रकारेष्वेवान्यथाज्ञानं । तथादुःखसंपीडितत्वेननीचता दियुक्तानामपि भ्रांत्या नेदंदुःखं वस्तुतःसुखमेवेदानींदुःखतयाप्रतीयतइति दुःखादौसुखत्वादिप्रकारकप्रतीतिरपितेषांभवति। अतएव"दुःखेचसुखमानिन"इतिव्यपदेशः । तथाच"सर्वार्थान्विपरीतांश्चे"त्युपपन्नमिति । दुःखसाधनेसुखसाधनत्वमानिनइ त्यर्थ"इत्यप्याहुः ॥ ४५ ॥ "धर्म्यंशेअभ्रांतंप्रायोऽल्पज्ञानमपि तामसं । अज्ञानबहुत्वा"दितिगीतातात्पर्ये, बाहुल्यादल्पवेदि नामित्यनुव्याख्यानेचाभिहितं विपरीतज्ञानित्वं विविच्याह ॥ विष्णोरित्यादिना ॥ "वह्वयोहिबुद्धयोमतभेदा"दितिगीता

भाष्ये, "अनादिवासनायोगादि"त्याद्यनुव्याख्यानेच नानाप्रकारकमिथ्याज्ञानानांतत्ताद्यादिस्वरूपत्वमवगम्यते । मिथ्याज्ञान

क्वचित्क्वचिदशक्तत्वं छेदभेदव्रणादिकं । विकारित्वंचदुःखित्वं जन्म नाशंच बद्धतां ॥४७॥
अज्ञानंपारतंत्र्यंच प्रलयेऽभावमेवच । अगुणत्वमदेहत्वं तथाप्राकृतदेहतां ॥ ४८ ॥
अकर्तृत्वं तथा स्वल्पकर्तृत्वं स्वल्पशक्तितां । जडजीवाद्यभिन्नत्वं सत्वादिगुणयुक्ततां ॥४९॥
ब्रह्मरुद्रादिसाम्यंच नीचत्वंतदधीनतां । क्षुत्पिपासाजरारोगकार्श्यचिंताभयादिकान् ॥
वैषम्यादींश्च सृष्ट्यादौकारणापेक्षितामपि ॥ ५० ॥ तथैव ब्रह्मशक्तीशविघ्नसूर्यगुहादिनां ।
पृथक्सर्वोत्तमत्वंच साम्यंवानित्यमुक्ततां ॥ ५१ ॥ हरिभक्तिमृतेमोक्षं तत्वज्ञानंविनापिवा ।
हरिद्वेषान्मुक्तिमपि दानतीर्थादिभिस्तथा ॥५२॥ मुक्तावभेदंजीवानां साम्यंवाज्ञानहीनतां ।
अरूपत्वंतुजीवानां मुक्तानांबंधिनामपि ॥ ५३ ॥ परस्परमभेदंच जीवानामचितांतथा ।
मिथ्यात्वंचप्रपंचस्य ब्रह्मज्ञानेनबाध्यतां ॥ ५४ ॥ सर्वेषामपिमुक्तिंचाप्यप्रामाण्यंश्रुतेस्तथा ।
अतत्वावेदकत्वंच युक्तेर्दुर्बलतामपि ॥ ५५ ॥ इति नानाप्रकारेण मन्यंते तेकुबुद्धयः ।
दुराग्रहगृहीताश्च कुतर्कपरिनिष्ठिताः । हरिद्वेषपरानित्यं तद्भक्तद्वेषिणस्तथा ॥ ५६ ॥

विशेषास्तु "तिर्यङ्मानुपदेवादिविष्णुरूपेष्वशक्तते,त्यादिबृहद्भाष्ये,येऽसिमानेनमन्यंते,इत्यादिगीतातात्पर्ये, जीवाभेदोनिर्गु

णत्व"मित्यादिनिर्णये चस्पष्टोक्ताः ॥ ४५–५६ ॥ तत्वविवेकवचनेनैवतमोयोग्यान्विभजति ॥ एतइति ॥ तत्राप्यस्तिता रतम्यमित्याह ॥ पूर्वैपूर्वइति ॥ पूर्वपूर्वोक्ताइत्यर्थः ॥ ५७ ॥ दैत्येषुकिंचिद्विवृणोति ॥ दैत्येष्विति ॥ "देहेंद्रियप्राणधियांत्रिधैवह्यभिमानिन"इत्युपक्रम्य "असुराअधमामताः । अधमःकलिरुद्दिष्ट"इत्याद्युक्तमेकादशतात्पर्ये । तत्र"कामःकालने

एते चतुर्विधाःप्रोक्ता दैत्यरक्षःपिशाचकाः । मर्त्याधमाइतिह्येव पूर्वैपूर्वेऽधमामताः ॥ ५७ ॥
दैत्येष्वपिमहादैत्याः कालनेम्यादयोवराः । दीनत्वाद्देवनामानो ब्रह्मेंद्रादिसनामकाः ॥५८॥
तेहि दुष्कामदुर्बुद्धिशरीरेंद्रियमानिनः । काममानीकालनेमिर्द्वापरोदेहमानवान् ॥
दुःखिजीवाद्यभीमानी कलिःसर्वाधमाधमः ॥५९॥ मृतिजन्मक्षुधादुःख प्रभृत्यखिलमेवच ।
देहाभिमानिनांतुस्यात्स्वाभिमानानुसारतः ॥६०॥ जीवमानिकलेस्तुस्यात्सर्वंतत्समुदायतः ।
तस्मादज्ञानपापादि हेतुकंमुख्यतःफलं । सर्वप्राणिगतंचापि तएवाप्नुयुरंजसा ॥ ६१ ॥

मि"रितिगीताभाष्ये । "दुःखद्वैपौकलिश्चैवद्वापरोब्रह्मणःसुतौ । प्रवरावसुराणांता"विति गीतातात्पर्ये ॥ '१८ ॥ ५९ ॥ तेषां देहाद्यभिमाननिमित्तकमवांतरफलंचक्रमेणाह ॥ मृतीति ॥ तच्चोक्तमेकादशतात्पर्ये । "जन्मादिकृतदुःखंतुदेहमान्यसुरस्यहि । क्षुत्स्याद्यप्ययजंदुःखंबुद्धिमान्यसुरस्यच । नीचोस्मीतितुयद्दुःखमहंमान्यसुरस्यतत् । अतीतादिस्मृतेर्दुःखंचित्तमान्य

सुरस्यतत् । जीवमान्यसुरस्यस्यात्सर्वंतत्समुदायत"इति । अनुव्याख्यानेच "एवंचकलिपूर्वाणामसुराणांमहत्फलं । अशुभेषु सदैवस्यान्मिथ्याज्ञानादिकेषुचे"ति ॥ ६० ॥ ६१ ॥ "तेप्येवंब्रह्मवद्गणाः । तथान्येप्यसुराःसर्वेगणायोग्यतयासदे"तिनिर्णय वचनंमनसिनिधायाह ॥ कल्यादीनामिति ॥ दैत्यानांब्रह्मकल्पपर्यंतमवस्थानमितिसंप्रदायविदः । तेप्येवंब्रह्मवद्गणाइति स्पष्टंचतुर्मुखगणसादृश्योक्तेः । एकादशतात्पर्ये"आभूतसंप्लवाज्जन्मजीवेशत्वंविजानतः । ततःपतत्यधोयस्मादुत्थानंनैवचक्क चित्"इत्युक्तेश्च । अत्रजीवेशत्वंविजानतइत्यनादितोजीवेश्वरज्ञानिनोदैत्याविवक्षिताः । तेषामनादितोदुर्योगत्वात् । भूत संप्लवोमहाप्रलयः । ननु "मंथरातुतमस्यंधेपातितादुष्टचारिणी । सीतार्थेयेप्यनिंदंस्त्वांतेपियातामहत्तमः । प्रायशोराक्षसा

कल्यादीनांपदानांच योग्याःसंतिपृथग्गणाः ॥ ६२ ॥

श्चैवत्वयिकृष्णत्वमागते । शेषायास्यंतितच्छेषाअष्टाविंशेकलौयुग"इति तथा"दुर्योधनाद्यायदिमेसुपापाआरब्धपुण्यक्षयमाप्य नित्ये । निश्शेषसौख्योज्झितनित्यदुःखेऽवशाःपतिष्यंत्यपुनर्निवृत्ता"इत्यादौनिर्णये, "दक्षिणातर्पितानांतु आचार्याणांतुते जसा । यांतिस्वर्गंततःक्षिप्रं तमोंधंप्राप्नुवंतिचे"तिकल्यादिस्वरूपिणांदुर्योधनादीनांकृष्णरामाद्यवतारेष्वेवतमःप्राप्तिश्रवणात् कथंयावद्ब्रह्मकल्पावस्थानं । विरोधादितिचेन्न । अलक्ष्मीकल्यादीनां मंथरादुर्योधनादिभूगतांशैस्तमःप्राप्तिमंगीकृत्योदाहृत वाक्यानांतत्परत्वस्वीकारात् । मूलरूपैर्यावद्ब्रह्मकल्पावस्थायित्वोररीकरणेनतद्वाक्यविरोधाभावात् । उदाहृतोभयविधवा क्यान्यथानुपपत्तेरेवतत्कल्पकत्वात् । किंच "भूमिगायाअलक्ष्म्या"इत्युक्तालक्ष्म्यवतारभूतमंथरायाः "मंथरातुतमस्यंधेपाति

ते"तिरामावतारसमयेतमःप्राप्तिःश्रूयते। पातितेत्यतीतार्थकनिष्ठाश्रवणात् । तस्याएवपुनःकृष्णावतारेदुर्योधनपत्नीत्वेनज ननमुच्यते "साक्षान्नरेषुजनितांप्रथमामलक्ष्मी"मिति। नचेयंक्षीराब्धिमथनजाता किंतुतदन्येतिवाच्यं । रामावतारात्पूर्व मेवह्यब्धिमथनं । विविदमैंदयोस्तदैव "असुरावेशतस्तौतुनराममनुजग्मतुः । पीतामृतौपुरायस्मान्ममतुर्नचतौतदा"इतिपी तामृतत्वोक्तेः । तथाच वैवस्वतांतरेक्षीरसमुद्रोत्थालक्ष्म्यामंथरारूपेणतमःप्राप्तिर्मूलरूपेणावस्थानं । ततःपुनारूपांतरेण दुर्योधनभार्यात्वेनचजननमित्यवश्यंवक्तव्यं । अपिच दुर्योधनादीनांस्वर्गंप्राप्तानामारब्धपुण्यक्षयमाप्यपतिष्यंतीति पुण्य क्षयोत्तरक्षणएव तमःप्राप्तिःश्रूयते। "नाकस्यपृष्ठेसुकृतेतेऽनुभूयइमंलोकंहीनतरंवाविशंती",त्याथर्वणभाष्ये "साम्यंहीनत्वं वाजानंतोहीनतमंतमएवाविशंती"ति दुर्योधनादीनामाचार्यप्रसादोत्तेजितपुण्यानांस्वर्गंप्राप्तानांततश्च्यवनानंतरंसद्यस्तमःप्रा प्तेरभिधानाच्च । किंचोदाहृतगीतातात्पर्ये "यांतिस्वर्गंततःक्षिप्रंतमोंधंप्राप्नुवंतिचे"तिस्पष्टमुक्तेश्च । एवं दुर्योधनादीनांस्व र्गात्पातानंतरमेवतमःप्राप्तेर्निश्चितत्वेन । तेषांसामस्त्येनतमःप्राप्तौ कलियुगेकल्याद्यभावःस्यात् । नचायमन्यःकलिरि तिवाच्यं। मणिमंजर्यां "कृष्णेभीमेचविद्वेषमधिकंदधतोसुराः। भग्नबाहुबलाईषुर्वाग्युद्धैस्तत्वविप्लवं। रहःसंभूय ते सर्वे बुद्धि मंतोन्यमंत्रयन्। कृष्णोदैवंगुरुर्भीमोवेदविद्याचपार्षती। तस्याउत्सादनेनैवयातस्तावतिसंकट"मित्यादिना दुर्योधनादिस्वरूपा णांकल्यादीनां श्रीकृष्णभीमकृष्णासु प्राचीनद्वेषानुस्मरणेनतत्प्रतीकारायशकुन्यंशिनाद्वापरेणसहालोचनाप्रकारमभिधाय "एवमुक्ताद्वापरेणकलिपूर्वाःसुरद्विषः। हृष्टाआहूयसंभाव्य मणिमंतंबभाषिरे"इतिकलियुगेसंकरादित्वेन मणिमदादिदैत्यावता

रार्थसंमंत्रणोक्तेः कलियुगप्रवर्तककल्यादयएवप्राग्दुर्योधनादयइतिज्ञायंते। तेषांचतमःप्राप्तेर्निश्चितत्वेनांशतस्तमःप्राप्तिरंशतोऽवस्थानमितिनिश्चीयतइति। किंच "तेहताभीमसेनेनप्रापुरंधंतमोखिला" इतिनिर्णये क्रोधवशानांतमःप्राप्तिमभिधाय "हतःसौगंधिकवनेमणिमांश्चपुनःकलौ। जातोमिथ्यामतिंसम्यगास्तीर्यायात्तमोधिक" मिति मणिमतएकस्यैवतदातमःप्राप्त्यभावोभिधीयते। तेनज्ञायते तदन्यक्रोधवशानांतदैवतमोस्तीति। तेषामेवचपुनःकलियुगे तत्ववादाचार्यावतारसमये "यजंतआपुःपरमांगतिंतन्नसेहिरेक्रोधवशाहिदैत्याः। शैवंतपस्तेविपुलंविधाये" त्यादिनाभुव्युत्पत्तिश्रवणात् भीमसेनहतांशेनतमःप्राप्तिः मूलरू

तामसानांचसर्वेषां यदाद्वेषो(भिवर्धते)विवर्धितः। हरौतदात्वनारब्धं
पुण्यमिष्टंविनश्यति। नश्लिष्यतेचोत्तरंतु दुःखवैचित्र्यकारणं ॥ ६३ ॥

पाद्विभक्तांशांतरेणभुविजातत्वमितिस्वीकर्तव्यं। तथाच कल्यादीनांमहाकल्पावस्थानंयुज्यतएवेति। ननुकल्याद्यंशानांदुर्योधनाद्यंशेनतमःपाते "अंशिनोंशेऽनुसंधानमत्यल्पस्यापिविद्यत" इतिन्यायेनांशिनःकल्यादेरत्युद्रिक्तदुःखानुसंधाननियमादीषदपिसुखंनस्यात्। श्रूयतेचैश्वर्यनिमित्तकंसुखं। अतोविरोधइतिचेत्सत्यं। स्वतोमहादुःखानुभववत्त्वेसुखासंभवेपि "असुराणांसुखाद्याश्चदेवावेशादुदीरिता" इत्युक्तेर्देवावेशेनसुखोपपत्तिरिति ॥ ६२ ॥ एतेषांतमःपातासाधारणकारणंदर्शयंस्तत्प्रकारमाह ॥ ॥ २८ ॥

तामसानामिति ॥ तमोयोग्यानामित्यर्थः। यदातुज्ञानिसद्भावेनैवगृह्णंतितत्परं। असुराणांतमःप्राप्तिस्तदानियमतोभवेदि

तिनिर्णयवचनादितिभावः । द्वेषस्तु "जीवाभेदोनिर्गुणत्वमपूर्णगुणतातथा । साम्याधिक्यंतदन्येषामभेदस्ततएवच । प्रादुर्भावविपर्यासस्तद्भक्तद्वेषएवच । तत्प्रमाणस्यनिंदाचद्वेषाएतेऽखिलामता"इतिनिर्णयोक्तप्रकारेणनवविधोद्रष्टव्यः । "तदात्वनारब्धमितितु ॐइतरस्याप्येवमसंश्लेषःपातेतु, तथाऽश्लेषोविनाशश्चमुक्तस्यतुविकर्मणः । एवंसुकर्मणश्चापिपततस्तमसिध्रुवं । हीनंचब्रह्मपश्यतः, द्विषतोवाभवेत्पुण्यनाशोनास्त्यत्रसंशयः । तस्याप्यारब्धकार्यस्यनविनाशोस्तिकुत्रचि"दितिभाष्येणावगम्यते । अयमत्रसमुदायार्थः । तमोयोग्यानांकर्म द्विविधं पुण्यंपापंचेति । तत्रभगवद्वेषदार्ढ्यात्तत्पूर्वभाविनः

पापंप्रारब्धपुण्यादि त्वनुभूयततःपरं । पतंतिचांधेतमसि द्विषंत्यत्रापिकेशवं ॥६४॥
पूर्णदुःखात्मकोद्वेषः सोनंतोह्यवतिष्ठते । पतितानांतमस्यंधे निःशेषसुखवर्जिते ॥

पापस्यद्वेषदार्ढ्योपयोगित्वं । उत्तरस्यतुतमसिदुःखातिशयेहेतुत्वं । पुण्यंचद्विविधं प्रारब्धमप्रारब्धंचेति । प्रारब्धंचद्विविधं इष्टमनिष्टंचेति । इष्टत्वादिकंतुवस्तुतःफलापेक्षयानतुतद्बुद्ध्या । एवमेवद्वेषदार्ढ्योत्तरभाविपुण्यमपिद्विविधं । तत्रद्वेषदार्ढ्ये सतिपूर्वोत्तरेष्टपुण्यानांनाशाश्लेषौ । कुरुवंशादौजननादिकारणीभूतानांवस्तुतोनिष्टानांपुण्यकर्मणांकृष्णकृष्णावृकोदरादिमहद्द्रोहद्वारातमसिदुःखातिशयवैचित्र्यहेतुत्वेनसाफल्यं । प्रारब्धपुण्यपापयोर्भोगनाश्यत्वमेव । भोगेप्यतिदुःखवैचित्र्यापादकपापहेतुत्वंतयोः । तत्रापिपुण्यस्योपमर्दः । काम्यत्वादिविवेकस्तुतत्रनास्ति । निवृत्तस्याप्रसक्तत्वादिति ॥६३॥६४॥

तमस्यपिद्वेषोदुःखरूपतयानुवर्ततइतिनिर्णयवचनेनाह ॥ पूर्णेति ॥ "चिन्मात्रद्वेषदुःखेन्चदेहोमिथ्यादृगात्मकः । निपि द्वेच्छाचयत्रस्युर्नित्यासामुक्तिरासुरी"तिगीतातात्पर्यवचनंमनसिनिधायाह ॥ मिथ्याज्ञसीति ॥ ६५ ॥ प्रकृततमः स्वरूपंविष्णुतीर्थीयवचनेनाह ॥ तमःसंज्ञमिति ॥ मनुष्याधमादिप्राप्यंनित्यनरकंतामिस्रमित्युच्यते । अंधतामिस्रपदेनतु सप्तकोटियोजनायामंलोकालोकपर्वताद्बहिर्गतंमहातमः । तच्चोर्ध्वमध्याधरभेदेनत्रिविधं । ॐअपिसस, नतृतीयेतथोपलब्धेः,

मिथ्याज्ञसिद्वेषदुःख मुखदोषात्मदेहिनां ॥ ६५ ॥ तमःसंज्ञंचनरकं नित्यंद्विविधमीरितं ।
तामिस्रंचांधतामिस्रं तत्राद्यंत्रिविधंस्मृतं ॥६६॥ ऊर्ध्वंमध्यंचाधरंतु श्रवणादेवमारकं ॥६७॥
यत्रमग्नावायुभृत्यै र्बाध्यमानाइतस्ततः । अत्युद्रिक्तंमहद्दुःखं सदैवानुभवंतिहि ॥ ६८ ॥
असुराःकलिपर्यंता एवंदुःखोत्तरोत्तराः । कलिर्दुःखाधिकस्तेषु द्वेषाधिक्याज्जनार्दने ॥ ६९ ॥

इतितमोयोग्यचेतनप्रकरणं ॥ २ ॥

स्मर्यतेपिचलोके, तृतीयेशब्दावरोधःसंशोकजस्य, स्मरणाच्च, महातमस्त्रिधाप्रोक्तमूर्ध्वंमध्यंतथाधरं । श्रवणादेवमूर्च्छादिरघर स्ययतोभवे"दित्यादिनाभाष्येतदवगतेः ॥ ६६ ॥ ६७ ॥ वायुभृत्यैरिति ॥ "किंकरैःपंकिलेते"इतिवायुस्तुतौ ॥ ६८ ॥ दुःखतारतम्यंनिर्णयवचनेनवदन्हेतुमाह ॥ असुराइति ॥ ६९ ॥ इतितमोयोग्यचेतनप्रकरणं ॥ २ ॥

अथनित्यसंसारिचेतनस्वरूपंदर्शयति ॥ नित्येति ॥ तद्विशदयति ॥ सदेति ॥ "चोष्कूयतेविशद्वंद्रोमनुष्यान्, पुनःपुनर्मनुष्यांस्तुसृतावावर्तयत्यजः, त्रिदिवनिरयभूगोचरान्नित्यबद्धान्, नित्यावर्तास्तुमध्यमाः, सृतियोग्याःसदैवही"त्यादिवचनादिति भावः । वादिराजस्वामिनस्तु "नित्योपलब्ध्यनुपलब्धिप्रसंग" इतिसूत्रे व्यत्त्यनंगीकारइत्यादिभाष्यस्य "तेषांयदन्यथाद्दश्यंतदुपाधिकृतंमतं । विज्ञानेनात्मयोग्येन निजरूपेव्यवस्थितिः । सम्यग्ज्ञानंतुदेवानां मनुष्याणांविमिश्रितं । मानुषासिश्रमतयो विमिश्रगतयोपिचे"ति वचनस्यसद्भावान्मध्यमानामपि लिंगभंगोस्त्येव । परंतुतेषांसर्वदासुखदुःखोभयमिश्रत्वमेवेतिमन्यंते । तदन्येतु तत्रकदाचिच्छुभगुणप्रतिबंधेनदुष्कर्मादिकरणे निरयादिदुःखं अशुभप्रतिबंधेनसत्कर्मादिकरणे स्वर्गादिसुखं स्वरूपानुसारेणोभयविधकर्म । निजमिश्रज्ञानप्राप्तौ निजरूपेव्यवस्थितिरिति । "एवमनेवंचमनुष्याः मानुषास्तूभयात्मका" इतिश्रुतिस्मृती "गुणदोषौमनुष्याणां नित्यौस्वाभाविकौमता" वितिगीताभाष्यं "मनुष्याणांविमिश्रितं" इत्यादिवचनंच मनसिनिधायतल्लक्षणमाह ॥ गुणेति ॥ गुणदोषोभयस्वरूपत्वेपि क्वचित्सुखस्यैव क्वचिद्दुःखस्यैवानुभवइत्यादिकमन्यतरप्रतिबंधेनेतिमंतव्यं । स्वरूपप्रतिबंधादेवांतःकरणोपादानकसुखाद्यनुभवोपि । अत्रमिश्रज्ञानित्वंनाम नसर्वत्रसंशयवत्त्वं । विष्णावीषदुत्तमत्वप्रकारकज्ञानवत्त्वस्यवक्ष्यमाणत्वात् । किंनाम क्वचित्प्रमाणं क्वचिदप्रमाणमिति मिश्रितत्वमितिना सर्वत्रप्रकारविशे

नित्यसंसारिणोयेतु मध्यमास्तेप्रकीर्तिताः । सदासंसृतिबद्धाश्च गुणदोषोभयात्मकाः ॥ ७० ॥

पेपुसंशयरूपत्वंवा मिश्रत्वं । अतएव सर्वाधिक्येससंशयाइत्यत्र सर्वप्रकारेणाधिक्यइतिन्यायदीपे । "यथार्थत्वनियमाभा वोराजस्या"इतिगीताभाष्येच प्रकारएवसंशयरूपत्वमुपपादितं ॥ ७० ॥ रजोगुणप्रधानाश्चेत्युपलक्षणं । समरजस्तमसश्चेति चज्ञातव्यं । "रजोभूयान्समोवासृतिपात्रक"इतिगीतातात्पर्योक्तेः । लक्षणालक्षणैःसमाइति निर्णयवचनमेव । अत्र लक्षणसद्भावात्तमसोऽभावः दुर्लक्षणसद्भावेनमोक्षाभावइतिहृदयं । अत्र एतेस्वर्गभूनिरयप्रचुरभेदेन त्रिविधाइत्येकःपक्षः । स्वर्गनिरयप्रचुरभेदेन द्विविधाएवेत्यपरःपक्षः । तत्रस्वर्गप्रचुरज्ञानंनिरूपयति ॥ तत्रेति ॥ ७१ ॥ अर्पयंतीत्युपलक्षणं ।

रजोगुणप्रधानाश्च लक्षणालक्षणैःसमाः । तत्रोच्चाराजवद्विष्णोः सर्वाधिक्येससंशयाः ॥ ७१ ॥
जानंत्यथापिब्रह्मादि देवानांपरिवारतां । नजानंतिपृथग्देवा निष्ठाप्यंतेजनार्दने ॥
अर्पयंत्यतएवैतै मुख्यस्वर्गप्रयांतिहि ॥ ७२ ॥ निषिद्धकर्मकरणा त्पुनश्चनिरयादिषु ।

आदौतत्पूजात्वेन संकल्पंचकुर्वंतीत्यपिग्राह्यं ॥ ७२ ॥ नैतेषांयज्ञेननिरयप्रचुरवन्निरयः । किंतुनिषिद्धकर्मणैवेत्याह ॥ निषिद्धेति ॥ यथोक्तंगीतातात्पर्ये "सर्वाधिक्यंविष्णोर्ज्ञात्वापि ब्रह्मरुद्रादीनांपरिवारतामजानतामिदंफलमिति । सर्वा धिक्यंचसामान्यतएवनिश्चिन्वंति । तत्प्रकारेतुसंशयएव । अतएव परिवारत्वमजानतामित्युक्तं । "त्रैविध्यमात्राविष्णोर्ये सर्वाधिक्येससंशयाः । अन्याधिक्यंनमन्यंते श्रीशाद्राजसराजसा"इत्युक्तेश्च । उक्तश्च यज्ञेननिरयाभाव एकादशतात्पर्ये

"भुङ्क्तेस्वर्गफलंनित्यं निरयंनैवगच्छती"ति । यज्ञेनस्वर्गंप्राप्यतच्छेषेणनिरयंनैवगच्छतीत्यर्थः । "ईषद्भक्तोभगवति सुकर्मा स्वर्गमेष्यती"तितृतीयतात्पर्यं । तदन्यनित्यसंसारिस्वरूपंनिरूपयति ॥ अन्यइति ॥ ७३ ॥ विष्णोर्ब्रह्मादिदेवानांचस्वरूपं सम्यगज्ञात्वायज्ञकरणाद्व्यामिश्रयाजिनः । तेषांज्ञानंश्रद्धांफलंचवदन् गीतातात्पर्यवचनमर्थतःपठति ॥ विष्णवाधिक्य इति ॥ संकल्पसमर्पणादिकं नतेषामस्तीतिभावः ॥ ७४ ॥ विशेषस्तेषुविज्ञेयइति ॥ त्रैविध्यपक्षे विष्णवाधिक्यज्ञानं देवतामात्रेसामान्यतःश्रद्धाच भूप्रचुराणांविष्णवाधिक्येईषत्संशयः श्रद्धान्यूनताच निरयप्रचुराणामित्येवं भूप्रचुराणांनिर

> अमंतिप्रायशःस्वर्ग भाजोह्यन्येतुराजसाः ॥ ७३ ॥ व्यामिश्रयाजिनस्तेस्यु र्विष्णवाधिक्येस
> संशयाः । स्वरूपमात्रेदेवानां श्रद्धायुक्ताश्चसर्वदा ॥७४॥ विशेषस्तेषुविज्ञेय स्तैरिष्टंभक्षराक्षसाः ।
> गृह्णंतिदीनदेवाश्च स्वर्गंसांकल्पिकंततः । प्रयांतिदुःखप्रचुरं दीनदेवाश्रयंसदा ॥ ७५ ॥

यप्रचुराणांचावांतरविशेषोज्ञेयइत्यर्थः ॥ दीनदेवाइति ॥ "ब्रह्मेंद्रादिसनामका"इतिचग्राह्यं । मुख्यदेवानगृह्णंतीतिशेषः । तदुक्तंतंत्रसारे"विष्णुस्मृतिविहीनातु पूजास्यादासुरीमता । गृह्णंतिदेवतानैता"इति । स्वर्गप्रतिनिधित्वेनकल्पितःअंतरिक्षगतो लोकःसांकल्पिकःस्वर्गः । नैतावतातत्रसुखंमंतव्यमित्याह ॥ दुःखप्रचुरमिति ॥ ७५ ॥ स्वर्गकामनयायज्ञकरणात्कुतो मुख्यस्वर्गानवाप्तिरित्यतस्तेषां नकेवलंस्वर्गाभावः प्रत्युत यज्ञकर्मशेषेणनरकंचभवति । विष्णौश्रद्धाभावादयोग्यस्वर्गकाम

६ स. ए.

नाञ्चेतिभावेन गीतातात्पर्यवचनमेवपठति ॥ विष्णाविति ॥ अत्र नरलोकगाइत्युक्त्या राजसेषुमध्यमाएवविवक्षिताः नतु नित्यत्रैविद्याइतिज्ञातव्यमितिन्यायदीपे । अत्रैवंकेचित्संप्रदायविदआहुः । "यागात्तुराजसात्स्वर्गः सांकल्पिकउदाहृतः । लोकःसदीनदेवानां सनाम्नांवासवादिभिः । विष्णावश्रद्धयाऽयोग्य कामाच्चैषांपुनर्भवेत् । नरकंच"तिगीतातात्पर्यवचनं निर यप्रचुरविषयं । व्याख्यानंतु "उक्तरीत्याविनायज्ञं राजमानरलोकगाः । निषिद्धंकर्मकुर्युश्चे दीयुस्तेनरकंध्रुव"मित्यंशस्तु भूप्र चुरपरः । टीकायां नरलोकप्राचुर्योक्त्या मध्यमाविवक्षिताइत्युक्तेः । एवंच नरलोकगाभूप्रचुराः विनायज्ञंवर्तंते तेषांयज्ञा

विष्णावश्रद्धायाऽयोग्य कामाच्चेषांपुनर्भवेत् । नरकंचविनायज्ञं राजसानरलोकगाः ॥७६॥

निषिद्धंकर्मकुर्युश्चे दीयुस्तेनरकंध्रुवं । भ्रमंतिराजसा हीत्थंभूस्वर्गनिरयादिषु ॥ ७७ ॥

॥ इतिनित्यसंसारिचेतनप्रकरणम् ॥ ३ ॥

ष्ठानमेवनास्तीतियावत् ॥ ७६ ॥ तेषांनरकसाधनमाह ॥ निषिद्धमिति ॥ उत्सर्गतोभूप्रचुराणांयज्ञाभावान्मुख्यःस्वर्गोवा सांकल्पिकस्वर्गोवा नास्ति । प्रायोभूमावेववर्तंते । निषिद्धकर्मकरणान्निरयावाप्तिस्तुस्यात् । तथाच नित्यत्रैविध्यांशिकाः स्वर्गप्रचुरा राजसोत्तमाः । नरलोकगशब्दोक्तभूप्रचुराः राजसमध्यमाः । निरयप्रचुरा राजसाधमाः । अन्यथा टीकायांमध्यम शब्दानुपपत्तेः । "त्रिदिवनिरयभूगोचरान्नित्यबद्धा"निति स्फुटंत्रैविध्योक्तेश्चेति । अन्येतु द्विविधाएवराजसाः स्वर्गनिरय

प्रचुरभेदेन । विनायज्ञमित्यादेस्तु यज्ञेनसांकल्पिकस्वर्गः तच्छेषेणनिरयश्चभवतीत्युक्तं । यज्ञाभावदशायांकिंस्यादतउक्तं विनेति । यज्ञंविनाचेन्नरलोकेष्वेवस्थिताःस्युः । ननु तेषांयज्ञाभावमात्रेणकथंनिरयाभावइत्यतउक्तं निषिद्धमितीत्येकवाक्य तयायोजना । राजसाइत्युक्त्या नित्यत्रैविद्याइतिप्रतीतिःस्यात् तांनिवारयितुमत्र नरलोकप्रचुरत्वोक्त्येतिटीकावाक्यं । राजसेषुमध्यमाइत्युक्तिस्तूत्तममात्रव्यावृत्त्यर्था । नत्वधमसद्भावाभिप्राया । कुतएवंकल्प्यतइतिचेत् एतद्वाक्यस्यैवसावकाश त्वान्निरवकाशप्रमाणाभावाच्च । वायुस्तुतिवाक्यस्यत्रिदिवादिस्थानत्रये संचारमात्राभिप्रायकत्वेन सावकाशत्वाच्चेतिमन्यंते । नित्यसंसारिप्रकरणमुपसंहरति ॥ भ्रमंतीति ॥ परिवर्तंतइत्यर्थः ॥ ७७ ॥ ॥ ॥ इतिनित्यसंसारिचेतनप्रकरणं ॥ ३ ॥

उच्चास्तुमोक्षयोग्याहि सदानारायणप्रियाः । सज्ज्ञानानंदवैराग्यभक्त्या

दिगुणरूपकाः ॥ ७८ ॥ क्रमात्सत्वप्रधानाश्च सल्लक्षणयुतास्तथा ।

अथेदानीमुत्तमजीवस्वरूपंसप्रपंचंनिरूपयति ॥ उच्चास्त्वित्यादिना ॥ निर्दुःखनिरतिशयानंदानुभवरूपोहि स्वतउत्तमोजीवः । "भक्तिज्ञानादयस्सर्वे सर्वेषामप्यनादयः"इतिबृहद्भाष्ये, तद्गुणसारत्वादित्यादिषुस्पष्टमेषोर्थोवगम्यते ॥ ७८ ॥ क्रमात्स त्वप्राधान्यं गीतातात्पर्ये "विप्राराजससात्विकाइत्यारभ्य सत्वाधिकःपुल्कसोपियस्तुभागवतस्सदेत्याद्यभिधाय सत्त्वसत्त्व महासत्त्वसूक्ष्मसत्त्वश्चतुर्मुख इत्यंतंस्फुटतरमुपपादितं । एकादशतात्पर्यादौस्फुटोयमर्थः ॥ सल्लक्षणयुतास्तथेति ॥ क्रमा

दित्यनुवर्तते । "द्वात्रिंशल्लक्षणैर्युक्ताः सम्यग्वायुत्वयोगिनः । अष्टाविंशल्लक्षणास्तु गिरीशपदयोगिनः । चतुर्विंशतिमारभ्य षोडशादासुरास्स्मृताः । अष्टकादृषयःप्रोक्ता स्तदूनाश्चक्रवर्तिन" इत्यादिना लक्षणक्रमोद्रष्टव्यः । वायुत्वयोगिनइत्यत्र भारतीत्वयोगिनोपिग्राह्याः ॥ प्रतिबिंबाःपरेशितुरिति ॥ बिंबभूतोहिपरमेश्वरः । जीवास्तत्प्रतिबिंबाः । तदधीनत्वेसतितत्सदृशत्वंप्रतिबिंबत्वं । तच्चोक्तं "भिन्नत्वतदधीनत्वतत्सादृश्यैरेवसूर्यकाद्युपमे"ति । एतदेवह्याभासएवचेत्यादिसूत्रादिषुनिर्णीयते । तत्रसर्वस्यभगवदधीनत्वंसिद्धमेव । सादृश्यंतुकथमितिचेत् भगवद्गुणसदृशगुणवत्त्वादितिब्रूमः । उक्तंच तद्गुणसार

नित्यचिद्रूपयोपाध्या प्रतिबिंबाःपरेशितुः ॥ ७९ ॥

त्वादित्यादौ । सादृश्यंच ज्ञानानंदादिमत्त्वेनकिंचिदेव । यद्यप्यानं (दोनेदृशानं) दइत्यादेरतिविलक्षणएवेश्वरानंदादिः । नतत्सादृश्यमन्यस्य क्वचित्किंचित्केनचित्प्रकारेणापि शक्यतेवक्तुं । "उपमयेयमुच्यते, नैकांशसममाहात्म्याः श्रीशेषब्रह्मशंकरा" इत्याद्युक्तेः । तथापीश्वराचिंत्यशक्त्या संपादितमत्यल्पाल्पतममनुकूलवेदनीयत्वादिरूपं किंचित्सादृश्यमस्तीतिज्ञेयं । स्पष्टंचैतत्तत्त्वप्रकाशिकायां । आकारसादृश्यंचास्ति । तदुक्तंगीतातात्पर्ये । "स्त्रीपुंस्वरूपिणः । हरेःसादृश्यमस्यस्यादनादिक्रमसुस्थिर" मिति । एतेन ब्रह्मादिस्थावरांतजीवानां साक्षाद्भगवत्प्रतिबिंबत्वेपि नैकप्रकारता किंतु क्रमादेवेतिलभ्यते । अतएवक्रमाद्भगवत्प्रतिबिंबानांजीवानांगुणकर्मलक्षणादौतारतम्यं । एतेन खगमृगपशुपिपीलिकावृक्षलतातृणादिस्वरूपजीवानामपि

तत्तदाकारकभगवत्साद्दश्यमस्त्येव । भगवतिसर्वाकाराणांनित्यसिद्धत्वादितिज्ञायते । ननु "तत्तदाकारसंयुक्तान्सृज्यान्स्रष्टारमेवचे"ति चेतनाचेतनात्मकाशेषप्रपंचस्यापिभगवदाकारसाद्दश्यवत्त्वात्सत्त्वचित्त्वादिरूपधर्मसाद्दश्यसद्भावाद्भगवदधीनत्वाच्च सर्वस्यापिभगवत्प्रतिबिंबत्वंस्यादितिचेत् कोनेत्याह । वक्ष्यतिच "चिच्चेत्यमेतदखिलमंशांशप्रतिबिंबित"मिति । तर्हि किमितिमुक्तियोग्यानामेव विशिष्यभगवत्प्रतिबिंबत्वोक्तिरितिचेत् ज्ञानानंदादिपरममंगलभगवत्साद्दश्यस्यैतेष्वेवभावात् तदुपकाराधिक्येन तदधीनतायाअप्याधिक्यान्मुख्यविवक्षयाविशिष्योक्तिः । तदुक्तं "जडानांद्वयमेवतु । भवेत्साद्दश्यमल्प"मित्यनुव्याख्यानसुधायां पृथगधिकरणे"सत्यमस्तिसाद्दश्यं । किंतुतत्सत्तादिनैव । नतुजीववज्ज्ञानानंदादिना । अतो द्वयस्यैवसत्त्वादुपपन्नाप्रचुरोक्तिरिति । अतएव यथागुणाधिक्यंतथासाद्दश्यं तदधीनत्वंचाधिकमिति प्रागुपपादितं । नकेवलमत्रधर्मिणामेवभगवत्प्रतिबिंबताविवक्षिता अपितुतत्तद्गुणादीनामपि भगवद्गुणप्रतिबिंबत्वंचविवक्षितं । स्थानविशेषात्प्रकाशादिवदुपपत्तेश्चे"त्यादिसूत्रेषु, "ब्रह्मादिगुणवैशेष्यादानंदादेःपरस्यच । प्रतिबिंबत्वमायाति मध्योच्चादिविभेदत" इतिभाष्ये, "भवत्यन्यानंदादिरीश्वरानंदादिप्रतिबिंबभूतइति," तत्वप्रकाशिकायांचतथावगतेः । अत्रबिंबरूपं प्राज्ञनामकमितिसंप्रदायविदः । "हृदिस्था या हरेर्मूर्तिर्जीवोयत्प्रतिबिंबक" इत्येकादशतात्पर्ये हृद्गतहरिरूपस्यबिंबतोक्तेः । "आकाशेच्च हृदिप्राज्ञ"इति हृदयस्थस्यप्राज्ञत्वोक्तेश्च । नचात्मांतरात्मनोरप्यस्तिहृदिनिविष्टत्वमितिवाच्यं । "रसंपिबतिकर्मज"मितिव्यापारांतरोक्तेः । ननु "हृदयेसर्वशोव्यापी प्रादेशःपुरुषोत्तमः । जीवानांस्थानमुद्दिष्टं सर्वदेवसनातनः । हृत्कर्णिकामूलगतः सांगुष्ठ

ग्रप्रमाणकः । मूलेशइतिनामास्मिन् सर्वेजीवाःप्रतिष्ठिताः । अंगुष्ठमात्रेपुरुषे कर्णिकाग्रस्थितेहरौ । प्रविशंतिसुषुप्तौतु प्रबुध्यंतेततस्तथे"तिबृहद्भाष्ये हृदयेत्रीणिरूपाण्युदितानि । तत्रकिंबिंबरूपमितिचेत् कर्णिकाग्रस्थितमितिवदामः । सुप्तप्राप्यत्वलिंगात् । प्राज्ञस्यैवसुप्तप्राप्यत्वंहिप्रमितं । किंच काठकभाष्ये "देहांगुष्ठमितोदेहे जीवांगुष्ठमितोहृदि । जीवस्यसतुविज्ञेयोजीवाद्भेदेन मुक्तय" इति तस्यैवमोक्षार्थज्ञेयत्वमुच्यते । न्यायविवरणेच स्वबिंबदर्शनेनैवेनंजीवंमोचयतीतिबृहद्भाष्ये "हृदिकिंचिदुपास्यैव विष्णुंमुक्तिमनुव्रजे"दिति बिंबरूपस्यैवमोक्षार्थज्ञेयत्वमभिधीयते । अतःकर्णिकाग्रगतंप्राज्ञरूपमेव बिंबरूपमितिसिध्यति । "हृदिस्थायाहरेर्मूर्तिं जींवोयत्प्रतिबिंबक"इत्यस्य सामान्यवचनत्वात् "सोयंत्रिरूपोभगवान् हृदयाख्यः प्रकीर्तित"इतिचोक्तेर्हृदयगतंरूपत्रयमपि बिंबरूपप्राज्ञप्रभेदइत्याचक्षतेप्राज्ञाः । ननु जीवानांभगवत्प्रतिबिंबत्वे दर्पणादिवदुपाधिर्वक्तव्या । सोपाधिकत्वेचोपाधिनाशेजीवनाशप्रसंगइत्यतउक्तं नित्येति ॥ अस्त्येवोपाधिः साचनित्या । "उपाधेश्चैवनित्यत्वान्नैवजीवोविनश्यती"त्युक्तेः । अतोनोक्तदोषः । नचमुक्तावुपाधिनाशोवक्तव्यइति कथंनित्यत्वमितिवाच्यं । "नित्योपाध्यास्वरूपया । चिद्रूपयायुतोजीवः केशवप्रतिबिंबक"इत्यादिगीताभाष्यादावुपाधेःस्वरूपत्वेन मुक्तावप्यनुवृत्त्युक्तेरित्यभिप्रेत्य चिद्रूपयेत्युक्तं । ननु नोपाध्यायत्तत्वादिनेतिभाष्ये उपाध्यनधीनत्वोक्तेः कथमुपाध्यधीनत्वमुच्यते । नच वाच्यमत्रोपाधिसद्भावमात्रमुच्यते नतूपाध्यधीनत्वमिति । प्रतिबिंबत्वमायातीत्यस्य प्रतिफलितोभवतीत्यर्थइतितत्वप्रकाशिकायां प्रतिबिंबाकारत्वमायातीत्यर्थइति तत्वप्रदीपिकायांचोपाध्यधीनत्वोक्तेरितिचेत् इत्थमवेहि । यथादर्पणादिग

तस्यसूर्यकादिप्रतिबिंबस्य यथाभिन्नाभिन्नोपाध्यधीनता नैवंजीवस्येत्यर्थो नोपाध्यायत्तत्वादिनेत्यस्य नतुस्वरूपोपाध्यनधीनत्वं । तथासति प्रतिबिंबत्वमायातीतिविरोधापत्तेः । उक्तंच "अतएवचोपमासूर्यकादिवदि"त्यधिकरणीयसुधायां "द्विविधोहिजीवोपाधिः आभ्यंतरोबाह्यश्च । तत्रस्वभावप्रतिभासहेतुराभ्यंतरः । स्वभावविपरीतावभासहेतुरंतःकरणादिर्बाह्यः । तदायत्तत्वादिकं चैतन्यस्यनास्तीत्येवमभिप्रेत्यैवमुदितं । तदुक्तं "जीवोपाधिर्द्विधाप्रोक्त"इत्यादीति । प्रथमतात्पर्येच "उपाधेश्चैवनित्यत्वान्नैवजीवोविनश्यति । स्वरूपत्वादुपाधेश्च नभिन्नोपाधिकल्पन"मित्युपाधितन्मात्रत्वं प्रतिबिंबस्योक्तं । नन्वत्यंताभिन्नत्वेकथमुपाधित्वमुपहितत्वंचयुज्यतइतिचेत् एकस्यैवजीवस्यांतःकरणत्वप्रतिबिंबरूपविशेषेणोपाधित्वप्रतिबिंबत्वोपपत्तेः । तदुक्तंदशमतात्पर्ये "नित्यांतःकरणंचैव प्रतिबिंबश्चतद्गत"इति । ननु स्वरूपांतःकरणस्यापि जीवैकदेशत्वेनभगवत्प्रतिबिंबत्वात्तत्रोपाधिः कइतिचेत् तस्यैवोपाधित्वमुपहितत्वं पूर्ववद्धेत्युक्तन्यायेनेशशक्त्याहिततादृशविशेषेणोपपद्यते । ननु "जीवोपाधिर्द्विधाप्रोक्तः स्वरूपंबाह्यमेवचे"तिभाष्ये भिन्नोपाध्यंगीकारान्नभिन्नोपाधिकल्पनमिति कथंतात्पर्योक्तिरितिचेत् बाह्यांतःकरणरूपोपाधेः स्फटिकलोहितिमानंप्रतिजपाकुसुमस्येव सुखदुःखादिधर्माणांस्वस्मिन्नुपपत्तौ स्वस्मिन्नेत्रस्वसंसर्गीणि जीवस्वरूपे भिन्नाभिन्ननीचतादिधर्मासंजकत्वाभिप्रायेणोपाधित्वमभिहितं नतु तद्दर्पणस्येव प्रतिफलनाधिकरणतयोपाधित्वमिति कुतोविरोधः । उपपादितंच सुधावाक्योदाहरणेनेति । ननुतथापि "सोपाधिरनुपाधिश्च प्रतिबिंबोद्विधेयते । जीवःपरस्यानुपाधिरिंद्रचापोयथारवे"रिति जीवस्यनिरुपाधिकप्रतिबिंबत्वोक्तिविरोधः । स्वरूपोपाध्यंगीकारादितिचेत् यथा

इंद्रचापस्योपहितातिरेकेणोपाधिर्नास्ति किंतुयावदुपाधिरपिप्रतिबिंबीभवतीत्यनुपाधिप्रतिबिंबतोक्तिः तथास्वरूपांतःकरण रूपोपाधिःसामस्त्येनैवप्रतिबिंबभावमापद्यते नतुदर्पणादेरिवैकदेशेनप्रतिफलनाधिकरणतयोपाधित्वं । अतोजीवोपाधेर्दर्प णादिवदेकदेशेनोपाधित्वाभावात् जीवःपरस्यानुपाधिरित्युपपद्यते । यद्वा भिन्नोपाध्यभावेन निरुपाधिकप्रतिबिंबत्वोक्तिः । उक्तंचैतत्सुधायां "निरुपाधिकप्रतिबिंबतावाचोयुक्तिरपि बाह्योपाध्यधीनत्वाभावाभिप्रायेणे"तीत्यास्तांविस्तरः ॥७१॥ नकेवलं साक्षात्प्रतिबिंबत्वंजीवानां । अपितु ब्रह्मवाणीरुद्रादिजीवानांतृणांतानां रमाब्रह्माद्यशेषप्रतिबिंबताच क्रमेणज्ञातव्येत्याह ॥ रमेति ॥ "आभासकोस्यपवनःपवनस्यरुद्रः, आभासकात्वथरमाऽस्यमरुत्स्वरूपाच्छ्रेष्ठाप्यजात्तदनुगीःशिवतोवरिष्ठे"त्यादि

रमाब्रह्मादिदेवाना मखिलानामपिक्रमात् ।

प्रमाणावसितोऽयमर्थः । यद्यपि सरस्वत्यादीनामपिब्रह्मादिप्रतिबिंबतास्त्येव अनुव्याख्याने "सगिरंचसैववायुंविशतीत्या द्युक्त्वा उक्तश्चबिंबप्रतिबिंबभावः पैंगिश्रुतावुक्तलयानुसारत"इत्युक्तेश्च । तथापि पुंस्त्वाद्याकारमत्रसादृश्याभिप्रायेण तात्पर्य निर्णयेविशिष्योक्तिर्युज्यते । ननु रमाब्रह्मादीनांभगवत्प्रतिबिंबत्वात्कथमन्येपांतत्प्रतिबिंबता । नहि प्रतिबिंबस्यापिप्रतिबिंबः संभवतीतिचेन्न । दर्पणयोरुभयोःपरस्पराभिमुख्येनावस्थितयोःसतोः दर्पणादिगतप्रतिबिंबस्यापि प्रतिबिंबांतरं तस्यापिपुनः प्रतिबिंबांतरमित्यनेकपरंपरायाःप्रत्यक्षतोदर्शनात् । नन्वेकस्यैवदर्पणस्यभागभेदंविनैव कथंपरस्परभिन्नानेकप्रतिबिंबोपादान

त्वमितिचेत् काऽत्रकथंता । प्रत्यक्षसिद्धस्यापलापयितुमशक्यत्वात् । अस्तुप्रमाणं युक्त्यसहे तदुपपत्तिःकथमितिचेत् ईशशक्त्या संभवत्यर्थेकिमत्राश्चर्यमिति । किंचदर्पणादौप्रतिबिंबस्यप्रतिबिंबांतरसत्त्वेपि उत्तरोत्तरप्रतिबिंबानां स्वस्वबिंबभूतपूर्वपूर्वप्रतिबिंबापेक्षया तद्गतप्रकाशादिगुणानांक्रमेणन्यूनता स्वरूपाल्पत्वमस्फुटताधिक्यंच । पूर्वपूर्वेषांतु प्रकाशाद्याधिक्यं स्वरूपाधिक्यं स्फुटताधिक्यंच । एवं रमाब्रह्मादीनांभगवत्प्रतिबिंबत्वेपि वाणीरुद्रादीनामृषिगंधर्वमनुष्यांतानांतत्तत्प्रतिबिंबता क्रमेणोपपद्यते । अतएव पूर्वपूर्वप्रतिबिंबभूतब्रह्माद्यपेक्षया पश्चात्तत्प्रतिबिंबभूतानांरुद्रादीनां क्रमेणस्वरूपन्यूनता ज्ञानादिगुणाल्पत्वमस्फुटताद्याधिक्यं ब्रह्मादीनामुत्तमोत्तमानां स्वरूपाधिक्यं गुणाधिक्यं स्फुटतातिशयश्चेत्येवंतारतम्यमुक्तं तैत्तिरीयभाष्ये"प्रतिबिंबा यतःसर्वे ब्रह्मांतानांनरादयः । अतोस्पष्टस्वरूपास्ते स्फुटरूपास्तथोत्तरा"इति । नन्वाभासएवचेत्यादिसूत्रेषुसर्वेषामपिसाक्षाद्भगवत्प्रतिबिंबत्वस्य निर्णीतत्वात्कथंस्वस्वोत्तमसुरऋषिगंधर्वादिप्रतिबिंबत्वं । एकस्यैवानेकप्रतिबिंबतायाःक्वाप्यदर्शनादितिचेन्न । नहि प्रतिबिंबत्वंनाम सर्वत्रभगवत्प्रतिबिंबत्वमिव प्रतिफलनरूपत्वं । किंतु तदधीनत्वेसतितत्सदृशत्वमेव । तदेकस्यवानेकस्याप्युपपद्यतइति कानुपपत्तिः । तत्रहृत्कर्णिकाग्रगतप्राज्ञनामकबिंबरूपभगवत्समीपवर्तिनः प्राणनामकमुख्यवायोरपि विशेषतःस्वानुग्राह्यजीवान्प्रतिभगवतइवबिंबतेति एतत्कल्पीययोग्यसर्वजीवानां साक्षात्प्राणप्रतिबिंबत्वंज्ञातव्यं । "देहेपियत्रपवनोत्रहरिर्यतोसौतत्रैववायुरितिवेदवचःप्रसिद्ध"मितिनिर्णये, यत्रप्राणोमनस्तत्रजीवस्तत्रमनस्तथेति गीताभाष्येचतथावगमात् । "प्रतिबिंबोहरेःप्राणःप्राणस्यान्याःकलाःक्रमात् । कलानांदेवताअन्या देवतानांनरादय"इतिपारंपर्येणप्रतिबिंबताप्रतिपादकप्रमाणंतु पारंपर्ये

णप्रतिबिंबताप्यस्तीतिविवक्षयाप्राप्तमिति। पुनश्चनित्यसंसारिवैलक्षण्यंदर्शयति ॥ अनादीति॥ सर्वतः सर्वस्मात् सर्वप्रकारेणचेति नित्यत्रैविध्यव्यावृत्त्यर्थं। "अनादिकालादाधिक्यंसर्वस्माज्ज्ञानतोहरेः। पुनःपुनर्वृद्धिमेतितज्ज्ञानंहिभवेभवे" इतिकाठकभाष्यमर्थतःसूचयति ॥८०॥ बृहद्भाष्यवचनंचपठति ॥ भक्तीति॥ तज्ज्ञानंलक्षयति ॥ तेषांमुक्तियोग्यानामिति । हीति प्रमाणलक्षणादिसंमतिप्रदर्शनार्थं ॥ ८१ ॥ प्राचुर्येणेति ॥ बाह्यांतःकरणजन्यंज्ञानंयथार्थमयथार्थंच । तत्रवस्तुतोयथार्थज्ञानस्वरूपत्वादुत्तमजीवस्य प्रायेणयथार्थंज्ञायते। तत्संसारापादकमात्मस्वतंत्रताज्ञानं। यच्चदेहादिधर्मस्यात्मन्यारोपादिरूपं जायासुतागारादौ

अनादिकालादाधिक्यं हरेर्जानंतिसर्वतः ॥८०॥ भक्तिज्ञानादयःसर्वे सर्वेषामप्यनादयः। तेषांस्वरूपज्ञानंतु प्रमाणतममेवहि ॥८१॥ प्राचुर्येणैवबाह्यंतु प्रमाणंसमुदाहृतं। तत्रापिक्रमशोज्ञानं ह्रसितंमानुषोत्तरं ॥८२॥

ममतादिरूपं शुक्त्यादावत्यंतासद्रजताद्यात्मकताग्रहणं स्वप्नेजाग्रत्त्वादिकंचेत्यादिकमयथार्थमेव। संभूय यथार्थज्ञानापेक्षयाऽयथार्थज्ञानमल्पमेवेतिभावः। यथार्थज्ञानप्रचुरंदैवमितिपद्धतौ मोक्षयोग्यबाह्येंद्रियलक्षणोक्त्यैतदवसीयते । तत्राप्युत्तमोत्तमजीवापेक्षयानीचनीचानांस्वरूपज्ञानंक्रमेणह्रासयुक्तं। बाह्यज्ञानंतु क्रमेण बह्वर्थविषयत्वे याथार्थ्येच ह्रसितमिति प्रमाणवचनेनाह ॥ तत्रापीति ॥ मनुष्योत्तमपर्यंतमित्यर्थः। तिर्यगादीनांमानुषांतर्भावादेवमुक्तिः। तथाचवक्ष्यामः। अत्रापिऋजुतात्विकतात्विकज्ञानभेदेन वैलक्षण्यंद्रष्टव्यं । एतच्चप्रपंचयिष्यते ॥ ८२ ॥ मोक्षयोग्यविभागपरंतत्वविवेकवचनंपठति ॥

देवेति ॥ अत्र यथासंभवं कर्मजाजानजगंधर्वाप्सरःप्रभृतीनामंतर्भावोद्रष्टव्यः । मुक्तविभागपरत्वेप्यस्यसृतिसंस्थेष्वप्येतत्साम्यादत्रोदाहरणंयुक्तं । अतएव पंचविधानपिपुनर्विभजति ॥ सृतीति ॥ ८३ ॥ नन्वेवंमुक्तियोग्यानां यद्यनादिकालादारभ्य भवेभवेव्यक्तिलक्षणवृद्ध्युपेतभगवत्सर्वोत्तमत्वंज्ञानवत्त्वंच स्वप्रकाशंयथार्थज्ञानानंदादिस्वभावत्वादिकंच कथंतर्ह्यज्ञानमिथ्याज्ञानरागद्वेषभयक्रोधक्षुत्पिपासाभ्रमचिंताजनिजरामृतिदुःखादिरन्यथाकाररूपस्संसारएवेति । नहिपरमानंदस्वरूपेजीवे सूर्येतमइव तद्विरुद्धदुःखादिकमुत्पत्तुमर्हति । नचतन्मिथ्या साक्षिसिद्धत्वादबाध्यत्वाद्वेत्यतस्तन्निमित्तमाह ॥गुणेति॥

देवर्षिपितृपनरा इतितेपंचधास्मृताः । सृतिसंस्थाःसृतेर्मुक्ता इतितेद्विविधाःपुनः ॥ ८३ ॥

गुणरूपाअपिह्येते सृतिसंस्थाहरीच्छया । मायाख्ययामहालक्ष्म्या प्रकृत्याद्यभिमानगा ॥८४॥

यद्यप्येतेगुणरूपास्तथापिसृतिस्थाइत्युपपद्यते । "अशरीरस्यजीवस्य शरीरोत्पत्तिकारणं । ईश्वरेच्छाप्राथमिकी तांविनानहि किंचने"तिद्वितीयतात्पर्ये। तथाहि परमेश्वरेच्छाप्रेरितामहालक्ष्मीः स्वयंमोहकत्वेनमायानामिका स्वाभिमन्यमानजीवावरणभूतबंधकप्रकृतिमधिष्ठाय श्रीभूदुर्गारूपेणगुणत्रयनियमनपूर्वकं "सत्वात्संजायतेज्ञान"मित्याद्युक्तरीत्या तत्तद्योग्यतानुसारेण विविधविचित्रविकारविशेषान्जनयंती अहमज्ञोमामन्यंचनजानामीत्येवंप्रकारकंसाक्षिसिद्धमनादिभावरूपमज्ञानमुपोद्बलयंती स्वरूपभूतज्ञानानंदादिगुणगणानुभवप्रतिबंधकतया अनादितोपिस्वातिसमीपवर्तमानानादिसखिभूतपरमसंगलाऽऽगणितगुण

गणपरिपूर्णरमारमणविषयकस्वयोग्यापरोक्षज्ञानादि प्रतिबंधकतयाच जीवाच्छादकपरमाच्छादकाख्यां प्रकृत्यपरनामिकां संत तदुःखानुभवयोग्यामतिदुष्टां सर्वजीवेषुप्रातिस्विकंस्थितां वाण्युमाशच्यादिदेवतानियतां द्विविधांप्रकृतिंनिमित्तीकृत्यानादिक र्मपरंपरामधिष्ठाय तान्युद्बोधयंती षोडशकलात्मकलिंगदेहेनचजीवमावृत्य तद्गतंबाह्यांतःकरणमधिष्ठाय देहेंद्रियांतःकरणादौ तदनुबंधिषुच दृढतराभिमानमुत्पाद्याविद्यमानस्वातंत्र्यादिविषयकविविधविभ्रमंसंपाद्य नानाविधमोहमहाजालावृतेमनसि सुखदुःखश्रमचिंताक्षुत्पिपासादिकं विविधविकारमुपजनयित्वा जपाकुसुमसन्निधानेनस्फटिकेरक्तिमानमिव परमस्वच्छतमेपि जीवस्वरूपे सुखदुःखाद्यात्मनाविकृतबाह्यांतःकरणस्यांगारवह्निवत्स्वरूपांतःकरणेऽतिमिश्रीभावरूपसंनिधानबलेन भिन्नाभिन्नमेवनीचोच्चतादिचिंतनारूपंविक्रियाविशेषंजनयंती पुनःपुनश्चकामकर्मादिप्रवाहंवर्धयंती सर्वत्रपरमप्रयोजकंवाणीवल्लभं अवांतरप्रयोजकान्शिवशक्रादिदेवांश्च नियामयंतीखलुबंधिकेति। अन्यदुत्तरत्रवक्ष्यामः। नन्वेतावदावरणजातंकुतोंगीकरणीयमिति चेत् उच्यते। उत्तमजीवस्यतावज्ज्ञानानंदादिस्वरूपत्वंप्रमितं। तद्भावानुपलब्धिस्तावदनुभवसिद्धा। तेनावगम्यते अस्तिकिमप्यावरकं येनावृतःस्वप्रकाशचैतन्यरूपोपिनात्मनस्तत्वंवेदेति। अस्त्वावरणं। तच्चप्रमितकामकर्मादिकमेवकिंनस्यादितिचेन्न। तस्यापिसादिनःकारणांतरापेक्षत्वात्। नचपूर्वपूर्वस्मादुत्तरोत्तरमितियुक्तं। सुषुप्तिप्रलययोस्तद्वृत्त्यभावेननिष्कलंकचैतन्यबलात्स्वरूपावभासप्रसक्तेः। अतःकामकर्माद्यतिरिक्तं मायाविद्याप्रकृत्यादिशब्दाभिधेयमनाद्येवकिमपिद्रव्यमंगीकरणीयं। "अनादिमाययासुप्त"इत्यादिस्मृतयश्चात्रभवंति। तदुपोद्बलितानादिमूलप्रकृतिस्तत्प्रभेदाःसत्वादिगुणाश्चबंधकारणमितिचोररीकर

णीयं। केवलविद्यायास्तादृशशक्त्यभावात्। तथाच सत्वादिगुणमयी विद्याविरोधित्वादविद्याख्या ऽनादिभावरूपाज्ञानसहिता मूलप्रकृतिर्मूलकारणमितिवक्तव्यं। तदुक्तं "ईश्वरेच्छाप्राथमिकी"त्युपक्रम्य "द्वितीयाप्रकृतिःप्रोक्ता तद्रूपाहिगुणास्त्रयः। तेषांसंपातजोभावोममाहमितियामति"रितिद्वितीयतात्पर्ये। "जीवस्य सदसद्योनिजन्मसु। कारणंगुणसंघातः"इतिगीतातात्पर्ये। तादृशंचरूपमज्ञानादतिरोहितमितिबृहद्भाष्ये। नच जडस्यप्रकृत्यादेःस्वतःकिंचित्करत्वंयुक्तं। अतस्तदभिमानिन्योंगीकरणीयाः। तत्रविवेकः त्रेधाहिप्रकृतिर्बंधिका मूलप्रकृतिः सत्वरजस्तमांसि तत्तत्कार्याऽविद्याचेति। तत्रमहालक्ष्मीर्मूलप्रकृतेर्मुख्याभिमानिनी। सरस्वतीत्वमुख्याभिमानिनी। गुणत्रयस्यापि "श्रीभूदुर्गाभिधासैवरमा मुख्याभिमानिनी। गायत्रीसावित्रीसर

लिंगतन्वाकर्मभिश्च गुणैःसत्वादिकैरपि। अविद्ययाप्रकृत्याच्च जीवाच्छादकसंज्ञया ॥ ८९ ॥

स्वतीति त्रिरूपावाण्यपि तदंतरमभिमानिनी। जीवाच्छादिकापरमाच्छादिकाख्याऽविद्याभिमानिन्यस्तु क्रमादिंदिरावाण्युमाशचीमुखाः। जीवाच्छादिकापरमाच्छादिकाख्ये प्रकृत्यविद्यादिशब्दाभिधेये द्वे दुर्देवतेअप्यवराभिमानिन्यौ। तच्चोक्तं। "अत्रचेतनयातन्मयत्वात्तुमायया। लक्ष्म्यावशगयालोको विष्णुनैवविमोहित"इति गीतातात्पर्ये। श्रीःपराप्रकृतिःप्रोक्ता ब्रह्माणीत्ववराततः"इतिश्रुतिगीतातात्पर्ये। "तस्यास्तुत्रीणिरूपाणि सत्त्वंनामरजस्तमः। एताभिस्तिसृभिर्जीवाः सर्वेबद्धाअमुक्तिगाः। सर्वान्बध्नंतिसर्वाश्च तथापितुविशेषतः। श्रीर्देवीबंधिकानॄणांभूर्दैत्यानामथापरे"तिगीतातात्पर्ये। गायत्रीचैवसावित्री तथैव

चसरस्वती । एवंत्रिरूपाप्रकृति र्ब्रह्मपत्नीप्रकीर्तितै"त्याद्येकादशतात्पर्ये। "श्रीःपराप्रकृतिःप्रोक्ता ब्रह्माणीत्ववराततः । उमाशचीमुखास्तस्या अवरास्संप्रकीर्तिताः । अथान्येप्रकृतीदुष्टे नृषुप्रातिस्विकंस्थिते । स्वगुणाच्छादिकाप्येका परमाच्छादिकापरा । सर्वावरेतेप्रकृती सततंदुःखितेपिच । पिशाचवत्समुद्दिष्टे पुरुषस्याधिकारिणः । प्रेरकास्तुतयोर्दैव्यइंदिराद्याःसुखात्मिकाः" इत्यादिश्रुतिगीतातात्पर्ये। अत्रकेचित् द्विवचनस्यबहुस्थलेषुभावाद्दुर्देवताजीवद्वयमेव पृथगनंतरूपेणसर्वजीवेषुवर्ततइत्याहुः । अन्येतु जीवाच्छादिकापरमाच्छादिकाख्यद्विराशितयाजीवानंत्यमभ्युपेत्य द्विवचनंजातिपरंमत्वा प्रतिजीवं पृथग्दुर्देवताजीवद्वयंवदंति । ऋग्भाष्ये"प्रातिस्विकीप्रकृतिर्यत्तमश्चे"ति, तट्टीकायांच नकेवलंसर्वानुस्यूता किंतुप्रातिस्विकीचास्तीत्यर्थ इति महालक्ष्म्यादिरूपसर्वानुस्यूतप्रकृत्यतिरेकेण "तांजघानेशिताचे"तिपूर्वग्रंथप्रकृतदुष्टप्रकृतेः प्रतिपुरुषंप्रातिस्विकत्वाभिधानात् । सुधायां"नन्वविद्याचेन्निवर्तते तर्ह्येकमुक्तौसर्वमुक्तिःस्यात् नस्यात् प्रतिपुरुषमविद्याभेदांगीकारात् । अत्रविशेषः स्वगुणाच्छादिकात्वेकेत्याद्यागमादवगंतव्य"इतिस्पष्टोक्तेश्च श्रुतिगीतातात्पर्येपि नृषुप्रातिस्विकंस्थिते इत्यभिधानाच्च । अत्र परमाच्छादिका नित्यसंसारिणीतिकेचित् । तच्चिंत्यं । दुष्टत्व सर्वावरत्व सततंदुःखित्वादि तमोयोग्यलक्षणस्यद्वयोरप्यभिधानात् । ननुतर्हि"स्वगुणाच्छादिकांहत्वापरमाच्छादिकांपरः । व्याघुट्यमोक्षपदवींददातिपुरुषोत्तम"इति । तथा त्रयोविंशतिमेश्लोके "पूर्वोक्तांद्विविधांदुष्टां प्रकृतिंजहातिहंतिच । दुर्भगांप्रकृतिंत्यक्त्वा हत्वाचान्यांदुरत्यया"मितिच जीवाच्छादिकाया हननमभिधाय परमाच्छादिकायास्त्यागमात्रोक्तिःकथमुपपद्यते । एकस्यानित्यसंसारितापक्षेतु तस्यास्त्यागमात्रं ननुतमःप्राप्ति

रूपंहननं । अन्यस्यास्तु तमोयोग्यत्वेनसद्यस्तमःप्राप्तिरूपंहननमुपपद्यते । तमःसाधनसंपूर्तिस्तु प्रकृत्यभिमानप्रासितःपूर्वमेव सिद्धेत्युपपत्तिरितिचेत् अत्रकेचित् । जीवाच्छादिकाभिमन्यमानाचित्प्रकृतेः स्वरूपेणविनाशः । परमाच्छादिकाभिमन्यमानाचित्प्रकृतेस्तु ननाशोपितुत्यागएव । चेतनयोस्तु एकस्याएव स्वाभिमन्यमानाचित्प्रकृतिविनाशसमयेस्वस्यापितद्देहत्यागाख्यं हननं । अन्यस्यास्तु स्वाभिमन्यमानाचेतनस्यापिविनाशाभावात्तदभिमानत्यागेन तस्मान्निस्सरणमात्रं नतुदेहत्यागः । अतोव्याघुट्टनोक्तिः । अतएवानंताच्छादिनीहरेरिति हरेराच्छादिनी हरेराच्छादिका । अनंता नाशरहितेतिविशेषोक्तिरुपपद्यते । तदभिमन्यमानाचित्प्रकृतेरनंतत्वात् । तस्माद्धननव्याघुट्टनोक्तिबलान्नयोग्यताभेदकल्पनायुक्तेतिमन्यंते । गुरवस्तूभयोरपितमो

परान्छादिकयाचापि सर्वदैवावृतत्वतः । नस्वात्मानंहरिंचापि सम्यग्जानंतिमोहिताः ॥ ८६ ॥

योग्यत्वेपि स्वगुणाच्छादिकायाः योग्यजीवमुक्तिसमयेसद्यस्तमःप्राप्तिरेवहननशब्दार्थः । "अथचदैत्यहतिस्तमसिस्थिरानियतसंस्थितिरेवे"त्युक्तेः । परमाच्छादिकायास्तु नतदैवतमःप्राप्तिः । किंतु मुक्तजीवान्निस्सरणमेव । कालांतरेतमोयोग्यत्वेनस्वसाधनसंपूर्त्यातमःप्राप्तिः । अतोव्याघुट्टनोक्तिरुपपद्यते । "अनंताच्छादिनीहरेः । नविष्णुंछादयत्येषा तज्ज्ञानंछादयेत्पर"मि त्यस्यतु अनंतोभगवान्ब्रह्मेत्युक्तेः अनंतस्य परमस्य आच्छादिनी । हरेःअधीना । अतोनविष्णुंछादयत्येषा । परंकेवलंतद्विषयकज्ञानं जीवस्यछादयेदित्यर्थः । अतोनविष्णुंछादयत्येषेत्युत्तरवाक्ये हेतुकथनपरतया अधीनेत्यध्याहारेणयोजनोपपत्तिः ।

अतएवसुधायां"नन्वनादेःप्रकृतिबंधस्य कथंनिवृत्तिरितिचेत् "विश्वमायानिवृत्तिः मायामेतांतरंतिते"इत्यादिश्रुतिस्मृतिसिद्ध त्वात्। नन्वनादेःकीदृशोविनाशइतिचेत् स्वरूपप्रध्वंसएवेत्याद्युक्त्वा अत्रविशेषः स्वगुणाच्छादिकेत्याद्यागमादनुसंधेयइति जीवाच्छादिकापरमाच्छादिकारूपद्विविधप्रकृत्योरपिस्पष्टंविनाशोक्तेरित्याहुरित्यलं। नन्वेवं लक्ष्म्यादिचेतनैः प्रकृत्याद्यचेतनैश्च समस्तोपपत्तौ किमीश्वरस्यापिकारणत्वाभ्युपगमेनेतिचेन्न। द्रव्यंकर्मचेत्यादिना सर्वस्यतदधीनत्वावगमात् "नऋतेत्वत्क्रिय तेकिंचनारे"इत्यशेषव्यापारस्यापि साक्षाद्भगवत्कर्तृकतायाःश्रुतत्वाच्च। उपद्रष्टानुमंताचेत्यादौ भगवतएवबंधादिस्वातंत्र्य

ततएवाभिमानाच्च देहादीशवशेस्थितं। भ्रमंतिस्ववशत्वेन तेनैषांसंसृतिर्मता॥ मनोविकारान्दुःखादीन्सत्या
ननुभवंतिच ॥८७॥ नीचोच्चतादिकंतेन स्वरूपेपिहिजायते। भिन्नाभिन्नमतोह्यीशो बंधदःसंप्रकीर्तितः ॥८८॥

व्युत्पादनाच्च। तथाचपरमेश्वरएव रमावाण्याद्यशेषनियमनपूर्वकं सत्त्वादिगुणमय्याऽविद्याख्यया स्वाधीनयोक्तरूपप्रकृत्या अचिंत्याद्भुतयास्वशक्त्याच जीवस्यस्वप्रकाशमपिस्वरूपचैतन्यमाच्छाद्य स्वाधिष्ठानलब्धपरिणाममहदहंकारादिप्रकृत्यंशैरना दिलिंगदेहानुबद्धैर्भूतेंद्रियादिभिश्चसंयोज्य प्राधान्येनमनोविपरिणाम्य मुख्यकर्तृत्वंस्वातंत्र्यंकारकफलस्वाम्यंचास्याविद्यमान मेवदर्शयित्वा कामकर्माद्युत्पादनद्वाराऽभिमानसंपादनपूर्वकंसुखदुःखाद्युत्पादयतीतिफलितोर्थः। तदेतत्सर्वं द्रव्यंकर्मचकाल श्चेत्यनुव्याख्यानव्याख्यानावसरेसुधायांसंक्षेपेणनिरूपितमिति ॥ ८४-८६ ॥ "अभिमानादेवसंसारोऽन्यथानेतिपरिहार

इतिपंचमतात्पर्ये । "अतोमनोभिमानेन दुःखीजीवोनचान्यथे"त्येकादशतात्पर्ये । भ्रांत्याजीवस्यसंसारः भ्रांतिर्हिदेहाभिमति"रितितृतीयतात्पर्यादौचाभिमानस्यकारणत्वोक्तेः सोप्यवांतरकारणमित्यंगीकरणीयं । तद्रहव्याघ्रोवासिंहोवेत्यारभ्य यद्यद्भवंतितत्तदाभवंतीति भगवदज्ञानादेवभवंतीत्यज्ञानस्यापिकारणत्वोक्तेर्भगवज्ज्ञानाभावस्तद्धिस्मृतिश्चकामकर्माद्यपेक्षया प्रधानकारणं । तथा "दोषाअनादिसंबद्धा स्तेमुक्तिपरिपंथिन"इत्यनुभाष्योक्तानां भक्त्यभावादिदोषाणांतु ज्ञानाद्युत्पत्तिप्रतिबंधकतयाकारणत्वंद्रष्टव्यं । उक्तंसुधायांच दोषास्तदुत्पत्तिंप्रतिबध्नंतोमोक्षपरिपंथिनइतिज्ञायंतइति । एवं मनआदींद्रियादिप्रेरकतया स्वावरनियम्यप्रकृत्यादिनियामकतया कामकर्माद्युत्पादकतयाच ब्रह्मादिसर्वदेवानामपि बंधकत्वं । सर्वेश्वरस्य

हरीच्छयैवसंसारो देवानांप्रायशःक्रमात् ॥ ८९ ॥

मुख्यप्राणस्य"मदाज्ञयातान्यखिलानिसंति, वायोस्सकाशाज्जगतः प्रवृत्तिंकामयत्यजः" इत्याद्युक्तेर्भगवतइवसरस्वत्याद्यशेषनियामकतया सर्वाकारेणापिबंधकत्वमिति ॥ ८७-८८ ॥ किमेवंसंसारसामग्री सर्वाधिकारिसाधारणी नेत्याह ॥ हरीच्छयैवेति ॥ प्रायशइत्यस्यायंभावः । नतावदृजूनांदोषैःसंसारःसंभवति । अनादिकालतःसर्वदोषविहीनत्वात् गुणाधिकत्वाच्च प्रकृत्यादेस्सर्वस्यचतदधीनत्वेनस्वाधीनसत्ताशक्त्यादिकस्य तद्बंधकत्वायोगात् । किंतुकेवलहरीच्छयातदधीनचित्प्रकृत्याचेत्येव । अन्यच्चतुर्मुखप्रकरणेवक्ष्यामइति । सुपर्णशेषादिदेवानामपिपदप्राप्तेःपूर्वजन्मन्येवोत्क्रांत्यादिमत्त्वेनमुक्तप्रायत्वस्य

वक्ष्यमाणत्वात् "देवानांनैवकेनापिदुःख"मितितेषामुत्सर्गतोदुःखाद्यभावस्यनिर्णीतत्वाच्च । "नतत्रापिब्रह्मादेरस्तिसाक्वचि"दिति दुष्टाभिमन्यमानप्रकृत्यादिबंधाभावस्यस्पष्टमुक्तेश्च नान्यवद्दोषनिमित्तकोबंधः । किंतु हरीच्छयाचित्प्रकृत्या तथास्वोत्तमैर्नियतदग्धपटायमानप्रकृत्या प्रारब्धकर्मणाचेषत्संसारबंधः । शुकादीनामपीपदर्शनात् । "आधिकारिकपुंसांतु बृहत्कर्मत्वकारणात्"इतिगीताभाष्ये कामकर्मादेरपिकिंचिन्निमित्तताभिधानात् । असुरावेशादिनिमित्तकस्यविकर्मादेर्दुःखादेश्च "तेषांदुःखादिकंकिंचिदसुरावेशतोभवे"दित्युक्तेश्च । परंतु इतरवन्नबध्यतइत्येव । तच्चोक्तमेकादशतात्पर्ये"अविद्वज्जीववन्न बध्यत"इति । एवंमुक्तप्रायाणांमहानुभावानां सर्वतत्वाभिमानितयाऽशेषजगदधीश्वराणामसुरावेशादौ केवलहरीच्छादि

सर्वेप्यणवःप्रोक्ता ह्युत्क्रांत्यादियुतायतः । हृत्पद्मकर्णिकासंस्थ हरिपादाब्जसंस्थिताः ॥ ९० ॥

रेवकारणमित्यवगंतव्यं । एवमृषिगंधर्वप्रभृतीनांसर्वेषांमोक्षयोग्यानां योग्यतातारतम्यक्रमेणैवसंसारापादकदोषतारतम्यं द्रष्टव्यं । तदुक्तमनुभाष्ये "दोषाअनादिसंबद्धास्तेमुक्तिपरिपंथिनः । सर्वेतएतेजीवेषु दृश्यंतेतारतम्यतः । ऋजूनामेकएवास्ति परमोत्साहवर्जन"मित्यादि ॥ ८९ ॥ "उत्क्रांतिगत्यागतीना"मितिसूत्रसिद्धजीवाणुत्वमाह ॥ सर्वइति ॥ देहेजीवावस्थिति प्रकारमाह ॥ हृत्पद्मेति ॥ "हृदिह्येषआत्मेतिश्रुतेः, हरिपादाब्जसंस्थिता"इतिवचनात् । तर्हिकथंसर्वशरीरेप्रवृत्तिरितिचेत् देहेसर्वत्रापिव्याप्त्यंगीकारात् । नचाणोर्जीवस्यहृदयेस्थितत्वेसर्वशरीरेव्याप्तिरुपपन्ना विरोधादितिनवाच्यं । अणोरप्यंशतः

प्रकाशतोवाव्याप्त्युपपत्तेः । तथाहि । द्विविधाह्यधिकारिणः । अंशविभागयोग्यास्तदयोग्याश्च । तत्राजानजदेवपर्यंत मधिकारिणोंशविश्लेषवंतः । तदवराअंशविभागानर्हाः । “नदेवानांनदेवीनां सामस्त्येनजनिर्भुवि । अंशांशेनैवजायंते सर्वेत्वाजानजादय”इतिप्रथमतात्पर्योक्तेः । आजानजादयइत्यत्रातद्गुणसंविज्ञानोबहुव्रीहिः । तथाचाजानजादयः आजान जव्यतिरेकेणतदपेक्षया अवराः पितृगंधर्वादयस्तु सर्वे समस्ताः सामस्त्येनैवेतियावत् । अविभागेनैवजायंतइत्यर्थः । यद्वा तद्गुणसंविज्ञानएवबहुव्रीहिः । तथात्वेतु देवानांदेवीनांभुविसामस्त्येनजनिर्नैतिपृथक्संबंधः । किंतु आजानजादयःसर्वे आजानजाः कर्मजाः तात्विकाश्चेति सर्वेपिदेवाः अंशांशेन अंशैकदेशेनैव जायंतइत्याजानजोत्तमकक्ष्याणामादिशब्दग्रहणे

गंधर्वप्रमुखादेहे चिद्गुणव्यापिनोमताः । सुरशब्दोदिताःसर्वे प्यंशैर्हिव्याप्तिसंयुताः ॥ ९१ ॥

नैकवाक्यतयायोजना ॥ ९० ॥ तत्रतावदंशविभागानर्हाणांदेहेव्याप्तिमुपपादयति ॥ गंधर्वेति ॥ तथाहितत्वप्रदीपे देवानां तुगंधर्वादिभ्योधिकशक्तियोगादुत्कृष्टाव्यवस्थितिर्युक्तेत्यादिना गंधर्वादिभ्यउत्तमानामंशव्याप्तिमुपपाद्य गंधर्वादीनांचिद्गुण व्याप्तिरेवप्रतिपादिता । उत्तमानांशरीरव्याप्तिमुपपादयति ॥ सुरेति ॥ आजानजकर्मदेवेष्वपिदेवशब्दानुवृत्तेस्तेपिसुरशब्दो दिताएव । तथाच अविरोधश्चंदनवदितिसूत्रोक्तरीत्या अणोर्जीवचैतन्यस्य चंदनबिंदुवदंशव्याप्तिर्युज्यतइतिभावः । नन्वे वंप्रकारद्वयेनद्विविधजीवानांशरीरव्याप्तिमत्त्वे कथमणुत्वंहृदयावस्थानंचयुज्यतइतिचेत् गुणाद्वालोकवदित्युक्तरीत्यागंधर्वादी

नांचिद्गुणव्याप्तिमत्त्वेपि गुणिनोहृदयावस्थितत्वंयुज्यते ॥ ९१ ॥ तदुच्चविपर्येतुविशेषंवक्तुंभाष्यवचनंपठति ॥ असम्यगिति ॥ सुराः स्वरूपस्यअसम्यगवस्थानेन शिथिलतयावस्थानेन शरीरेव्याप्तियुताः । सम्यक् सांद्रतया एकदेशेऽवस्थानेनाव्याप्तियुताः । तत्रकेषांचिदधिकशक्तियोगात्कदाचिद्बहुषुस्थानेषुप्रायःसम्यगवस्थानं । अत्युत्तमानांतुभगवत्प्रसादातिशयादिच्छयासम्यगवस्थानं "व्याप्तिश्चाभ्यधिकातेषामतएवनसंशय" इत्यधस्तादुक्तमिति तत्वप्रदीपिकावाक्यंमनसिनिधायोक्तं ॥ श्रेष्ठाइति ॥ ९२ ॥ वायोर्विशेषमाह ॥ तत्वविद्यार्येति ॥ अत्रायंनिष्कर्षः । यथाचंदनबिंदोःसम्यक्निबिडतयैकदेश

असम्यक्सम्यगितिच व्यवस्थाभेदतःसुराः । व्याप्त्यव्याप्तियुताःश्रेष्ठाः प्रायःसम्यगवस्थिताः ॥ ९२ ॥

तत्वविद्यार्यचर्याणां सम्यगेवह्यवस्थितिः । सर्वरूपेषुचैवंहि शक्तियोगा(द्धि)द्विचित्रता ॥ ९३ ॥

गतत्वेपि प्रशिथिलतयाविद्यमानस्वांशैर्व्याप्तत्वं । सर्वत्रदेहादौशीताद्यापादकतयासत्त्वावगमात् । तथा देवानांहृदिचैतन्यद्रव्यस्यनिबिडतयाऽवस्थानं समग्रदेहेतुप्रशिथिलवद्विद्यमानस्वांशतोव्याप्तिः । अत्रांशव्याप्तिर्नाम शिरःपाण्यादिविशिष्टविश्लिष्टपृथग्रूपलक्षणांशैःशरीरेपूर्णत्वमितिकेचित् । तच्चिंत्यं । "नहिजीवस्याक्षिणी पृथक्शिरोबाह्वादिकंविद्यतइत्यैतरेयभाष्यविरोधात् । किंतुचंदनवत्प्रचयेन सर्वत्रसांद्रतयावस्थानमेव सांद्रव्याप्तिभाज" इतितत्वप्रदीपोक्तेः । ननु "हृदयेसंस्थितोजीवो विशेषेणहरिस्तथा । चक्षुरादिषुरूपाणि जाग्रत्कालेतयोस्सदा । बहूनिसंति तान्येव यदैकीभावमाप्नुयुः । हृदयस्थेनरूपेणतदा

जीवोनकिंचन। जानाती"तिबृहद्भाष्ये चक्षुरादिषुपृथग्रूपबाहुल्योक्तेः शिरःपाण्यादिविशिष्टबहुरूपपूर्णत्वमंगीकर्तव्यमितिचेन्न। नहिजीवस्याक्षिणीपृथक्शिरोबाह्वादिकंविद्यते। हृदिस्थितमेवहितस्यरूपं जागरेप्यक्ष्यादिषुविशेषसंनिहितंभवति दीपप्रकाशवत्। "अवस्थितिवैशेष्यादितिचेन्नाभ्युपगमाद्धृदिहि, गुणाद्वालोकवदितिसूत्रा"दित्यैतरेयभाष्ये पृथग्रूपावस्थानंनिषिध्य हृदिस्थितस्यैवकालेविशेषेणचक्षुराद्यवस्थानप्रतिपादनात्। बृहद्भाष्यवचनंच तदभिप्रायकमेव। "हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यती"तिवत्। अतोनविरोधः। केचित्तु ऐतरेयभाष्यवाक्यं प्रकाशव्याप्तिमदल्पजीवपरं। बृहद्भाष्यवचनमुत्तमपरमित्याहुः। तदयुक्तं। उभयवाक्ययोरपिसर्वजीवसाधारणताप्रतीतेः। ऐतरेये अवस्थितिवैशेष्यादित्युभयसाधारणसूत्रोदाहरणाच्चेति। तत्रात्युत्तमानांत्वाधिक्यक्रमेणविशेषतःसांद्रतयाव्याप्तिः। तथाप्यतिनिबिडबहुचैतन्यद्रव्येणहृद्यवस्थानंच तत्राप्यधिकशक्तियोगाच्चक्षुरादिषुबहुषुस्थानेषुस्वेच्छयासम्यगवस्थानंच युज्यते। मुख्यप्राणस्यतु हृदीवसर्वांगेष्वपिसर्वदासम्यगेवावस्थानं। एवं शिरःपाण्यादिदेहावयवगतचैतन्यांशेष्वपि हृदीवसम्यक्पूर्तिसद्भावेनातिनिबिडतरपूर्णचैतन्यद्रव्यत्वादेव मूलरूपाद्भिभक्तावतारादिसर्वरूपेष्वपि मूलरूपइव परिपूर्णाःसद्गुणगणादृश्यंते। "बळित्थातद्वपुषेधायी"तिश्रुतेः। "इत्थमेवनिहित"मितिभगवत्पादोक्तेश्च। उक्तंचतत्वप्रदीपिकायां "अस्माकंतत्वविद्यार्यवर्याणां मूलरूपइवसर्वरूपेष्वपिसौबल्यसार्वज्ञसौलक्षण्यादिगुणाः परिदृश्यमानायुज्यंतइत्यादि। प्रपंचयिष्यतेचैतदुत्तरत्र। एवंप्राणस्यस्वहृदीवसर्वांगेष्वपिसम्यगेवावस्थानसद्भावेपि भगवदचिंत्यशक्तियोगात् भगवत्प्रसादासादितस्वाचिंत्यशक्तियोगाच्च विशेषतोहृद्यवस्थानमपिसंभवतीति सर्वरूपेषु

सम्यगवस्थितिरितियोजना । एवंविचित्रता अवरेषांप्रकाशव्याप्तिः । देवानामंशतोव्याप्तिः । तत्ववादाचार्याणांसम्यगेवाव स्थानमितिविचित्रता ॥ १३ ॥ एवमणूनांजीवानांभवतुशरीरेंशतोगुणतोवाव्याप्तिस्तथापिनदूरस्थदर्शनादिकंयुज्यते । केवलं जडेंद्रियाणांप्रकाशनेऽकिंचित्करत्वात् । चैतन्यप्रकाशस्यदेहमात्रव्यापकत्वेनस्वतोबहिर्गमनायोगादिलिंगदेहानुबद्धानादि जडेंद्रियेषु स्वरूपेंद्रियप्रकाशस्यव्याप्तत्वात्तत्संमिश्राचिदिंद्रियप्रकाशानां बहिर्व्याप्तित्वाद्दूरस्थपदार्थदर्शनादिकंयुज्यतइत्यतोब हिरपिदेहानुबद्धाचिदिंद्रियप्रकाशव्याप्तौ तन्मिश्रतयाचिदिंद्रियप्रकाशव्याप्त्यादिनोपपद्यतइत्याह ॥ स्वरूपेंद्रियेति ॥ उक्तंच

स्वरूपेंद्रियसंमिश्रै जडैरेवेंद्रियैःसदा । आमोक्षंतुप्रवर्तंते साक्षिणाचक्वचित्क्वचित् ॥ १४ ॥

सुदृढोनिर्णयोयत्र ज्ञेयंतत्साक्षिदर्शनं । तत्रब्रह्मादिदेवानां साक्षिणास्यात्प्रवर्तनं ॥ १५ ॥

दूरदर्शनादिकमपि तत्प्रकाशव्याप्त्यायुज्यतइतितत्वदीपे "चिदचिन्मिश्रमेवैत न्मनोयावच्चसंसृति"रिति, चिन्मात्राणींद्रि याण्याहु र्मुक्तानामन्यदैवतु । तान्येवजडयुक्तानीति"च । साक्षिशब्दोदितस्वरूपांतःकरणेविषयाः आत्मस्वरूपं मनस्तद्धर्माज्ञा नसुखाद्याःक्षुत्पिपासादयोऽविद्याकालोऽव्याकृताकाशः परमाणु(पदार्थ)गतापर्यवसितावयवविभागः सामान्यतःसर्वंचेति । "सुदृढोनिर्णयोयत्र ज्ञेयंतत्साक्षिदर्शन"मित्युक्तेः । उक्तस्यापवादमाह ॥ तत्रेति ॥ प्रायशइतिग्राह्यं । तत्रऋजूनामनादिकाला दारभ्यस्वरूपेंद्रियैरेवप्रवृत्तिः । नचपरदत्तस्वाम्यनिमित्तकाभिमानरूपं स्वाभिमन्यमानमहदादिविषयं मदीयमेतदितियज्ज्ञानं

तदपिवृत्त्यनुबद्धसाक्षिरूपमेव । केवलस्वरूपत्वेमुक्तावप्यनुवृत्तिप्रसक्तेः । अतःकथंस्वरूपत्वमितिवाच्यं । तत्रापि पूर्वतन्मदधीनतयास्थितमित्येवमाकारेणानुवृत्त्यंगीकारात् अव्यक्तिमाश्रित्यसमाधानात् मुक्तावननुवृत्तेः । अपरेतु केवलवृत्तिरेवेति मन्यंते । यद्यपि(वृत्तिज्ञानमपिऋजूनामस्ति)बाह्यमनोवृत्त्याख्यमपिप्रायोऽनुवर्तते । अन्यथा"एवंप्रलयकालेपि प्रतिभातपरावर"इत्यादिवृत्तिज्ञानातिरोधानप्रतिपादकानुभाष्यादिविरोधात् । तथापि वृत्तेरवर्जनीयसंनिधितयैवावस्थानं नतुवृत्तिमपहाय स्वरूपज्ञानस्यार्थविषयीकरणासामर्थ्यं । अतोवृत्तिज्ञानसद्भावेप्यस्याकिंचित्करत्वात्साक्षिणएवस्वप्राधान्येनसर्वविषयीकारित्वोक्तिर्युक्तेति । तात्विकयोगिनामपि पदप्राप्त्यनंतरंप्रायःस्वरूपज्ञानेनैवप्रवृत्तिः । तदावृत्त्यनुषंगेप्युक्तरीत्याऽकिंचित्करत्वं ।

एवंदेहगताजीवा देहादिष्वभिमानिनः । रागद्वेषमदक्रोध लोभाद्यैरभिसंवृताः ॥९६॥

कादाचित्कासुरावेशादिसद्भावदशायांकेवलवृत्त्यैव । अतात्विकयोगिनामशेषमोक्षयोग्यानांप्रागुपपादितरीत्यैव । तदेतत्प्रमाणलक्षणवाक्यार्थपर्यालोचनयासम्यगवगम्यतइतिरहस्यमिति ॥ ९४ ॥ ९५ ॥ उक्तार्थोपसंहारपूर्वकंवैराग्यजननाय संसारस्वरूपंप्रपंचयति ॥ एवमित्यादिना ॥ देहादिष्विति ॥ देहेंद्रियांतःकरणतद्धर्मेषु देहानुबंधिपुत्रकलत्रापत्यवित्तादिष्वित्यर्थः । अभिमानोनामास्वकीयेस्वकीयत्वाभिनिवेशः । अयमिहाभिसंधिः । देहादिषुस्नेहाभिमानाभ्यां तत्पुष्टिहेतुभूतेष्वशोभनेष्वेवविषयेषु शोभनत्वाध्यवसायोजायते । तेनचसंततविषयानुध्यानं । "ध्यायतोविषयान्पुंसः संगस्तेषूपजायते" । संगः

स्नेहः । संगात्संजायतेकामः । कामितप्रतिरोधे कामात्क्रोधोभिजायते । क्रोधाद्भवतिसंमोहः । संमोहः अकार्येच्छा मिथ्याज्ञानंच । संमोहादुक्तलक्षणात्स्मृतिभ्रंशपदोदितनिषेधादिविषयकस्मृतिनाशेज्ञातार्थस्याप्यन्यथास्मृतिः । ततश्चशास्त्रार्थस्याप्यन्यथास्मरणात् सर्वात्मनाबुद्धिनाशो निर्णीतज्ञाननाशः । ततश्च दोषाद्दष्टापुनःप्रवृद्धरागाद्यरिषड्वर्गबलेनकाम्यपापादिकर्मकरणेनास्ति जायते वर्धते परिणमते प्रक्षीयते नश्यतिचेति षडूर्मिप्राप्तिः । ततश्च गर्भवासादिदुःखप्राप्तिः । पुण्यकर्मणा स्वर्गस्ततःपातादिर्नरकाद्यनर्थावाप्तिश्चेत्येवंसंसृतिकलापइति । उक्तंचैतद्गीताभाष्ये "रागादिदोषकारणमाहे"त्यादिना । रागादिदोषाणांकारणं रागादिदोषाएवकारणंयस्येतिप्रमेयदीपिकायां संमोहादीनांरागादिजन्यत्वंतद्धेतुत्वंचोक्तमिति ॥९६॥ सुखदुः

जन्ममृत्युजराव्याधि सुखदुःखभयादिकान् । भुंजतेस्वर्गधूमादि पथभूनिरयादिषु ॥

खभयादिकान् । भुंजतइति ॥ यद्यपि सुखदुःखादिकंजडांतःकरणात्मकमेव । तथापि सुखदुःखाद्यात्मनामनसिविकृतेसति तत्राभिमानात्तस्मिन् चिद्रूपांतःकरणस्य अंगारवह्निवद्धिमिश्रीभावलक्षणसंनिधिसद्भावेन स्वच्छद्रव्यतयातत्रसुखदुःखादेः प्रतिफलनेजाते जपाकुसुमसंनिधानेन स्फटिकेरक्तिमेवोच्चनीचतारूपभिन्नाभिन्नविकारविशेषः स्वरूपएवजायते । अयमेवहि भोगोनाम । "नीचोच्चतैवदुःखादे र्भोगइत्यभिधीयत"इत्युक्तेः । प्रपंचितंचैतत्प्रागेवेति । वैराग्यातिशयजननायसंसारासारतां सूचयितुं स्वर्गादेराशुतरविनाशित्वेन भाविपातशंकया गतागतेनापरिचितमार्गगमनेनाभ्रधूमादिसहावस्थानेन व्रीहियवादि

प्रवेशात्कर्म शेषेणपुरुषद्वारास्त्रीयोन्यादिप्रवेशगर्भवासादिद्वारामानुष्यादिप्रापकत्वाच्च तत्साधनंकाम्यकर्म निंदितं तिर्यङ्गिर यदुर्मानुष्याद्यतिमहानर्थप्रापकत्वान्निषिद्धकर्मातीवानिंदितमिति लेशतोदर्शयति ॥ स्वर्गेति ॥ तच्चोत्तरत्रविवरिष्यते । नचा नुष्ठितकर्मसमाप्त्याबंधहानिरितिभ्रमितव्यमित्याह ॥ पुनरिति ॥ "सर्वभिन्नंपरात्मानं विस्मरन्संसरेदिहे"तिपष्ठतात्पर्यं । भ्रमंति परिवर्तंते ॥ १७ ॥ १८ ॥ संसारानादित्वं भगवज्ज्ञानंविनातदपर्यवसानंचविशदयितुं कर्मणामानंत्यादिकंदर्शयति ॥ एकस्मिन्निति ॥ जीवइतिशेषः । उपपादितंचैतद्गीताभाष्ये"एकस्मिन्शरीरेबहूनिकर्माणिकरोति । तानिचैकैकानि बहुजन्म

भ्रमंतोविविधान्देहान् प्राप्नुवंतःस्वकर्मभिः ॥ १७ ॥ पुनःकर्माणिकुर्वंतः पूर्वकर्मानुसारतः ।
भगवज्ज्ञानवैधुर्या त्संसारेऽस्मिन्भ्रमंतिहि ॥१८॥ एकस्मिन्नप्यसंख्यानि ह्यनादीनिप्रवाहतः ।
कर्माणितानिच पृथक्केनानाप्यवसर्यंतः । अचेतनशरीराणि स्वकर्मफलभांजिच ॥ १९ ॥

फलानिकानिचित् । तत्रचैकैकानिकर्माणिभुंजन्नाप्नोत्येव शेषेणमानुष्यं । ततश्चबहुशरीरफलानिकर्माणीत्यगमाप्ति"रिति । न्यायविवरणेच"कर्माण्यनंतानियथेष्टमीशः संपाद्यतेषांफलमिच्छयैव । क्वचिद्ददातिक्वचनोददातिनह्यानंत्यात्कर्मणांभोगनाश" इति । प्रकृतकर्मस्वरूपमनुव्याख्यानवचनेनप्रपंचयति ॥ कर्माणीति ॥ अयंभावः । एकस्मिन्जीवेऽनादिकालादारभ्यानंत जन्मसुकृतान्यनंतकर्माणि वर्ततइतिहिव्युत्पादितं । तेषुचैकैकस्यकर्मणएकैकश्चेतनोविशेषेणाभिमानीत्येवमनंतकर्मणांपृथग

भिमानिनोजीवाएकस्मिन्नेवजीवेऽसंख्याचर्तंते । तेष्वेकैकस्यापि पृथक्पृथगनंतानिकर्माणि । तानिच पृथगेकैकजीवाभिमतानीत्येवंपरंपरयानंतानंतकर्माणि तदभिमानिनोऽनंतानंतजीवाश्चेत्यपर्यवसानं । एवंसत्यनंतानंतकर्म तदभिमानिचेतनराशीनांदर्शनादिमान् प्रवर्तकोनिवर्तकः फलादिदाताचेश्वरइति निस्सीममाहात्म्यवान्भगवान्महालक्ष्मीमहिलइति । उक्तंचतत्वप्रदीपे"परस्तु स्वेच्छयैवानंतकर्मणामनंतजीवराशीनां तदेकैककर्माभिमानिनांपुनरनंतकर्माणीत्येवमनंतानंतकर्मजीवसंतानानां तत्तत्कर्म प्रवर्तयति निवर्तयति पुण्येनज्ञानमुत्पाद्य पापंविनाश्य तस्यपुण्यपापरहितस्यज्ञानिनः प्रसन्नःस्वयंफलमनंतंददातीत्यतो नारायणस्यात्याश्चर्यरूपोमहिमेत्याशय"इति । ननुकर्माभिमानितयोक्तजीवाःके सर्वेपिजीवाःस्वस्वकर्माभिमानितापादकताद्दशस्वकर्मपरिपाकदशायामितिब्रूमः । स्वकर्मफलभांजिचेत्युक्तत्वात् । तदाकिंप्रकारेणवर्त तइतिचेत् लिंगदेहमात्रेणस्वाभिमन्यमानकर्ममात्रशरीराश्च स्वाभिमन्यमानकर्ममात्रज्ञानयुक्ताः सुप्तप्रायावर्तंते । उत्तमानांतु भगवद्विषयकज्ञानंतदन्यत्रापिक्वचिदनुसंधानंच भवति । ऋजूनांतु कर्माभिमानितायामप्यशेषजगद्विषयकज्ञानं भगवतिचपारोक्ष्येणज्ञानपूर्तिः बहुविषयेष्वापरोक्ष्येणच । अत्रविशेषः । ऋजूनामृजुकर्माभिमानित्वं तदितरेषामुत्तमानामुत्तमकर्माभिमानित्वमिति । अवश्यंचसर्वजीवानांकर्माभिमानित्वमंगीकार्यं । तथाहि । समानयोग्यतापन्नानांमध्ये कस्यचित्कोटिकल्पात्पूर्वंमुक्ति रन्यस्यइतःपरंकोटिमहाकल्पानंतरंमुक्तिरितितावत्सिद्धं । अन्यथाजगत्प्रवाहपर्यवसानापातात् । एवंचबहुकालव्यवधानेनबहुषुमुच्यमानानांतावद्बहुकल्पेषुजायमानस्थूलतरशरीरभावावश्यंभावात्तत्रचस्वसमानापेक्षयाबहुकर्मणाजन्ममृत्युक्षुत्पिपासाजरारोगसुखदुःख

भयचिंतादिरूपसंसारधर्माणामवर्जनीयत्वेन बहुकालात्पूर्वंमुक्तस्ययावत्संसारेसंभूय यावत्कर्मदुःखादि तदपेक्षयापश्चान्मुक्तस्य तावत्संसारेसंभूयततोबह्वधिककर्मादिप्राप्तेः । तस्यचानादियोग्यतासापेक्षत्वात् । अन्यथातद्दातुरीश्वरस्यवैषम्यादिदोषप्रसक्तेः । योग्यताधिक्येच सकलश्रुत्यादिसिद्धसाम्यव्याघातात् । तथाचसमानांसर्वथादेहादिसाम्यमंगीकार्यं । एवंचातिबहुतरकालव्यत्यासेनमुच्यमानानांसंसारिणांस्थूलदेहादिसाम्यं बहुकालंस्थूलदेहाभावेनविनानुपपद्यमानं तत्कल्पयति । प्रलयकाले बहुकालस्थूलदेहाभावश्च प्रायोबहुकल्पादिषुकर्माभिमानितानंगीकारे नसंभवति । संभवतिचतदंगीकारे । कर्माभिमानितायां सूक्ष्मदेहव्यतिरिक्तदेहाभावस्योक्तत्वात् । अतोबहुकालंकर्माभिमानिता सर्वेषामपिसिध्यति । ननु सर्वप्रकारेणाप्यवैषम्याभावे

प्रत्येकंतेषुचानंत कर्माण्येवंविधानिच । तानिचैवमितीशस्य निःसीमाशक्तिरुत्तमा ॥ १०० ॥

स्वरूपयोग्यतासाम्यानुपपत्तेः तदन्यथानुपपत्त्यादेहादिसाम्यसिद्धयेखलु कर्माभिमानिता सर्वजीवानामंगीकृता । तथापि कस्यचित्पूर्वंमुक्तिः कस्यचित्पश्चादिति वैषम्यात्कथंसाम्यमितिचेन्मैवं । योग्यतासाम्याविरोधित्वादस्य । संसारेसुरनरतिर्यगादिदेहप्राप्तौ प्रागुदाहृतविविधतद्धर्मप्राप्तौ वैषम्यस्योक्तरीत्यायोग्यतायांपर्यवसानेन साम्यविरोधःस्यात् । उक्तसर्वसाम्यमंगीकृत्यैव कालव्यवधानेनमोक्षांगीकारमात्रेणकथंतद्विरोधः । अस्याल्पत्वेनाविवक्षितत्वात् । ननु सुखदुःखादौ तत्साधनेषु तद्योग्यतायां साम्येपि कस्यचिद्बहुकालंबद्धता कस्यचित्पूर्वंमोक्षइत्यत्रापि कश्चिदवांतरयोग्यताविशेषोवश्यं(अंगीकार्यः)वक्तव्य

एव । अन्यथा कालव्यत्यासेनमुक्तिदातुर्हरेर्वैषम्यादिप्राप्तेः । तथाहि । कर्माभिमानित्वंहि पूर्वकर्मफलरूपमित्युक्तं स्वकर्मफल भांजीति । तत्रकश्चित्कियंतंकालंकर्माभिमानितयास्थित्वा कियंतंकालंस्थूलदेहादिकंप्राप्यसुखदुःखाद्यनुभोक्तृतयास्थित्वा पश्चान्मुक्तः । तदत्यंतसमएवापरस्ततःपरंबहुतरकालेबद्धएवास्ते । सतिचैवंतयोर्देहादिसाम्येपिपूर्वमुक्तापेक्षया तत्समस्यापरस्याधिकंकर्माभिमानित्वमितिवाच्यं । अन्यथाप्रागुक्तविरोधात् । तथाच तदापादकंकर्म योग्यतापेक्षं नवा । नचेत् वृथाकर्मदातुरीश्वरस्यवैषम्यादिदोषः । आद्ये योग्यताभेदोंगीक्रियतएवेति समत्वानुपपत्तिरिति । सत्यं । स्वरूपानंदमुक्तिस्थानसाम्यादौ हरिप्रियत्वे तद्भक्तिवैराग्यादिसाधनेषुच तथा देहतद्धर्मसुखदुःखादितदापादककर्मसु चेत्येवमादिष्वेवयोग्यतासाध्यत्वंश्रुत्या

ईशाधीनाश्च तेजीवाःकर्तारश्चयथार्हतः । यत्कारयेदीशएषां ज्ञानेच्छायत्नपूर्वकं ॥ १०१ ॥

दिसिद्धं । तथाप्यवांतरात्यल्पकिंचिद्व्यत्यासस्त्वंगीकृतएव । यथोक्तं "कादाचित्कीयोग्यताहि नवतेषांनिषिध्यत" इति । नचैतावतातारतम्यव्यत्यासोभवति । तद्व्यत्यासापादकएवप्राङ्निरस्तइति । एकेतु अवांतरयोग्यताव्यत्यासाभावेपि केवलेश्वरेच्छयैवाधिकं कर्माभिमानितादि । नचवैषम्यादिदोषापातः । एतादृशवैषम्यादेः कर्मफलप्रतिपादकवेदाप्रामाण्यानापादकत्वेनादोषतायाअंगीकारार्हत्वादित्याहुरित्यलं ॥ ९९ ॥ १०० ॥ ननु प्राप्नुवंतःस्वकर्मभिरित्ययुक्तं । जीवानांकर्मकर्तृत्वासंभवात् । कर्तृत्वंहि क्रियास्वातंत्र्यं । नहिस्वातंत्र्यंजीवस्य । जिघृक्षोर्ग्रहणाभावादितियुक्त्यनुगृहीतसाक्षिणाऽस्वातंत्र्यस्यप्रतीतत्वात् ।

स्वातंत्र्यस्येश्वरैकनिष्ठतायाः समस्तागमसिद्धत्वाच्च । "सहिसर्वस्यकर्ता,नान्यःकर्ता,इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः, नकर्तृत्वंनकर्माणिलोकस्यसृजतिप्रभुः, नाहंकर्तानकर्तात्वमित्यादौ स्पष्टंजीवस्यकर्तृतानिषेधाच्च । नह्यकर्तुःकर्मफलप्राप्तिरुपपद्यतइत्यतआह ॥ ईशेति ॥ चोप्यर्थे । द्वितीयःसमुच्चये । अयमाशयः । अस्त्येवेश्वरस्वातंत्र्यं । अस्तिचजीवस्यापिकर्तृत्वं । तदभावेविधिनिषेधशास्त्रवैयर्थ्यापत्तेः । नहि कर्तारमंतरेणारण्यरोदनायमानस्यशास्त्रस्यसार्थक्यंसंभवति । नहिजडंप्रतिविधिनिषेधौभवतः । नापीश्वरंप्रति । तथासतितस्यपुण्यपापलेपप्रसंगेनानीश्वरत्वापत्तेः । अतोजीवएवकर्तांगीकार्यः । कर्तृत्वेपियोग्यताभेदेनवैचित्र्यं यथार्हतइत्यनेनसूचयति । ननूक्तंजीवस्यकर्तृत्वमनुपपन्नमिति तत्राह ॥ यदिति ॥ पूर्वकर्म । उक्तंचभाष्ये"पूर्वकर्मप्रयत्नंच संस्कारंचाप्यपेक्ष्यतु । ईश्वरःकारयेत्सर्वं तच्चेश्वरकृतंस्वय"मिति । ईश्वरएवस्वतंत्रःकर्ता । जीवस्तुपरतंत्रःकर्ता । अतोजीवस्यक्रियास्वातंत्र्यरूपकर्तृत्वाभावाभिप्रायेणाकर्तृत्वोक्तिः । उक्तंचगीतातात्पर्ये । स्वातंत्र्याभावापेक्षयैवजीवस्याकर्तृत्वमित्यादिना । क्रियास्वातंत्र्याभावेकथंकर्तृत्वमितिचेत् जीवगतप्रवृत्त्यादेरीश्वराधीनत्वेपि ईश्वरोजीवस्यप्रयत्नेच्छाद्युत्पाद्यैव प्रवर्तयतीतिजीवेच्छाधीनत्वस्याप्यनुभवसिद्धत्वात्स्वेच्छाधीनप्रवृत्तिमत्त्वस्यैवकर्तृशब्दार्थत्वात्कर्तृत्वमुपपद्यते । नच करिष्यामीतिचेच्छायामप्यकरणान्नकरिष्यामीतिचेच्छायामपिकरणात् कथंस्वेच्छाधीनप्रवृत्तिमत्त्वमपीति वाच्यं । नह्यस्माभिर्नियमेनस्वेच्छाधीनप्रवृत्तिमत्त्वंजीवस्योक्तं । तथासतिस्वतंत्रकर्तृत्वप्राप्तेः । तथाचान्वयव्यतिरेकयोः स्वातंत्र्यमात्रप्रतिक्षेपकत्वं । नतूत्सर्गतःस्वेच्छाधीनप्रवृत्तिमत्त्वरूपकर्तृत्वस्य । उक्तंचभगवता "उपलब्धिवदनियम"इति ।

अन्याधीनस्यकर्तृत्वानुपपत्तिः "यथाचतक्षोभयथे"तिनिरस्ता । नन्वेकस्यांक्रियायांकथंजीवेश्वरयोरुभयोःकर्तृत्वमितिचेत् रथाकर्षणादावनेकेषांकर्तृत्वस्यदर्शनात् । ईश्वरस्यकर्तृत्वेविधिविषयत्वंस्यादितिचेन्न । अस्वतंत्रकर्तुरेवविधिविषयता नतुस्व तंत्रकर्तुः । नहि स्वतंत्रःस्वात्मानंविधिवद्धंकरोति । ननु जीवस्यापिकथंविधिविषयत्वं । तदिच्छादेरीशेच्छोत्पादितत्वेनके वलंतदधीनतयाजडतुल्यत्वादितिचेन्न । जडतौल्यव्यावृत्त्यर्थे विधिविषयत्वायैवेशेनजीवस्येच्छादेरुत्पादनात् । अतएव चाद्रि कायांसर्वत्रप्रवृत्त्यादेरदृष्टाधीनत्वादेरपि संध्योपास्त्यादौमाणवकस्यविध्यादिदर्शनादितिसमाहितं । जीवगतकर्तृत्वस्येशाधी श्वराधीनत्वेन केवलंदारुयोपायमाणस्यकथंकर्तृत्वमित्यभिप्रायइतिचेत्सत्यं । तथापि जीवकर्तृत्वस्यनिर्बाधप्रामाणिकत्वेनसिद्ध त्वेनापलपितुमशक्यंतत्कर्तृत्वं । अतएवेश्वराधीनत्वंनेतिवदामइतिचेन्न । तस्याप्यागमानुमानाभ्यांसिद्धत्वेननिषेधानर्हत्वात् । एवंजीवस्यपराधीनकर्तृत्वे प्रत्यक्षादित्रयरूपंपूर्णंप्रमाणमस्तीति । तदुक्तं "प्रत्यक्षेणाकर्तृताजीवसंस्था तथागमादनुमानाच्च सर्वं । विष्णोर्वशेतन्नहेयंद्वयंचजानन्विद्वान्कुरुतेकार्यकर्म । पूर्णंप्रमाणंतत्रयंचाविरोधेनैकत्रस्थ"मित्यादि । अस्तिप्रमाणं परंतुस्वतंत्रत्वमुपपत्तिविरुद्धं । किंचाहंप्रयत्नकरणे नस्वतंत्रः । हरिर्यदिमयाप्रयत्नंकारयिष्यतितर्हिकारयत्वितिमत्वातूष्णीम वस्थानस्यैवोचितत्वेनाकरणस्यैवोपपत्तियुक्तत्वात् । तथाचप्रयत्नादावप्यस्वतंत्रस्य कर्तृत्वंकथमंगीकार्यमितिचेत्सत्यं । कर्तृत्वस्वा तंत्र्ययोरुभयोरपिप्रमितत्वात्त्यक्तुमयुक्तत्वेनयुक्तिविरुद्धस्यापि ईशाचिंत्यशक्त्यैवोपपत्तिरितिवदामः । "यत्तुयुक्त्याविरुध्येत तदीशकृतमेवही"त्युक्तेः । ततश्च विध्यविषयेभ्यईशमुक्तजडेभ्योव्यावृत्तस्य स्वसंबंधितयाविधिज्ञानस्य तज्जन्यायाःफलसाधने

च्छाया स्तदनुकूलकृतेश्च जीवेऽनुभवसिद्धत्वात्तस्यचज्ञानादेरीश्वराधीनत्वस्य श्रुतिस्मृतीतिहासपुराणादिसिद्धत्वा दीश्वरो विधिनिषेधशास्त्रावैयर्थ्याय स्वस्यवैषम्यादिदोषपरिहारायचा नादियोग्यताकर्मापेक्षयैवजीवंप्रेरयित्वा विध्यादिपरशास्त्रेणविहितादौकर्तव्यताज्ञानमुत्पाद्येच्छामपिजनयित्वा क्रियानिष्पत्त्यनुगुणंप्रयत्नंसंपाद्य स्वयंचतदंतर्गतःकुर्वन् कर्तृत्वशक्तिनियमनपूर्वकंदारुयोषास्थानीयेनापिजीवेन कर्म कारयतीत्येवमीश्वरस्यस्वातंत्र्येणकर्तृत्वं जीवस्यक्रियास्वातंत्र्याभावेपि ज्ञानेच्छाप्रयत्नपूर्वककृतिमत्त्वरूपं दारुयोषादिष्वविद्यमानमनुभवसिद्धममुख्यंकर्तृत्वमस्तीत्यंगीकर्तव्यमिति। एतच्च तत्वप्रकाशिकायांनयचंद्रिकायांचस्पष्टं। गीताभाष्येच अकर्तृत्वेपिविधिद्वारा ईश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैःकर्मद्वारापुरुषार्थोभवतीति नप्रवृत्तिविधिवैयर्थ्यमिति। अकर्तृत्वेपीत्यस्य अपराधीनकर्तृत्वाभावेपीत्यर्थः प्रमेयदीपिकायामुक्तः। अस्तुवा क्रियास्वातंत्र्यरूपं कर्तृत्वं तदपि जीवेईश्वरायत्तंविद्यते। स्वावरजीवापेक्षयावाजडापेक्षयावातदुपपत्तेः। यथोक्तंगीतातात्पर्ये। "तदधीनस्वतंत्रत्वं स्वावरापेक्षयैववित्वि"ति। "स्वातंत्र्यंचजडान्प्रति, प्रभुर्हिजीवोजडमपेक्ष्येति"च। गीताभाष्येउक्तंच"स्वातंत्र्यंजडमपेक्ष्ये"ति। उक्तंप्रमेयदीपिकायां "जडंहिपरकृतेननोदनादिनाक्रियावद्भवति। नत्वागंतुककारणमंतरेणस्वेच्छया। जीवस्त्वनादिसिद्धया सत्तातुल्यया परमेश्वरप्रसादायत्तयाक्रियाशक्त्या कर्तोच्यतइति युक्तस्तत्रकर्मविधि"रिति। यद्यपि कर्मापेक्षांविनैवेश्वरस्य फलदानेशक्तिरस्ति तथापि तदपेक्षयाफलंददामीतिस्वसंकल्पादेवतदपेक्षेति नस्वातंत्र्यहानिः। उक्तंच "एतानपेक्ष्यैवफलंददानी त्यस्यैवसंकल्पइतिस्वतंत्रता। नास्यापगच्छेत्सहिसर्वशक्ति र्नाशक्तताकचिदस्यप्रभुत्वा"दिति। तथाचोक्तंजीवकर्तृत्व

मुपपद्यतइति ॥ १०१ ॥ कर्मकरणेजीवस्येच्छाधीनप्रवृत्तिवत्फलप्राप्तावप्यस्तिप्रवृत्तिरिति नशंका कार्येत्याह ॥ फलेति ॥ "फलमतउपपत्तेरितिसूत्रं, कर्मण्येवाधिकारस्तेमाफलेषुकदाचन । माकर्मफलहेतुर्भू"रितिगीतायां ॥ १०२ ॥ एवंसंसारस्थितिंसंग्रहेणनिरूप्य पूर्वमुक्तानां पश्चान्मुच्यमानानांसर्वेषामधिकारिणां यावत्संसारे संभूय दुःखादिप्राप्तौविशेषमाह ॥ उत्तमानामिति ॥ नीचनीचापेक्षयोत्तमोत्तमानांदोषजातमल्पमेव । योग्यतासाम्ये इतःकोटिकल्पात्पूर्वविमुक्तानां इतःपर

फलदाताऽखिलानांच कर्मणांहरिरेवहि ॥ १०२ ॥ उत्तमानामुत्तमानां दुःखाद्यत्यल्पमेवहि ।
समानांसममेवस्यात्सर्वेषामप्यसंशयं ॥१०३॥ योग्यताकामकर्मादि वैचित्र्यादपिचित्रता ॥१०४
तृणवृक्षादिजीवेभ्यः पश्वाद्याउत्तमामताः । मानुषावर्णभेदेन तथैवाश्रमभेदतः ॥ १०५ ॥
क्षितिपामनुष्यगंधर्वा देवाश्चपितरश्चिराः । आजानजाःकर्मजाश्च पुष्करःशिष्टदेवताः ॥ १०६ ॥

मनेककोटिकल्पव्यवधानेनमुक्तिंप्राप्स्यतां सममेव । उपपादितंचैतत् । सुखादिकंवैषयिकमपि पुण्यादिकं यावत्संसारेमिलित्वोत्तमोत्तमानामधिकं समानांसममेवेतिसिद्धत्वान्नोक्तं ॥१०३॥ तदेतद्वैचित्र्यंकुतइत्यतआह ॥ योग्यतेति ॥१०४॥ तदेव संक्षेपतोदर्शयति ॥ तृणेत्यादिना ॥ सप्रमाणकंप्रपंचितंचैतत्तारतम्यसंग्रहव्याख्यानइतिनेहोच्यते । "खगामृगास्तृणादयःपिपीलिकाश्चगर्दभा इत्यत्रोक्तास्तु तदासुरुत्तमायत"इत्युक्तेर्भगवतासहोर्ध्वलोकगमनाच्चोत्तमत्वावगतेर्नात्रैकगुणोपासकपरतृणा

दिशब्देनविवक्षिताः । अत्रपूर्वपूर्वमभिहिताम्यउत्तरोत्तरमभिहिताउत्तमाः । एकपदोपात्ताःसमाइतिज्ञेयं ॥ १०५ ॥ शिप्रदेव ताइति ॥ "कलाभ्यश्चान्यदेवेभ्य"इत्युक्तान्यदेवशब्दोक्तास्तारतम्यप्रकरणे पृथगनुपात्ताइत्यर्थः । सम्यायरत्नावल्यनुसारेण

शनिश्चोषावुधःस्वाहा केचित्पर्जन्यपूर्वकाः । वैवस्वतमरीच्याद्याः सनकाद्याश्चयोगिनः ॥ १०७ ॥
विष्वक्सेनोपक्लृसान्य शतस्थधनपास्तथा । मित्रतारेनिरक्र(तिप्रावह्यश्च)तिःप्रावहीचततोधिकाः १०८
प्रसूतिवह्निभृगवो नारदश्चादितिस्तथा । शतरूपाचंद्रसूर्य यमाश्चप्रवहस्तथा ॥ १०९ ॥ गुरुःस्वायं
भुवेंद्राणी दक्षरत्यनिरुद्धकाः । प्राणःसुरेंद्रकामौच मृडाहीशविपस्त्रियः ॥ ११० ॥ स्त्रियःपङ्जां
बवत्याद्याः शेषवींद्रविपास्तथा । तथैवभारतीवाण्यौ मुख्यवायुचतुर्मुखौ ॥ १११ ॥ नएतेपूर्वपूर्वेभ्यः
सर्वेशतगुणोत्तराः । केचिद्दशगुणोद्रिक्ताः केचित्पंचगुणाधिकाः ॥ केचिद्द्विगुणतःश्रेष्ठाः केचिदत्यल्प
तोवराः ॥ ११२ ॥ सजातीयगुणेष्वेवं विजातीयास्ततोधिकाः । परिमाणतएवैतत्सजातीयगुणे
ष्वपि ॥११३॥ तारतम्यंस्फुटत्वेतु वैलक्षण्यंमहत्तरं । सहस्रकोटिगुणतो ष्यनंतगुणतोपिच ॥ ११४ ॥

स्वाहापर्जन्यमध्यस्थाअपि केचनानुक्तदेवताग्राह्याइत्याशयेनकेचिदित्युक्तं । उत्तमत्वेनक्लृप्तप्रधानवायुरुद्रेंद्रादिभ्योनीचतया क्लृप्तपर्जन्याच्चान्ये शतस्थाअत्रग्राह्याः । एतेन देवर्षिपितृपनराइतिपंचविधत्वेनोक्तानामपि स्थावरतिर्यङ्मानुषक्षितिपगंधर्वादि

भेदेनानेकविधत्वमित्युक्तंभवति ॥१०६–११४॥ पुनश्चक्रोडीकारेणप्रभेदमाह ॥ पुनश्चेति॥ अत्र पुनश्चेत्येवस्वत्वचनं । अन्यदेका दशतात्पर्यवचनं । संतस्तुत्रिविधाइतितत्रपाठः । तेचापित्रिविधामताइत्यत्रोत्तममध्यमाधमप्रभेदेनत्रिविधानामपिसुरादीनांप्रत्ये कंत्रिविधत्वमुच्यतइतिमंतव्यं । तत्रचैकादशतृतीयतात्पर्ये "स्वनीचेषुतुदेवेषु" इत्याद्युत्तरग्रंथपर्यालोचनयातत्प्रतीतेः । सात्विक सात्विकादेवाइतिद्वितीयतात्पर्येसात्विकसात्विकत्वेनोक्तानांदेवानां गीतातात्पर्ये "देवाइंद्रोविरिंचाद्या इतित्रैधैवदेवता" इति पुनश्चसात्विकादिप्रभेदेनत्रैविध्याभिधानाच्च । एवं "पितृगंधर्वपूर्वाश्च मुनयःकर्मदेवता" इतिमध्यमेष्वपित्रैविध्यंतत्रैवदर्शितं ।

पुनश्चत्रिविधाःप्रोक्ता उत्तमाधममध्यमाः । उत्तमादेवतास्तत्र ऋष्याद्यामध्यमामताः । अधमा

मानुषोत्कृष्टा स्तेचापित्रिविधामताः ॥ ११५ ॥ जयाद्याःपार्षदाविष्णो राजानोयेचविश्रुताः ।

तथा राजसानांमध्ये सात्विकाएवभागवताविप्रादयइति । मनुष्योत्तमानां राजससात्विकत्वमभिधाय राजसस्थसात्विकेष्वेव (शुद्धसात्विकाः) किंचिद्रजोयुक्तसात्विकाःसमरजोयुक्तसात्विकाःसत्वात्किंचिदूनतमोयुक्ताःसात्विकाइतिसात्विकत्वेनैकत्वस्य सत्त्वात् किंचिदूनतमोयुक्तसात्विकाइत्युक्तेस्त्रैविध्यमवगम्यते । किंचिद्रजोयुक्तसमरजोयुक्तसात्विकानांच रजोयुक्तसात्वि कत्वेनैकत्वस्यविवक्षितत्वात् । तृणादिजीवास्तु अधममनुष्योत्तमेष्वंतर्भूताइतिनानुक्तिदोषः । नन्वथाप्युक्तेष्वनंतर्भूतावहवो वर्ततइत्यतआह ॥ ११५ ॥ जयाद्याइति ॥ "नीचाःसुरेभ्यस्ततएवतेऽखिला" इतितिनिर्णयोक्तेः । गरुडानंतविष्वक्सेनाति

रिक्तानांविष्णुपार्षदानांमध्यमत्वं ॥ विश्रुताइति ॥ तत्रतत्रपुराणेषुप्रसिद्धाराजानइत्यर्थः । बल्यादीनांकर्मदेवानांदेवावरत्व मस्मदाचार्यैःसम्यगुपपादितंद्रष्टव्यं । ततश्चमध्यमतोपपत्तिः । योगेशा योगसिद्धाः ॥ मनुपूर्वकाइति ॥ स्वारोचिषाद्येका दशमनवःसावर्ण्याद्याःसेंद्राइत्यर्थः ॥ ११६ ॥ ऐरावतमुखाइति ॥ मुखशब्देन समस्तदेवतावाहनादिसंग्रहः । कामधेन्वा दयइति कल्पतरुप्रभृतीनांग्रहणं । यक्षगंधर्वचारणाद्याइति ॥ नृत्तगानादिकर्तारो वाहनादिकृतस्तथा । सिद्धसिद्धेतिवक्तार

कर्मदेवाश्चऋषयो योगेशामनुपूर्वकाः ॥ ११६ ॥ ऐरावतमुखाश्चैव कामधेन्वादयस्तथा । अप्सरोयक्ष गंधर्व चारणाद्याःसुरानुगाः ॥११७॥ आजानजावह्निपुत्रा स्तथैवपितरश्चिराः । पक्षिपन्नगनाथाश्च नद्यद्र्यभि भिमानिनः ॥११८॥ येविश्रुतामहात्मानः सर्वएतेचमध्यमाः । विनासुपर्णप्रमुखान्नारदादींश्चकांश्चन ॥११९॥

## इतिमध्यमाधममोक्षयोग्यप्रकरणं ॥ ४ ॥

श्चाराश्चैषांतथैवच । सेवाकाराइतिह्येव भेदंदृष्टविधामता”इतितृतीयतात्पर्योक्ताग्राह्याः ॥ ११७ ॥ पक्षिनाथाः गरुडारुण जटायुःप्रभृतयः । पन्नगनाथाः “शेषस्तुप्रथमोजातोवासुकिस्तदनंतरं । ऐरावतस्तक्षकश्चकर्कोटकधनंजयौ । कालियोमणिनाग श्चेत्यादिना । एतेप्रधानतोनागाःकीर्तिताद्विजसत्तमे”त्यंतेनास्तीकपर्वण्युक्ताग्राह्याःभागीरथीकावेर्यादिनद्यभिमानिन्योगंगा लोपामुद्राद्याः अद्र्यभिमानिनो मेरुहिमवदादिजीवाः ॥ ११८ ॥ येचान्येमहात्मानस्त्रिजन्मभरतपरीक्षिदाद्याःपुराणादिप्रसि

द्धाः । पक्षिपन्नगनाथाइत्यादिपूक्तापवादमाह ॥ विनेति ॥ येउत्तमाधिकारित्वेनप्रसिद्धाः गरुडशेषभृगुनारदाद्याः तानृते ऽन्ये मध्यमाइत्यर्थः ॥ ११९ ॥ इतिमध्यमाधममोक्षयोग्यप्रकरणं ॥ ४ ॥

अथतेष्वेवोत्तमाधिकारिणांदेवानांस्वरूपज्ञानं मोक्षांतरंगसाधनमिति तन्महिमानं स्वावगतात्यल्पमपिसंग्रहेणनिरूपयिष्यन् तावदुत्तमाधिकारित्व निर्दोषनिस्सीमगुणपूर्णत्वादावेकादशद्वितीयतात्पर्यवचनंपठति ॥ तत्रेति ॥ पुष्करमारभ्यविरिंचपर्यंतमुत्तरोत्तराःक्रमेणसर्वदोषवर्जितागुणाधिकाश्चेत्यर्थः । अत्रनिर्दोषाणामपिदेवानांबहुप्रारब्धवत्त्वेननिमित्तेनासुरावेशनिमित्तककिंचिद्दोषवत्त्वंवक्ष्यते । तदपि नीचनीचापेक्षयोत्तमोत्तमेष्वल्पमितिसर्वदेवतासाधारणत्वेपिगुणपूर्णत्वेऽस्तिविशेषः ।

तत्रोत्तमादेवतास्ताः सर्वदोषविवर्जिताः । गुणैःसर्वैःसुसंपन्ना विरिंचादुत्तरोत्तरं ॥ १२० ॥

ज्ञानानंदादिगुणानांनीचनीचापेक्षयोत्तमोत्तमेषु संख्यापरिमाणाभ्यांशतगुणाद्युत्तमत्वे प्यंशवैचित्र्यस्फुटताभिराधिक्यस्य सद्भावादत्यधिकविजातीयगुणसद्भावस्या प्यन्यथानुपपत्तिसिद्धत्वाच्च सुसंपन्नाइत्युक्तं । तत्रसंख्याधिक्यंनाम तावदानंदाख्यागुणाः नीचनीचेष्वेकजातीयविषयव्यंग्यायावत्संख्याकावर्ततेसएकइतिविवक्षित्वा तज्जातीयानंदास्तदुत्तमेषुदशशतादिसंख्याका स्तदधिकावर्ततइत्येवंरूपंद्रष्टव्यं । एवंज्ञानादिगुणांतरेषु सजातीयेषुसंख्याधिक्यंद्रष्टव्यं । परिमाणाधिक्यंनामनीचस्यकस्यचित्कदलीफलादिरूपैकैकविषयानुभवव्यंग्योयएकानंदोवर्तते तादृशएवोत्तमस्याप्येकैकविषयव्यंग्यानंदोप्येकएव ।

तथापि एकजातीयविषयव्यंग्यएवानंदउत्तमगतश्चेत्सोतिमहानिति । ( एकमेवकदलीफलंद्वेधाकृत्वा तत्रैकंभागंयदिनीचोभक्षयति तदातस्यतद्रसानुभवेन यावानानंदोनतावानेवभागांतरंभक्षयितुरुत्तमस्यानंदः किंतुततोमहान् ) । तत्रमहत्त्वंनाम परिमाणातिशयोवर्तते । एकादशतात्पर्ये "विषयेभ्योधिकसुखव्यक्तिःप्राकाम्यमिष्यते । इतरेषांसुराणांतुनिस्सीमानंदभोजन" मिति प्राकाम्यसिद्धिरहितस्य कदलीफलादिविषयभोगादिना यावत्सुखव्यक्तिस्तदपेक्षया तत्सिद्धिमतस्तस्मादेवकदलीफलभोगादधिकसुखव्यक्तिः । तत्सिद्धिमान् यदिदेवस्तर्हि तस्मादेव निस्सीमानंदव्यक्तिरित्युच्यमानत्वात्परिमाणोत्कर्षउपपद्यते । प्रमेयदीपिकायांच"मय्यनंतगुणेनंतेगुणतोनंतविग्रहे"इत्यत्र संख्यापरिमाणाभ्यांगुणानामानंत्यमनेनाचष्टइत्युक्तेः संख्याधिक्यं नाप्रसिद्धं । नचगुणेगुणायोगः । "अस्मत्पक्षेगुणाद्याश्च तद्वंतोहिविशेषत"इत्यनुव्याख्यानेतदुपपादनात् । अंशाधिक्यंनाम यथा तूलपिंडसमपरिमाणस्यापिवज्रमणेरतिनिबिडतयास्थितत्वेनांशाधिक्यंदृश्यते तथा रुद्राद्यानंदापेक्षयासरस्वत्याद्यानंदादेः शतगुणितपरिमाणाद्याधिक्येपि अंशानां न शतादिगुणितोत्तरत्वमात्रमपितु ततोप्यनंतगुणितत्वमिति । नचाद्रव्यत्वाद्गुणानामंशाभावः । "तस्माद्गुणादिकमपिनास्त्यनंशतयाक्वचि"दितिगीतातात्पर्येसमाहितत्वात् । वैचित्र्याधिक्यंनाम तत्तद्विषयव्यंग्यमोदप्रमोदमुत्प्रमुत्प्रियादिष्वपि प्रत्येकमवांतरवैचित्र्याधिक्यं । मोदोह्यप्रकृष्टविषयोत्थः । विषयवैचित्र्यान्मोदवैचित्र्यं । प्रकृष्टविषयोत्थोहिप्रमोदः । प्रकृष्टविषयवैचित्र्यात्प्रमोदवैचित्र्यमित्याद्यवांतरवैचित्र्याधिक्यं । एतदपि शिवाद्यपेक्षयासरस्वत्यादेरनंतमेव । "भोगानांचविशेषेण वैचित्र्यंलक्ष्यतेक्वचि"दितिहिभाष्ये । स्फुटताधिक्यंतु "परिमाणेशतगुणे

प्यानंदस्फुटतावशात् । यथादीपाच्छतगुणाप्यग्निज्वालानदीपवत् । स्फुटीभवेद्यथैवाग्नि र्बहुलोपिनसूर्यव"दित्यादिना तैत्तिरीयभाष्येव्युत्पादितं । एतदपि शिवाद्यपेक्षयाऽनंतगुणितमेवसरस्वत्यादेरिति । एतेन "उमायावदनंतांशान् पूर्वहृष्टे भ्यएवत्वि"तिसजातीयज्ञानेउमारुद्राद्यपेक्षया रुद्रसरस्वत्यादेरनंतगुणोत्तमत्वमभिधीयते । तदयुक्तं । फलभूतेसजातीयानंदादौ शतगुणाद्युत्तमत्वस्यैव तैत्तिरीयबृहदारण्यकभाष्यादावुच्यमानत्वात् । ज्ञानरूपसाधनाधिक्येसाध्याधिक्यावश्यंभावात् । तदुक्तमनुभाष्ये "युक्तंचसाधनाधिक्या त्साध्याधिक्यंसुरादिषु । नाधिक्यंयदिसाध्येस्यात्प्रयत्नःसाधनेकुत" इति । तथाचज्ञानानंत्यमनुपपन्नमित्येतन्निरस्तं । तैत्तिरीयाद्युच्यमानशताद्युत्तमत्वस्य सजातीयानंदादिसंख्यापरिमाण

चतुर्विंशतितत्वाना मेतएवाभिमानिनः । तज्जस्यांडादिकस्यापि देहप्राणादिनामपि ॥ १२१ ॥

मात्रविषयत्वात् । विशेषविषयज्ञानातिशयेनचानंदादिगुणेष्वंशवैचित्र्यस्फुटतानामानंत्यस्याधिकफलस्यप्राप्त्युपपत्तेः । विजातीयज्ञानेनविजातीयानंदादेरप्यधिकंभावाच्च साध्यसाधनयोरैकरूप्यमेवेत्यास्तांविस्तरः ॥ १२० ॥ तत्रतावदधिकार्युत्तमत्वंदेवानांकुत इत्यतस्तत्संभावनायाशेषगुणपूर्णतासिद्धये सर्वाभिमानितयासर्वनियामकत्वमाह ॥ चतुर्विंशतीत्यादिना ॥ "शब्दाद्यानभआद्याश्च मनोयुक्तेंद्रियाणिच । अहंकारोमहांश्चैव त्रयोविंशतिकोगुणः । प्रकृतिस्तुचतुर्विंशे"ति तृतीयतात्पर्ये । तत्राव्यक्तमुख्याभिमानिनीमहालक्ष्मीः । "सरस्वतीभारत्यौचदेव्यौप्रकृतिमानिनी"त्यनुभाष्ये । नच "पुरुषा

व्यक्तकालानांरमैवैकाभिमानिनी”त्यनुभाष्यविरोधः । पुरुषादीनांरमाभिमानिनी । साचैका देहदेह्यादिभेदरहितेतिसुधायामन्यथाव्याख्यातत्वात् । “महतोब्रह्मवायूतु तद्भार्येचाभिमानिनः” । विज्ञानतत्वस्यमहत्तत्वएवांतर्भावाभिप्रायेणचतुर्विंशतितत्वविवक्षा । यद्यप्येतेऽहंकारादितत्वानामप्यभिमानिनः तथापि रुद्रादीनामप्यहंकाराद्यभिमानित्वात् । महत्तत्वस्यतुब्रह्ममात्राभिमानिकत्वादसाधारण्याभिप्रायेणविशिष्यमहदभिमानित्वोक्तिः । प्रपंचयिष्यतेचैतदुत्तरत्र । “अहमःशेषवींद्रौच शिवस्तद्दयितास्तथा । अहमःशेषवींद्रौच रुद्रेंद्रौकामतत्स्त्रिया” वितिहितातपर्यं । रुद्रादिपुत्रत्वादिंद्रादीनामप्यहंकाराभिमानिता । अहंकाराभिमानिनःकामपुत्रस्यानिरुद्धस्येतिहिसुधायां । “मनस्तत्वस्यमनोरूपेण

कर्मनामान्नवागादे व्योंमकालादिकस्य च । वेदवर्णपुराणानां तथैवह्यभिमानिनः ॥ १२२ ॥

सर्वजीवगतानांच गांभीर्यप्रश्रयादिनां । तथाचित्सुखभक्त्यादि गुणानामभिमानिनः ॥१२३॥

शंकरः । शेषःसुपर्णइंद्रश्च मनांस्येवपृथक्पृथक् । अनिरुद्धोदेवगुरुर्मनोदेवास्सचंद्रकाः । वरुणश्चमनोभवः पर्जन्यःसर्वतोऽवरः । मनोभिमानीसप्रोक्तः” इत्यादिप्रमाणानि । एतेषामुक्तिर्विवक्षाविशेषेण । पर्जन्यादुत्तमानांसर्वेषामपिमनोभिमानित्वंद्रष्टव्यं । एतच्चप्रपंचयिष्यामः । चित्तबुद्धिसंकल्पविज्ञानध्यानादीनांमनस्यंतर्भावः । “एतत्सर्वं मनएवे”तिश्रुतेः । तत्रचित्ताभिमानीब्रह्मा । अग्निश्चित्तस्यदेवता । सरस्वतीबुद्ध्यात्मिका । उमाबुद्ध्यभिमानिनी ।

मित्रःसंकल्पदेवता । निशाकरोविज्ञानदेवता । नेदंविज्ञानंबहिर्विज्ञानतत्वं । तस्यसरस्वत्येकाभिमानिकत्वात् । किंत्वंतः करणवृत्तिविशेषएव । "चराचरव्यपाश्रयस्तुस्यात्तद्व्यपदेशोभाक्तस्तद्भावभावित्वादि"तिसूत्रेतथाऽभिधानात् । वरुणोध्या नदेवतेत्यादिच । इंद्रस्त्विंद्रियात्मा । तत्राप्यवांतरविशेषस्तु"मित्रोयमश्चवरुणः कुबेरश्चदिगीश्वरः । श्रोत्राभिमानिनःसर्वे । सोमश्चरोहिणीचैव दक्षवामश्रुतिस्थितौ । भूतवायुस्त्वग्देवता । सूर्यश्चसूर्यभार्याच चक्षुर्द्वयसमाश्रितौ । चक्षुष्ट्वमग्नेरसनंवरुणो घ्राणमश्विनौ । पृथिवीतथा । वाग्देवतेततोवह्नि रुमाचपरिकीर्तिते । स्वाहायाअपिवाक्त्वंच । पाणिःशक्रोदक्षश्च । पादाभि मानीतुजयंतः । पायुर्यमोनिरृतिरेवच । मित्रश्च उपस्थमानीतुशिवोमनुर्दक्षस्तथैवच । शब्दनामाबृहस्पतिः । अपानव्यानो दानसमानाःस्पर्शवातादयश्चस्पर्शाद्यभिमानिनः । शब्दाद्याःपंचशिवजाः । आकाशमानीविघ्नेशः । वायोस्सर्वेपिमरुतः । पुरंदरस्तेजोभिमानीवह्निश्चवसवश्चान्येपावकाद्याःवह्निपुत्राश्च । ब्रह्मशेषसुपर्णेंद्रशिवाद्याआपईरिताः । सर्वेचाबभिमानिनः । वैश्वदेव्यस्ततोह्यापः । सर्वेसुराःक्रमेणैवविष्णोर्जाताअबाख्यकाः । पृथिवीमानिनीचोमा भूदेवताशनिःपृथिव्यात्मा । इदमादि जगत्सर्वं शक्रदेहंविदुर्बुधाः । अनिरुद्धस्यभार्योषाप्यंडाभिमानिनी । अत्रादिशब्देनलोकग्रहणं । ब्रह्मरुद्रादयस्सर्वे लोकानाम भिमानिनः । भूतानांभौतिकानांच मंत्राहुतिगणस्यच । अचेतनगणस्यास्य कल्पकोमित्रनामकः । प्राणामंत्राणिभूताश्च चिद चित्त्वविभेदिनः । अचितांकल्पकोमित्रः"इत्यादिच । देहेंद्रियांतःकरणनाम्नोस्यद्विविधस्यच । स्थूलसूक्ष्मशरीरस्य सर्वेषाम भिमानिनी । भारती । सर्वदेहाभिमानीतु शरीरपुरुषःशिवः । सर्वदेहाभिमानीतुदेहिनांतुदिवाकरः । देहमानीवैश्रवणः ।

प्राणशब्देनाहंकारकार्यविशेषोदेहेवायुविशेषश्चोच्यते । अहंकारकार्यविशेषस्याहंकारिकःप्राणोभिमानी । मरुतःप्राणमानिनः । प्रधानोवायुरेवच । मुख्यपंचकरूपस्तु गरुडोमध्यपंचकः । अवमःपंचकस्त्वन्ये प्राणाद्यास्तस्यसूनवः । प्राणापानौशेषवींद्रौ तथोदानसमानकौ । रुद्रेंद्रौतत्परश्रेष्ठौवायुर्व्यानउदाहृतः । आत्मनांजीवानां । सर्वजीवाभिमानीतुब्रह्मैवहिमहापुमान् । जीवाभिमानीशेषस्तु । मानुषाणांतुजीवानामभिमानीपुरंजनः । अस्यदेवत्वाभावेपिप्रसंगादुक्तिः । कर्मेतिपुष्करःप्रोक्त उपानामाभिमानिनी । ब्रह्मासमुद्दिष्टः सएवान्नाभिमानवान् । देवीचान्नाभिमानिनी । देवीसरस्वती । अन्नपतौसूर्ये । अन्न देवोनिरुद्धकः । अन्नदेवतासोमः । पृथिवीचान्नाभिमानिनी । वागत्र वाक्स्वरूपंविवक्षितं । आदिपदेनघोपादिग्रहणं । वाङ्नाम्नीतिसरस्वती । घोषमानीचतुर्मुखः । अव्याकृतव्योमाभिमानिनीमहालक्ष्मीः । ब्रह्माच । कालस्यरमाविरिंचगरुडा दयः । आदिपदेन व्योमकालप्रभेदानां दिशां कल्पवत्सरादीनांसंग्रहः । श्रोत्राभिमानिनएवदिगभिमानिनः । कल्पवत्सरा दीनांतन्नामकश्चतुर्थस्कंधादावुदाहृताद्रष्टव्याः । धूमार्चिरादिमार्गस्थाः सात्यकिकृतवर्माद्यंशिनःकृष्णपक्षादिदेवताः । विद्या देव्यौप्रकीर्तिते । सर्ववेदाभिमान्येवगरुडोवेदपूरुषः । ऋचःश्रीर्गौरुमाद्याश्च साम्नःप्राणशिवादयः । अग्निःसामाभिमानीस्या द्वरुणस्तुस्वरात्मकः । ऋग्भाष्ये “सर्वविद्याभिमानित्वादित्यारभ्यातिच्छंदांसिसर्वदेव्यःप्रकीर्तिता”इत्यंतेन विद्यातदवांतरभे दच्छंदआद्यभिमानिनःसप्रपंचमुक्ताः । बृहद्भाष्येअश्वब्राह्मणेदेवानांपृथक्पृथक्तत्तत्तत्वेष्वभिमानित्वंविशदमुक्तं । वर्णशब्देन पंचाशद्वर्णानांब्राह्मणत्वादीनांचग्रहणं । सर्ववर्णाभिमानीशेषः । स्वराणांवायुवरुणाद्याः । व्यंजनाभिमानीमनुः । देवाश्चतु

र्वर्णगताः । तत्रब्रह्मदक्षगुरुभृग्वादयोब्राह्मणाभिमानिनः । वायुशेषेंद्रमनुवरुणाद्याःक्षत्राभिमानिनः। कुबेरवास्तुपुरुषाद्यावैश्य जात्यभिमानिनः । निरऋत्याद्यास्तुरीयस्य । भारतादीनांभारत्याद्याः । शेषस्सर्वपौरुषेयस्य । इतिहासपुराणानां सोमाद्या अभिमानिनः । भक्त्यादीत्यादिपदेनवैराग्यादिग्रहणं । द्वितीयेनसौंदर्यादेः । चित्सुखभक्त्यादिगुणानांब्रह्मवायू । प्रपंचयिष्यतेचैतत् । अशनायापिपासामानीतु मारुतः । तदन्येषांगुणानांतु तदन्येविबुधाःस्मृताः । अत्रप्रायउक्तानि प्रमाणवचनान्येव । ग्रंथगौरवभयान्नतद्ग्रंथनामगृहीतं ॥ १२१-१२३ ॥ एवंचतुर्विंशतितत्वानां रमाब्रह्मादयोभिमानिनइत्युक्तं ।

सर्वाभिमानिनःसर्वे तथापिह्युत्तरोत्तरं । आधिक्यंवक्तुमेतेषां पृथक्स्थानमुदीर्यते ॥ १२४ ॥

आधिक्यक्रमएवात्र शास्त्रतात्पर्यमिष्यते । स्थानेषुत्ववरेषांच परेसंतिनचेतरत् ॥ १२५ ॥

तत्रविशेषंगीतातात्पर्यवचनेनदर्शयति ॥ सर्वाभिमानिनइति ॥ सर्वे सर्वाभिमानिनश्चेत् श्रीरव्यक्तस्य ब्रह्मामहतइत्यादि विशिष्याभिमानस्थानोक्तिः कथंशास्त्रेउपपद्यते इत्यतआह ॥ उत्तरोत्तरमिति ॥ यद्यपिसर्वेपिदेवाःसर्वतत्वाभिमानिनः । तथापि तेषांदेवानामिंद्राद्यपेक्षयारुद्रस्य तदपेक्षयाविरिंचस्येत्येवमुत्तरोत्तरमाधिक्यंवक्तुं उपादानोपादेयभावापन्नमहदहमिंद्रियादिपृथगभिमानउदीर्यते । पृथक्स्थानोक्तौ कार्याहंकाराद्यभिमानिनःसकाशात्तत्कारणमहदाद्यभिमानिनउत्तमत्वमित्यादि ज्ञायतइतिभावः ॥ १२४ ॥ आधिक्योक्तिःकिमर्थेत्यतआह ॥ आधिक्येति ॥ सर्वेपिसर्वाभिमानिनइत्यस्यापवाद

माह ॥ स्थानेष्विति ॥ अवरेषां रुद्रादीनां अभिमानस्थानेषु अहंकारेंद्रियादिषु परे उत्तमाब्रह्मादयस्संति । नचैतरत् उक्त वैपरीत्यरूपंइतरत्उत्तमाभिमानस्थानेषुमहदादिषु अवरेयेइंद्ररुद्रादयस्तेषांसत्त्वंनेत्यर्थः ॥ १२५ ॥ तथापींद्रकामादेरहंकारा द्यभिमानित्वंक्वचिदुच्यमानमनुपपन्नंस्यात् । उत्तमाभिमन्यमानस्थाने अवराभिमानाभावोक्तेरित्यतउक्तं । तथापीति ॥ यथाराजपुत्राणां पितरिराज्यंपालयतिसतितत्पुत्रत्वादेवराज्याधिपतयइत्युपचरितोव्यवहारोस्ति तथोत्तमाभिमन्यमानस्थान विषये तेषांतत्पुत्रत्वादिसंबंधः तेषामुपचरिताभिमानोस्ति । मनस्तत्वादीनांसर्वेप्यभिमानिनःप्रायः । पर्जन्यस्यापिपृथङ्मनोभि मानस्योक्तत्वेनतदुत्तमानामुक्तरीत्याऽवर्जनीयत्वात् सर्वेचाबभिमानिनइति सर्वदेवानामप्यबभिमानस्यस्पष्टमुक्तेश्च । एवम

तथापिपितुरर्थोयः(यत्) पुत्रस्याप्युपचर्यते । अव्यक्तादिपदार्थानां सर्वेतदभिमानिनः ॥ १२६ ॥

न्यत्रापियथासंभवंद्रष्टव्यं । सर्वेषांसर्वतत्वाभिमानित्वेउक्तोयंसंकोचोबाह्यतत्वेष्वेव । यदातुतान्येवांडांतर्भूताद्युपचयेनाध्यात्मं शरीरांतर्भुक्तान्नाद्युपचयेनपुनःपुनःस्थूलानिभवंति तदासर्वेषामपिसर्वतत्वाभिमानितास्त्येव । तत्तदभिमन्यमानतत्वानांसंमि लितत्वात् । "सूक्ष्मेंद्रियाणिसंत्येव स्युःस्थूलान्यप्यहंकृतेः । तेषांभूतैरुपचयः सृष्टिकालेविधीयत"इति भूतेभ्यश्चोपचीयंते पुनर्ब्रह्मशरीरत"इत्युपचयोक्तेः । "अन्नमशितंत्रेधाविधीयतेयत्सूक्ष्मंतन्मन"इत्यादिना प्रतिदिनंमनआदीनामुपचयापच ययोरुपपादनाच्च । "महतोब्रह्मवायूच तद्भार्येचाभिमानिनः । अहमःशेषवींद्रौच रुद्रेंद्रौकामतत्स्त्रियः । मनसस्त्वनिरुद्धश्च

चंद्रश्चान्येयथोदितमित्युक्त्वा, एवंक्रमोव्यत्ययस्तु स्थूलसूक्ष्मादिभेदत" इतितृतीयतात्पर्येस्पष्टोक्तेश्च । एतेन ब्रह्मवायूचत द्भार्ये शेषवींद्रौचतत्स्त्रियौ । शिवस्तद्दयिताशक्र कामौतद्दयितादयः । सर्वेसुराःक्रमेणैव विष्णोर्जाताअवाख्यकाइत्या द्युक्त्वा, एतेतुमहदादीनां सर्वेपिह्यभिमानिन" इत्यैतरेयभाष्यवाक्यं "सर्वाभिमानीभगवान्स्वाराडिंद्रउदाहृत" इतितृतीयता त्पर्यवचनंचसमंजसंभवति । अतएवगीतातात्पर्योदाहृतवाक्ये उपसंहारे अव्यक्तादिपदार्थानांसर्वेतदभिमानिनइत्युक्तं । तथाच सर्वेदेवाःसामान्यविशेषप्रकारेणसर्वतत्वाभिमानिनइत्युक्तमुपपन्नमिति ॥ १२६ ॥ एवं तत्वाभिमानितयासूचितंदेव तातारतम्यं क्रमेणतन्महिमातिशयंज्ञापयन्भाष्यवचनेन विशदयति ॥ पूर्वइति ॥ "पूर्वे प्रथमोत्पन्ने । प्रथमावा । स

पूर्वेंपूर्वेयतोविष्णोः संनिधानंक्रमाधिकं । सामर्थ्याधिक्यमेतेषां पश्चाद्देवलयस्तथा ॥ १२७ ॥

न्निधीयतेऽत्रेति सन्निधानं प्रतिमे" ति तत्वप्रकाशिकायां । तथाचैवमर्थः । यतःपूर्वपूर्वोत्पन्नाःभगवतोविशेषेणप्रतिमाभूताः पूर्वपूर्वस्मिन्विष्णोःक्रमेणाधिकसंनिधानंवर्तते। "संनिधानंतुतत्प्रोक्तं सामर्थ्यव्यंजनंहरेः" इति। अतोभगवत्संनिधिपात्रत्वादेव एतेषामुत्तमोत्तमानामितरापेक्षयासर्वविषयेपिसामर्थ्याधिक्यं स्वावरलयानंतरंस्वदेहलयश्च । उत्पत्तिस्तुपूर्वपूर्वमेवभवति । किंचांडांतर्बहिश्च देहतःप्रकाशतश्च मुक्तौतुस्वरूपविकासेनैवचित्प्रकाशतश्चव्याप्तेश्च । तेषामुत्तरोत्तरमतिशयेनाधिका । नात्र संशयःकार्यः सर्वप्रमाणसिद्धत्वादस्यार्थस्येति । ननुकालाकाशाद्यभिमानिनांविरिंचगरुडादीनामभिमन्यमानयावद्देशकाल

व्याप्तिः कथमुपपद्यते । रमारमेशयोरेवदेशकालव्याप्तत्वेन तदन्यस्यतदभावादितिचेत्सत्यं । अभिमानिनामभिमन्यमान व्याप्तिरित्युत्सर्गः । यत्रबलवत्प्रमाणविरोधस्तत्रापवादोस्तु । वस्तुतःकालाद्येकदेशव्याप्ताब्रह्मादयः सर्वमापरोक्ष्येणपश्यंत स्तदभिमतिंकुर्वंति । यथायज्ञदत्तादिःस्वगृहमानी । इयांस्तुविशेषः । यज्ञदत्तादिर्नसाकल्येनगृहादिकंपश्यति । नापिनियाम यति । तत्सत्ताच नतदधीना । विरिंचादयस्तुकालादिकं(सुसूक्ष्माशेषविशेषसहितं)तुसूक्ष्ममपिसविशेषं साकल्येनपश्यंतोऽभि मानिनएकदेशेस्थिताएवनियमनादिकंकुर्वंति । अतएवाभिमन्यमानदेशादौसंचरंतिचानेकरूपैरिति । एकेनैवरूपेणसर्वव्या प्त्यभावेप्यनेकैःपृथग्रूपैरस्तिव्याप्तिरित्येके । ननुस्वाभिमन्यमानतत्वव्याप्तदेहवत्त्वंनयुज्यते । तत्वादेर्देहसमानाकारत्वाभावेन

व्याप्तिश्चाभ्यधिकातेषा मतएवनसंशयः । अचिंत्यशक्तयःसर्वे सर्वज्ञाःप्रथितौजसः ॥ १२८ ॥

सर्वत्रनिबिडतया तत्रावस्थानानुपपत्तेः । अपिच पृथिव्यबादितत्वानामेकैकदेशेनान्यत्रापगमे देहैकदेशस्याप्यगमप्राप्तिः संकु चितत्वंचस्यात् । सर्वतत्वाभिमानिनां प्रमाणेपूच्यमानंसर्वजीवस्थूलशरीरेषुविद्यमानत्वं नयुक्तं । तत्वदेवदेहोपादानद्रव्यस्य परिमितत्वेनानंतधाविभागस्यायोग्यतापराहतत्वेन सशरीराणांतेषामनंतजीवस्थूलशरीरेष्ववस्थानानुपपत्ते र्युक्तिविरुद्धत्वा दित्यतो ऽघटितघटकाचिंत्यशक्तिसंपन्नत्वेनयुज्यत इत्याशयवानुक्तंसामर्थ्याधिक्यं विवृण्वंस्तदुपयुक्तंसार्वज्ञादिकंचाह ॥ अचिंत्येति ॥ "अचिंत्याश्शक्तयस्तासा"मित्यादिप्रमाणमनेनसूचयति ॥ १२७ ॥ १२८ ॥ ननुनिर्भेदस्याणोर्जीवचैतन्यस्य

कथंयुगपदनंतांशैरनंतजीवशरीरेष्ववस्थानं । निर्भेदेतस्मिन्नानात्वानुपपत्तेः । नच विशेषेणोपपत्तिः । स्वतोनिर्भेदेविशेषप्रवे शानुपपत्तेः । नहिघटस्यस्वेनैवविशेषोयुज्यते । नच तेषामचिंत्यशक्तिमत्त्वेन तयैवोपपद्यतइतिवाच्यं । पाशुपताधिकरणो क्तरीत्या तेषांतादृशशक्तेरेवायुक्तत्वादित्याह ॥ ईश्वरेति ॥ "अनंशस्यापिजीवस्ये"त्यनुभाष्येस्पष्टमेतत् । अत्यंतमघटितं घटयतोजगन्नाथस्येत्यादिचसुधायां । तथाच भगवदचिंत्यशक्त्यैवतेषामचिंत्यशक्त्यादिक मंशविभागादिकंच युज्यतइति भावः ॥ सर्वजीवानामिति ॥ स्थूलशरीरापन्नसर्वजीवानामितिबोध्यं । विरिंचेतुविशेषंवक्ष्यामः । "प्रतिशरीरंसर्वदेवाना मावासा"दितिबृहद्भाष्ये । स्वोत्तमैःप्रेरिताइत्यस्यायंभावः । अस्मदादिषुसर्वप्राणिषुनियामकतयावस्थितेषुतत्वदेवेषुमध्ये नीच

ईश्वराचिंत्यशक्त्यैव विभक्तांशैरनंतकैः । प्रेरकाःसर्वजीवानां स्वोत्तमैःप्रेरिताःसदा ॥ १२९ ॥

देवेषूत्तमोत्तमास्तच्चक्षुरादिनियामकतयावर्तंते । तत्रापितत्तदिंद्रियादिनियामकतयावर्ततेइत्येवंकर्मपरंपरावद्देवतापरंपरेति । कर्म तदभिमानी तत्कर्मेति परंपरा विश्वतोमुखीत्यपर्यवसिता । अत्रतु नावरदेवतानामुत्तमेष्ववस्थानं । किंतु अस्मदादिदे हेंद्रियादौनियामकतयास्थितस्यावरदेवस्येंद्रियादौ तदुत्तमाएववर्तंते । नतुसोपि नापितदवरः । तेष्वप्येकैकस्मिन्नेवमित्यवर क्रमेण पूर्वपूर्वपरित्यागेनोत्तमोत्तमस्वीकारइति चतुर्मुखे पर्यवसितापरंपरेति । तदुक्तमनुव्याख्याने"देवाएवहिदेवानां विशि ष्टाविनियामका"इति। यद्यप्युत्तरेष्ववराअपिसेवार्थतादिंद्रियादिषुवर्ततइतिप्रमितं । तत्त्वधिदैवरूपेष्वित्यविरोधइति ॥ १२९ ॥

एवंतत्तद्देहेंद्रियाद्यभिमानित्वेनसर्वत्रस्थितानांदेवानांतत्तदिंद्रियभोग्ययावच्छुभभोक्तृत्वेनानंतानंदोमंतव्यइत्याशयवानाह ॥ सर्वात्तारइति ॥ यद्वा अधिदैवादिरूपैरप्यशेषजगद्गतस्वस्वयोग्यशुभसर्वस्वभोक्तृत्वमनेनोच्यते । तदुक्तंबृहद्भाष्ये । "सुपर्णशेषरुद्राणां सर्वात्तृत्वंविशेषतः । प्रायेणात्तृत्वमिंद्रादेरिति" । यद्वा प्रलयकालेस्वसृज्यसर्वात्तृत्वमनेनाह । उक्तंच "स्रष्टुस्तुग्रासभूतस्यदेहस्तत्रलयंव्रजे"दिति । नकेवलं स्थावरऋषिगंधर्वादिसकलजीवतत्तद्योग्यशुभसर्वस्वभोक्तृत्वमपितु स्वयमेवस्रक्चंदनाद्यनेकविषयात्मनावस्थिताः परेणरूपेणभगवतउत्तमानांस्वेषांचभोग्यतयावर्ततइत्यतिमहाकौतुकमहिमा तेषामित्याशयेनाह ॥ स्वभोक्तारइति ॥ तच्चोक्तमैतरेयभाष्ये "तेहिदेवाःस्वयंभोग्याःस्वयंभोक्तारएवच । भोक्तृभोग्यात्मनानास्तितेषां

**सर्वात्तारश्चतेदेवाः स्वभोक्तारस्तथैवच । अक्षीणपूर्णविज्ञानाः सत्यकामाश्चसर्व(शः)दा ॥ १३० ॥**

दुःखंकथंचने"ति । पुनर्देवतामहिमानमाह ॥ अक्षीणेत्यादिना ॥ "विज्ञानंतुविशेषतः । देवादीनांतुयज्ज्ञानं विज्ञानंतदुदाहृतं" इतिच । ननु गीतोक्तंविस्मृतंचेति कालकर्मतमोरुद्धमित्यादौचविस्मरणाद्युक्तेः कथंज्ञानाक्षयइतिचेत्सत्यं । "आधिकारिकपुंसांतुबृहत्कर्मत्वकारणात् । उद्भवाभिभवौज्ञान"इतिगीताभाष्यरीत्या प्रबलप्रारब्धवशेन क्वचिज्ज्ञानाभिभवांगीकारेपि वृत्तिज्ञानसंततिनाशाभावस्य स्वरूपेव्यक्तज्ञानस्यापिपुनरात्यंतिकाव्यक्तत्वाभावस्याक्षीणज्ञानशब्देनविवक्षितत्वात् । अतएव विरिंचेतरेषांतिरोहितलाभोवेत्यादिकं प्रबलप्रारब्धनिमित्तककल्पावेशादिप्राप्ततिरोधानविषयमितिज्ञातव्यं । तच्चोक्तं । "अ

थोगिरीशादिमनोनुशायी कलिर्मंमाराशुसुवाङ्मयैश्शरै"रिति । उक्तश्चज्ञानाक्षयोबृहद्भाष्ये "अक्षीणज्ञानमनसः सदाशिवपुरस्सरा"इति । केचित्तु जगद्विषयज्ञानतिरोधानाभावविषयमेतदित्याहुः । अत्राक्षीणशब्दोक्तंवृत्तिज्ञानस्यानादित्वंप्रवाहापेक्षया । तथाप्रमाणलक्षणतट्टीकयोरभिधानात् । मुख्येतुविशेषंवक्ष्यामः । अत्रनिरवधिकसर्वविषयज्ञानंजगद्विषयेपि नदेवानामस्ति । "एकंचतत्वतोज्ञातुंविनासर्वज्ञतांनरः । नसमर्थोमहेंद्रोपि"इत्युक्तेः । तत्वतोज्ञानंनामैकस्यवस्तुनोऽतीतानागतवर्तमानकालेषु विविधविचित्रानंतावस्थापन्नस्य स्थूलसूक्ष्माशेषविशेषयुतस्य सप्रकारकंज्ञानं । तच्च प्रतिक्षणमनंतविशेषसहितानंतदेशकालप्रकृति तत्तत्कल्पीयदेवादिजीवतत्तत्कर्मतदभिमानिसहित तत्संबंध्यशेषप्रपंचप्रतीतिसापेक्षं । तथैकैकवस्तुगतभेदसादृश्यादिनिरूपकत्वेन समस्तपदार्थप्रतीतिसापेक्षमिहश्रूयतेतत्रतत्र । ततश्चैकैकवस्तुविषयकज्ञानं निश्शेषातीतानागतपदार्थप्रतीतिसापेक्षमितियुज्यते । ततश्चेंद्रादुत्तमानांयावद्विशेषसहिताशेषप्रपंचज्ञानवत्त्वं । महेंद्रोपिनसमर्थइत्युक्तेः इंद्रादीनांचैतत्कल्पीयाशेषविशेषसहितज्ञानमस्ति । अतीतादौसर्ववस्तुज्ञानंविशेषेषुतुप्रायस्तदन्येषांसुराणांतुतारतम्यक्रमेणह्रसितं । तदुक्तं प्रमाणलक्षणे । ततोर्वाक्क्रमेणह्रसितमिति तट्टीकायांस्पष्टं । "यद्यस्तितर्हिदेवादयोजानंति सर्वज्ञत्वा"दितिबृहद्भाष्ये । ज्ञानविज्ञानपारज्ञाःपरावरविदोपिचेत्यनुव्याख्यानसुधायामुपासनापादे नकेवलंवर्तमानाशेषविदः किंनाम परावरविदोपीत्युक्तं । "वेदायोवीनांपदमंतरिक्षेणपतता"मितिश्रुतिसिद्धंचैतत् । एकादशतात्पर्योक्त निस्सीमप्राकाश्यसिद्ध्याचातिमहत्तमज्ञानंतेषामवगम्यतइति ॥ सत्यकामाइति ॥ "सत्यकामायतोदेवा स्तेचित्ताद्यभिमानिन"इतिचतुर्थतात्पर्योक्तेः । अत्रदेवा

नांसत्यकामत्वं किंचित्कालव्यवधानेनैवकामितप्राप्तिः । नतुकामनादशायामेवेतिमंतव्यं । चतुर्मुखस्यापिक्षणव्यवधानेनसत्यकामत्वस्यप्रतिपादयिष्यमाणत्वात् । नच द्युनामकवस्वादीनांकामधेन्वादिकामेपुमोघतादर्शनान्नसत्यकामतानैयत्यमितिवाच्यं । तत्रप्रबलभोक्तव्यवशेनब्रह्मशापादिद्वाराभीष्मत्वादिमानुपदेहप्राप्त्यर्थत्वेनापवादांगीकारात् । श्रीमद्भार्गवरामदेवगुर्वादिचरणोपसेवया बहुधर्मज्ञानरूपपुरुषार्थहेतुत्वेनतात्कालिककामोपहतेःपश्चादिष्टत्वाच्च । अतएवोक्तमनुव्याख्यायां "अतः कामाहतत्वंतु मुक्तानामेवमुख्यत"इति । एतेन क्वचिद्विरुद्धकामोपीत्यादिनोक्तं नस्वतः किंत्वसुरावेशनिमित्तेनेतिज्ञायते । प्रपंचयिष्यतेचैतत् ॥ १३० ॥ किंबहुना यतोष्टमहासिद्धियुतत्वेनतेषांमहागुणत्वंज्ञायतइत्याशयेनाह ॥ निस्सीमेति ॥

**निस्सीमाष्टमहासिद्धि संपूर्णाःसर्वदैवतु । अतःपूर्णगुणाःसर्वे निःसीमानंदभोजिनः ॥ १३१ ॥**

एकादशतात्पर्यप्रायःसर्वगुणानांमहासिद्ध्यंतर्भावस्योक्तत्वात् । तथाहि । निस्सीमाष्टमहाभूतिसिद्धयोष्टादशस्मृताः । देवेभ्योन्यत्रदेवानां सिद्धयोष्टैवसंमताः । यादृशानंदकामःस्या त्तादृशानंदसंभवः । भोगान्विनैवप्राकाम्य"मित्यादिना । अणुत्वमहत्त्वलघुत्वप्राप्तिप्राकाम्येशित्ववशित्वप्राकाश्यलक्षणाष्टमहासिद्धिष्वनूर्मिमत्त्वदूरश्रवणदूरदर्शन मनोजवकामरूपपरकायप्रवेशयथासंकल्पसिद्ध्याज्ञाऽप्रतिहति परचित्ताद्यभिज्ञानाग्न्यर्काम्बुविषशस्त्रनखदंडशापाद्यप्रतिह त्यपराजयगुरुत्वादीनामुक्तत्वात् । तल्लक्षणविचारेचातिमहागुणवत्त्वंलभ्यते । तथा "मूलभूतास्तुसिद्धीनां देवानामष्टसिद्धयः । सर्वसिद्धिप्रधानास्ता स्तज्ज्ञाअ

ष्टादशस्मृताः । अष्टस्वंतर्गतास्तास्तु तदपेक्षतयाल्पकाः । यतोनिस्सीमकास्तेषां देवानामष्टसिद्धयः । देवेष्विंद्रेशवायुश्री विष्णूनामुत्तरोत्तरं । सिद्धयःपरिपूर्णाःस्यु र्विष्णोरेवनचान्यगाः । विषयेभ्योधिकसुख व्यक्तिःप्राकाम्यमेवतु । इतरेषांसुराणां तुनिस्सीमानंदभोजन"मित्यादिवाक्यपर्यालोचनया महामाहात्म्यप्रतीतेः । अत्रनिस्सीमशब्दोनिस्संख्यापरः । नतुनिरवधिकत्वपरः । निरवधिकत्वस्यविष्णवेकनिष्ठत्वात् ॥ १३१ ॥ किंचाशेषदेवानामपिवेदप्रतिपाद्यत्वान्महामहिमत्वमित्याह ॥ प्रायइति ॥ प्रोक्ताइति ॥ "देवतासर्वविद्यानां स्वयंनारायणःप्रभुरित्याद्यारभ्य इंद्रावराविशेषेण लिंगेनैवपृथक्पृथक्"इत्यं

प्रायोवेदोदिताःप्रोक्ताः क्रमेणनिखिलामताः । सर्वाधिकज्ञानभक्ति वैराग्यादिगुणोच्छ्रिताः ॥१३२॥

एकांतभक्तास्तेप्रीति मात्रोद्देश्यास्तथाहरेः । सर्वेचसोमपाःप्रोक्ताः सभार्यास्त्रिदिवौकसः ॥

तेनऋग्भाष्यइत्यर्थः । एतादृशमहामाहात्म्यप्राप्त्युपयुक्तभगवत्तत्त्वविज्ञानादिमत्त्वाच्चोक्तंयुक्तमित्याह ॥ सर्वाधिकेति ॥ "ज्ञानाधिक्यंचदेवानां भक्त्याधिक्यंतथैवच । विरागोऽभ्यधिकस्तेषा मतएवनसंशय"इत्येकादशतात्पर्ये ॥ १३२ ॥ केवलभक्तत्वाच्चोक्तंयुक्तमित्याह॥ एकांतेति ॥ फलानुद्देश्येननिरुपाधिकभक्ताइतियावत्। "एकांतानांनकस्यचित् । अर्थेनारायणो देव"इत्युक्तेः । ननु"मुक्तिप्रदानात्प्रतिकर्तृतामे सर्वस्यचाथोभवतांभवेत । हनूमतोनप्रतिकर्तृतास्या त्स्वभावभक्तस्यनिरौपधंमे"इतिनिर्णये । गुरुसूर्याद्यवतारभूततारसुग्रीवपुरस्सराणांमुक्तिप्रदानेन तत्कृतसेवाप्रतिकर्तृतामात्मनोभिधाय श्रीरामेण

हनूमतएकस्यैवफलोपाधिंविनास्वाभाविकभक्तत्वेननिमित्तेन मोक्षदानेपितत्सेवाप्रतिकर्तृत्वाभावोभिधीयते । तेनाव गम्यते प्रधानवायुरेकएव एकांतभक्तोनान्यइति कथंसर्वदेवानामप्येकांतिकत्वमिति । अपिच देवादयःस्वपदप्राप्त्यर्थंबहुयज्ञत पआदिसाधनानिकुर्वंतीतिश्रूयते । तत्कथमुच्यते नकस्यचिदर्थेनारायणोदेवइति । सत्यं । अस्त्येवदेवानांमोक्षाकांक्षा । तथापि नास्मदादिवदात्मसुखार्थं । किंतु तेषांसंसारेक्कचित्क्वचिदसुरावेशादिप्रतिबंधकबलेन क्वचिद्दुःखपीडयाचात्युद्रिक्त भगवदाराधनंनघटते । अतोऽतिशयेनसर्वदाभगवदाराधनार्थंमोक्षमाकांक्षंते । उक्तंचसप्तमतात्पर्ये । "कांक्षंतोमोक्षगमपि सुखंनाकांक्षतेयथे"ति । तत्वोद्योतटीकायांच "येषामपवर्गोपिपरमपुरुषाराधनार्थमभ्यर्थनीय"इति । किंच मोक्षाकांक्षापि नस्वानुष्ठितसाधनफलत्वेन किंतु श्रीहरिप्रीत्यर्थमेवज्ञानकर्माद्यनुष्ठानं । तथाच भगवांस्तत्साधनज्ञापकफलतयाविशेषानुग्रह मेवतेषुकरोति नांतरीयकतया । तदपेक्षितांमुक्तिमपिभक्तेषुदययाददाति । तेतु संप्राप्तपरमपुरुषपरमानुग्रहलक्षणस्वसाधन फलाः साधनफलतयानपेक्षितामपिमुक्तिंतदाज्ञयैव नांतरीयकतयास्वीकुर्वंति । तथाह्युक्तं । "यदिदद्याद्भक्तियोग फलंमोक्षम पीश्वरः । भक्तियोगफलत्वेन नतद्गृह्णीयुरेवते"इत्येकादशतात्पर्ये । "नेच्छंतिसायुज्यमपि फलत्वेनहरिर्यदि । ददातिभक्ति संतुष्ट आज्ञात्वेनैवगृह्णते"इतितृतीयतात्पर्ये । "आधिकारिकदेवानां स्वाधिकाराभिकामना । भवतिप्रीतयेविष्णो" रित्या देःपदाद्याकांक्षाचनविरुध्यतइति । प्रधानप्राणस्य सर्वथाकदाचिदपिनसाधनप्रतिबंधोदुःखादिपीडावा । ऋजुत्वात् । दुःखासंपीडितत्वोक्तेश्च । तस्मान्नात्मार्थंमोक्षाकांक्षा । किंतुभगवदाज्ञायाअनुलंघ्यत्वादेवमुक्तिस्वीकारइति । नचवाच्यं

गीताभाष्ये ब्रह्मादिभिरपिमोक्षस्यप्रार्थितत्वादित्युक्तेस्तद्विरोधइति । मोक्षप्रसक्तिस्तुत्यर्थमेतदित्यतोनब्रह्मणएकांतित्वविरोधइति प्रमेयदीपिकायामुक्तत्वात् । अन्यथा "नैकात्म्यतांमेस्पृहयंती"त्युत्तरग्रंथविरोधइति नकश्चित्क्षुद्रोपद्रवः ॥ सर्वेच सोमपाःप्रोक्ताइति ॥ ऋग्भाष्येप्रथमाध्यायेअष्टाविंशतिमवर्गे "ब्राह्मणादिंद्रराधसःपिबासोममृतूँरनु" इतिऋग्व्याख्याने "पिबेंद्रनोराधसोऽर्थे त्वामनुत्वृतुदेवता" इति ऋतुनामकदेवानामपिसोमपानमुच्यते । नचवाच्यं विष्णुरेवऋतुशब्दोक्तः । ऋत्वधिपःप्रोक्तःकेशवादिस्वरूपतइतितद्भाष्योक्तेरिति । तत्रऋतुनामकदेवताधिष्ठितभगवद्रूपाणामेवऋतुशब्दमुख्यवाच्यताभिधानात् । वस्तुतोऽग्न्यादिसूक्तेष्विवाधिष्ठानभूतानामपिग्राह्यत्वात् । अन्यथा ऋतूँरनु ऋतुदेवताअनुइति ऋतुदेवतायाइंद्रस्य

त्रयस्त्रिंशत्प्रवेशात्तु केषांचित्परिवारतः ॥ १३३ ॥

चसाहित्यमात्रंविवक्षितं । नपुनरिंद्रस्याप्राधान्यमित्यभिप्रायेण त्वामनुत्वृतुदेवताइति व्यत्यासेनव्याख्यानंकृतमितितट्टीकायां ऋतुदेवतायाइंद्रावमत्वज्ञापनाय भाष्यप्रवृत्तेरुक्तत्वेनतद्विरोधात् । किंच "इंद्रसोमंपिबऋतुने"तिऋचि आदित्यमार्गस्थाःकालदेवता ऋतुशब्दाइत्युक्तत्वाच्च । अपिच "अभियज्ञंगृणीहिनोग्नावोनेष्टःपिबऋतुने"त्यस्यामृचि विष्ण्विन्द्राग्नित्वष्टॄणांनदीदेवताभिर्ऋतुनाच सोमपानप्रार्थनोक्तेश्च । किंच विश्वेभिस्सोमपीतये, देवेभिर्याहियक्षिच, विश्वेभिःसोम्यंमध्वग्नइंद्रेणवायुना । पिबामित्रस्यधामभिः" इत्याद्यासुऋक्षु बहुशस्तत्रतत्रसर्वदेवानामपिसोमपानंप्रतीयते । नचात्रविश्वेदेवाएवोच्यंतइतिवाच्यं । विश्वेभिरितिपदेनैवेंद्रवाय्वोर्ग्रहणसंभवात्पृथक्तद्ग्रहणंव्यर्थमित्याशंक्य इंद्रवाय्वोःपृथग्ग्रहणंप्राधान्यादित्युक्तं टीकायां । तेन

विश्वशब्दस्यसर्वार्थत्वावगतेः । ननु भगवतःसृष्टिसंहारकर्तुःपालकत्वमहिमा नविशेषतोवर्णनीयः । सृष्टानांयावन्नसंहारस्ता वत्स्थितेःस्वतःसिद्धत्वात् । मुक्तौसंहाराभावादेवस्थितिसिद्धिः । नपालकत्वं । अतएवन्यायःप्रवर्ततेअयोगइति । तदर्थस्तु सृष्टिसंहारकर्तुरसंहारान्यरक्षायाअसंभवः । तेषांमुक्तौयतस्संहारस्यैवसर्वथैवायोगः संहाराभावादेवस्थितिसिद्धेः पालकत्व स्याप्ययोगइति । अतएवन्यायविवृतौ नचसंहारकर्तुरसंहारादन्यरक्षायाअयोगइति । भाष्यंच "सृष्टिसंहारकर्तृत्वमेवास्य नपालकत्वं । स्वतःसिद्धेरिति । एवंप्राप्तेऽसिद्धांतयत्सूत्रकारः "प्रकृतैतावत्त्वंहिप्रतिषेधतिततोब्रवीतिचभूय"इति । भाष्य कारश्च उक्तंसृष्टिसंहारकर्तृत्वमात्रंप्रतिषिध्य ततोधिकंब्रवीति । नैतावदेनापरोअन्यदस्त्युक्षासद्यावापृथिवीबिभर्तीति । चशब्दात्स्मृतिश्च । सृष्टिंचपालनंचैव संहारंनियमंतथा । एकएवकरोतीशः सर्वस्यजगतोहरिरितिचब्रह्मांडे"इतिवभाषे । अस्त्ये वहरेःपालकत्वं यतो नैतावदितिश्रुतिः प्रकृतस्यसृष्ट्यादिकर्तृत्वस्यतावन्मात्रत्वंनिषिध्य ततोऽधिकं पालनमपिब्रवीति । तेनज्ञा यते सृष्टिसंहारकर्तुरपिपालकत्वमिति टीकायांचाहिशब्दोयतःशब्दार्थइत्यसूसुचत् । सृष्टिसंहारयोर्यत्र प्रकृतत्वंप्रतीयते । व्या ख्यायतानिवाक्यानि वदेत्पालकतांहरेः । "अस्येदेषासुमतिःपप्रथानाभवत्पूर्व्याभूमनागौः । अस्यसनीळाअसुरस्ययोनौ समा नआभरणेबिभ्रमाणाः । १ । किंस्विद्वनंकउसवृक्षआस यतोद्यावापृथिवीनिष्टतक्षुः । संतस्थानेअजरेइतऊती अहानिपूर्वीरुष सोजरंत । २ । नैतावदेनापरोअन्यदस्त्युक्षासद्यावापृथिवीबिभर्ति । त्वचंपवित्रंकृणुतस्वधावान्यदींसूर्यंनहरितोवहंति । ३ ।" सृष्टिसंहारकर्तुःअस्येत्विष्णोरेवसकाशात्एषाब्रह्मादीनांसुमतिःपप्रथानाअतिशयेनप्रथमानाप्रख्याताः । प्रथतेर्वर्तमानार्थे

लट् । तस्यकानच् । यङ्लुगंतं । अभ्यासस्यदीर्घाभावः । अभवत् । भूमनाभूम्ना । अस्येत्यस्यविपरिणामेनान्वयः । अनेनभूम्ना परमेश्वरेणपूर्व्या पुरातनीगौःअभवत् । गौरिति द्यौः पृथिवीचोच्यते । "यतोद्यावापृथिवीनिष्टतक्षु"रितिवक्ष्यमाणत्वात् । अस्यविष्णोर्महिमेवसुमतिगौंश्चाभवदितिवा । अस्यविष्णोःसंबंधिनःअसुरस्यअसुषुरममाणइतिव्युत्पत्त्यामुख्यवायोः योनौ भार्यायां । समाने साधारणे । श्रोणियोन्योर्मयःपुंसिवेतियोनिशब्दस्योभयलिंगत्वात्समानइतिपुंल्लिंगनिर्देशः । आभरणे आसमंतात् भरणे भरणस्थाने । उदरइतियावत् । बिभ्रमाणाः ध्रियमाणाः देवाः ततःप्रसूताश्चेतियावत् । अस्यविष्णोःअसुरस्यवायोःसकाशात्सनीलाः भगवदनुग्रहादेवसाश्रयाइत्यर्थः । असुरोवायुः । असुत्वेनरमणात् असुषुरमणाच्च । "महद्देवानामसुरत्वमेक"मितिहिश्रुतिः । "यामारुताद्गर्भमधत्तपूर्वंशेषंसुपर्णंगिरिशंसुरेंद्रं । चतुर्मुखाभांश्चतुरःकुमारान्साद्रौपदीनामबभूव भूमा"वितिचब्रह्मांडे । भगवन्महिम्नैवद्युभ्वाद्युत्पत्तिरित्यनंगीकारे अन्येनास्वतंत्रेणतन्निर्माणेअधिष्ठानादिकंस्यात् । नचतदस्तीत्याक्षेपपरउत्तरार्धः । यतःद्यावापृथिवी द्यावापृथिव्यौ । वाछंदसीतिपूर्वसवर्णः । निष्टतक्षुः निर्मितवंतः । सः मूलभूतः वृक्षइव प्रतिमानिर्माणेहेतुभूतः कउआस नकोपि । तथा सवृक्षःयत्रआस तद्वनमिव किंमूलकारणमासस्वित् नकिमपि । संतस्थाने सम्यक्स्थायिन्यौ । तिष्ठतेर्लटिकानच् । द्यावाभूमी इतः परमेश्वरादेव समुद्भूते अवनादिलक्षणेऊतीययोस्तेइतऊती इतिबहुव्रीहिसमासः । द्यावापृथिव्योर्विशेषणं । तेद्यावापृथिव्यौ अजरेअजीर्णेदृढे । तथा पूर्वीः पूर्व्यः । उषसःअहानिच अजरंतजीर्णाअभवन् । इतएवविष्णोरेव । इतऊतीइत्यत्रइतइत्यस्यबुद्ध्याविवेकेनान्वयः । इत्थंसिद्धा ऋग्द्वयेनसृष्टिसंहारकर्तृता ।

एना अनेन भूमौविष्णुनाक्रियमाणं एतावदेवन । परः सर्वोत्तमादस्मात् । सुपांसुपोभवंतीतिवक्तव्यमितिपंचम्याङसःप्रथमैक वचनं । अस्मात् अन्यदप्यस्तिजगतः । किंतत् उक्षा जलामृतादिभिःउक्षणशीलः भक्ताभीष्टसेचकइतिवा । "श्वन्नुक्षन्प्लीहन्नि" त्यादिनानिपातितः । सः पूर्वोक्तःसृष्टिसंहारकर्ताभगवान् द्यावापृथिवी द्यावापृथिव्यौ । बिभर्ति धत्ते । पुष्णाति च । स्वधा वान् सुपांसुबितिस्वधावंतः । स्वधा पूर्णानंदःपरमात्मा । तद्वान् तद्वंतोभूत्वा त्वचंशरीरं पवित्रंकृणुत कुरुत । ईं एनं परमा त्मानं यत् यस्मात् स्वात्मपवित्रीकरणं । तेनहरितःदिशःसूर्यंनसूर्यमिव । "हरिर्द्दिशिस्त्रियांपुंसिहयवर्णविशेषयोः। अस्त्रियांस्यात्तृ णेपे"तिमेदिनी । हृदयेवहंति सर्वशःआक्रोशेनध्यायंतीतियावत् । ईंएनं इत्थंभूतंपरमात्मानं यत्यदि हरितःसूर्यमिव वहंति हृदयेध्यायंतीतियावत् । तदा स्वधावान् आनंदवान् परमात्मा शरीरंपवित्रं कृणुत करोति । पुरुषवचनव्यत्ययः । तिङांतिङो भवंतीतिवचनात् । टीकायांतु सपरःउक्षेतिसामानाधिकरण्येनान्वयमकार्षीत् । एवंतत्वप्रदीपोक्तरीत्याव्याख्यामचर्करं । सुव्य क्तांतांसुखंधृत्वाविदांकुर्वंतुसूरयः ॥ अपिच "पत्नीभिर्योजयागंतुंसहमध्वश्चपायये"ति स्पष्टंदेवतास्त्रीणामपिसोमपानमभिधी यते । "इहेंद्राणीमुपह्वयेवरुणानींस्वस्तये । अग्नायींसोमपीतये"इत्यादिश्रुतिजातमप्येतमेवार्थंदर्शयति । तथाचसर्वदेवानाम पिसोमपानमंगीकार्यमिति । ननुतर्हि "नवकोट्योहिदेवानां तेषांमध्येशतस्यतु । सोमाधिकारोवेदोक्तो ब्रह्मणीद्व्येशताधिके" इति द्व्यधिकशतदेवानामेवसोमाधिकारकथनंकथमितिचेत्सत्यं । प्राधान्येनद्व्यधिकशतदेवानामेव पृथक्पृथक्तत्तन्मंत्रैः प्रार्थनाह्वानादिपूर्वकं यथासोमावदानं नतथा तदितरेषां । किंतु तद्भार्यात्वतत्परिवारत्वादिनातदंतर्भावेनैव । अतोविशि

ष्योक्त्यादिरुपपद्यते । इहेंद्राणीमित्यादिकमपि इंद्राद्यंतर्भूतत्वेनैवाह्वानं नपृथक् । अतएवेंद्राणीं वरुणानीमित्याद्युक्तं । नतु शचींगंगामित्यादि "त्वामनुत्वतुंदेवता" इतिऋत्वादिदेवानामिंद्राद्यनुचरत्वेनैवसोमपानमुच्यते। इतिशंकानवकाशः ॥१३३॥ अनादियोगनिरताइति ॥ "तवश्रियेमरुतोमर्जयंतरुद्रयत्तेजनिमचारुचित्रं । पदंयद्विष्णोरुपमंनिधायितेनपासिगुह्यंनामगोना" मित्यनुव्याख्याने पाशुपताधिकरणे उदाहृतश्रुतौरुद्रस्यातीताशेषब्रह्मोपदेशेनानादितोपिभगवत्तत्वश्रवणप्रतिपादनात् । हेरुद्र यत् येभ्यः ते जनिम जन्माभूत् । तेमरुतः ब्रह्माणोतीतवर्तमानाः तव श्रियेसंपदे चारुसुंदरं चित्रमाश्चर्यं उपमं उप

अनादियोगनिरताः प्रायशोव्यक्तसद्गुणाः । भक्त्यादिगुणपूर्णास्तु सुराणामाविरिंचतः ॥१३४॥

स्वातन्त्र्यात्सर्वजीवेषु स्थिताअपिहिसर्वशः । स्पृश्यंतेनैवदोषैस्ते गुणादानैकतत्पराः ॥ १३५ ॥

समीपे मालक्ष्मीर्यस्य संवाहनकर्त्रीं तत्तथोक्तं यद्विष्णोःपदं मर्जयंत शोधितवंतः उपदिष्टवंतइतियावत् । तत्त्वयाहृदिनिधायि न्यधायि । तेनकारणेन त्वं गोनां गवांवाचांमध्ये गुह्यंनाम नारायणादिकं पासि जपोपदेशादिनापालयसीतिश्रुत्यर्थः सुधातोऽवगंतव्यः । तथाचातीताशेषब्रह्मोपदेशेनानादितःश्रवणमननादिरूपयोगोस्तीतिज्ञायते । "किंपुनस्तत्वदेवेषु श्रीमध्वानादिसेविष्वि" तियोगदीपिकोक्तेश्च । अतएव प्रायशोव्यक्तसद्गुणत्वं अंतर्यामिरूपेष्वपिदेवानांमहागुणपूर्ति तारतम्यक्रमेणदर्शयन्नेकादशतात्पर्यवाक्यंपठति ॥ भक्त्यादीति ॥ १३४ ॥ अज्ञानादिदोषकलुषितजीवांतर्यामिणां कथंतद्गतदोष

लेपाभावोगुणपूर्णत्वंचेत्यतआह ॥ स्वातंत्र्यादिति ॥ स्वातंत्र्यंचस्वावरान्प्रतीतिज्ञेयं । तथाच सर्वस्यस्वाधीनसत्ताकस्यस्व प्रतिबंधकत्वायोगादितिभावः । स्वनियम्यजीवगतदोषाप्राप्तिवद्गुणाप्राप्तिरितिचनभ्रमितव्यमित्याह ॥ गुणादानैकतत्परा इति ॥ उक्तंचैतदनुव्याख्याने "ज्ञानकर्मादिफलकं द्वयंतेषुक्रमोपगं । स्वातंत्र्यंतारतम्येन फलंहिफलिनांभवेत् । उपासनाधर्म फलं यतोदेहांतरेस्थितिः । वासुदेवाज्ञयाचैव पूर्वकर्मानुसारतः । प्रेरयंतिहितेजीवान् पुण्यपापेषुनित्यशः । अरागद्वेषतश्चैव कथंदोषानवाप्नुयुः । हर्याज्ञाकरणादेव पुण्यमेभिरवाप्यते । हरिपूजेतिचोद्देशात्कथंनशुभमाप्नुयुः । अतोयथाक्रमंधर्मज्ञानयोः फलमंजसा । सर्वप्राणिगतंदेवाः प्राप्नुवंत्याविरिंचत" इति ॥ १३५ ॥ ननुरुद्रेंद्रादिदेवानां मूलरूपावताररूपेषुदुःखाज्ञानरोग

**तेषांदुःखादिकंकिंचि दसुरावेशतोभवेत् । प्राणस्यनासुरावेश आग्वणाश्मसमोहिसः ॥ १३६ ॥**

रागकोपादिकं बहुशस्तत्रतत्रश्रूयते । तत्कथंदोषास्पर्शइत्यतआह ॥ तेषामिति ॥ अत्रायंनिष्कर्षः । नदेवानांदोषसंस्पर्शो वक्तुंयुक्तः तेषांमुक्तप्रायत्वस्य फलप्रकरणेसमर्थयिष्यमाणत्वात् । "मुक्तानांपांडवानांच अंतरंकिंचिदेवही" तिमुक्तसाम्योक्तेश्च । किंच "यैर्निश्चितंपरत्वंतु विष्णोःप्रायोनयातनां । ब्रह्महत्यादिभिरपि यांती" ति सर्वेषामपितत्वनिश्चयानंतरं प्रायो यातनाभावउच्यते । किमुनित्ययोगवतांतेषां । उक्तंचानुव्याख्याने "देवास्तुनिरयंविने" ति । सुधायांच मनुष्योत्तमास्तावन्नि रयमानुष्यस्वर्गमुक्तीःप्राप्नुवंति । देवास्तुनिरयंविनामानुष्यस्वर्गमुक्तीरिति । नचमानुष्येपितेषामस्मदादिवद्दुःखसंभवः ।

"मुक्तानांपांडवानांच अंतरंकिंचिदेवही"त्युक्तेः । "देवानांनिरयोनास्ती"तिनिर्णये । केचित्तु देवत्वानंतरंनिरयप्राप्त्यभावपर सिदंवाक्यद्वयमित्याहुः । यैर्निश्चितमित्यादिविरोधात्तच्चिंत्यं । तथाचैवमसंभावितदुःखादिदोषाणांतेषांदुःखादिकंतुश्रूयते । "दुर्गंधयुक्तोव्रणसंचितांगःसदाचरत्वंविपिनेषु, शुकादीनामपीपद्दर्शनादिति रुद्रस्य, तथा ब्रह्महत्यापीडनेनकमलनालतंतुप्रवेशादिकंचेंद्रस्य, युधिष्ठिरस्यनरकदर्शनंचेत्यादि । नचनिर्दोषाणामपिप्रारब्धबलादुपपत्तिः । प्रारब्धस्यापितेष्वप्रयोजकतायाएव युक्तत्वात् । नहि सर्वज्ञानामनवरतभगवत्प्रवणकायकरणवृत्तीनामुपाधिलेशविकलभगवद्भक्तिस्वभावाना माब्रह्मस्तंबपर्यंत मसारतानिश्चयवतामरागतःकेवलमीश्वरप्रीत्यर्थमशेषभोगंभुंजानानां कर्मादिस्वरूपसत्तानियामकानामेषां प्रारब्धान्यपिकर्माण्यप्रयोजकानीत्येववक्तव्यं । अतएवोक्तं "देवानांनैवकेनापिदुःख"मित्येकादशतात्पर्ये । अतोन्यथानुपपत्त्याप्रबलप्रारब्धहेतुकासुरावेशंनिमित्तीकृत्य हरिरेवात्यल्पदुःखादिकंतेषांक्वचिद्ददातीतिसिद्ध्यति । सचासुरावेशोद्विविधः प्रबलस्साधारणश्चेति । तत्रप्रबलेप्राप्तेभगवद्वैमुख्यादिकंभवति । यथा रुद्रोरावणवधानंतरं समाह्वयद्राघवमाहवाय । यथाच सएव बाणगेहेकृष्णेन युयुधे । यथाच पारिजातहरणे हरेर्बलप्रणाशायसमुद्ययुःसुराः । यथाचवैश्रवणसौगंधिके"असुरावेशतस्तस्य भीमेक्रोधोमहानभू"दित्यादि । साधारणासुरावेशेतु केवलंमुक्ततुल्यानामतएवसुव्यक्तानंदादिगुणानां किंचिद्दुःखाज्ञानरागादिप्राप्तिः । "अत्यल्पस्त्वसुरावेशो देवानांचक्वचिद्भवे"दित्यनुव्याख्याने । तेन "सचप्रायशःप्रारब्धवशात् । दुःखादिकंभवत्येवशापादिवशा"दित्येकादशतात्पर्ये "ज्ञानादिव्यक्तिरव्यक्तिःसुखदुःखादिकंतथा । सुदृष्टब्रह्मतत्वानांभवंत्यारब्धकर्मणे"तिप्रथमतात्पर्ये । आर

ब्धस्यानुसारतइत्यनुव्याख्याने । “आधिकारिकपुंसांतुबृहत्कर्मत्वकारणा”दित्यादौप्रारब्धस्यदुःखादिकारणत्वोक्तिविरोधइति निरस्तं । नचकर्मसत्तादेरपिदेवताधीनत्वात्स्वाधीनंकर्मकथंबाधकमितिवाच्यं । आरब्धस्यकर्मणोनिवृत्तयेईशकल्पनात् । तदुक्तंन्यायविवरणे । असुराणांचब्रह्मादिवरवत्त्वेनदेवतानांदोषापादकत्वादिकंयुज्यते । मुक्तप्रायाणामेतादृशासुरावेशे हरीच्छादिरेवकारणमितिप्रागेवोक्तमिति । एतादृशासुरावेशोपि स्वर्गादिगतरूपेष्वेव । नतुमहरादिस्थरूपेषु । तत्रतदुक्त्यभावात् । उक्तिसद्भावेतुजयविजययोरिवग्राह्यः । नापितत्वाभिमानिरूपेषुशरीरेंद्रियादिगतरूपेषुवा । “उपासनाधर्मफल”मित्यादिप्रमाणमुदाहृत्य पूर्वंसर्वथादोषलेशाभावसमर्थनात् । ननुछांदोग्यभाष्ये“वायुपुत्रंचनासिक्यमग्निंवागात्मकंतथा । सोमंश्रोत्रात्मकंचैव सूर्यंचक्षुःस्वरूपिणं । रुद्रंमनःस्वरूपंच शेषंचाहंस्वरूपिणं । चित्तात्मकंचगरुडं पापेनविविधुरसुरान् । असुरास्तैर्यतोविद्धास्तस्मात्तेदोषयोगिन”इतींद्रियाद्यभिमानिरूपेष्वपिदैत्यावेशोक्तेःकथंतत्रतदभावोभिधीयतइतिचेत् । अत्रकेचित् । स्वर्गादिगतरूपेष्वेवासुरावेशः । नासिक्यंवागात्मकमित्याद्युक्तिस्तु वस्तुतस्तेषामेवतत्तदिंद्रियाभिमानित्वंस्फोरयितुमितिवर्णयंति । अपरेतु नासिक्यमित्याद्युक्तिबलात् शरीरस्थेचसूर्यग इत्याद्युत्तरवाक्यबलाच्चाध्यात्मिंद्रियाभिमानिरूपेष्वेवासुरावेशः । अन्यथा तस्मात्तेनोभयंजिघ्रति सुरभिचदुर्गंधिचेत्यादिना दुर्गंधाघ्राणाद्यसुरावेशकार्यविशेषकथनविरोधात् । परंतु “उपासनाधर्मफलं यतोदेहांतरेस्थितिः । अरागद्वेषतश्चैवकथंदेवानवाप्नुयु”रितिदोषभावोक्तिरेतदतिरिक्तदोषाभावपरा । वस्तुतस्तु दुर्गंधाघ्राणादिकमसुरावेशेनैवकारयंतीतिमन्यंते । सांप्रदायिकास्तु नाध्यात्मंदेवानामसुरावेशःकदापिकियानपि । तथापि

मुख्यप्राणस्यसर्वोत्तमत्वप्रकटनाय भविष्यतांजनानांदुर्गंधाघ्राणादिसिद्ध्येच तत्तदभिमन्यमानघ्राणादींद्रियेषुदुर्दैवताप्रवृत्तिसिद्ध्यर्थं कादाचित्काल्पासुरावेशोदैत्यजयार्थं इंद्रियाद्यभिमानिनासिक्यवा(गा)द्याद्यंतर्यामितया देवकर्तृकोद्गीथोपासनारामयेंगीक्रियते । तथाचक्वचित्तदभ्युपगमेपितदन्यत्रकदाचिदप्यभावान्नियामकरूपेषुदैत्यावेशाभावोक्तिरुपपद्यतइत्याहुः । एवं नित्यमुक्तकल्पेनिखिलप्राणिगणाधिनायकेऽसुरावेशादिदोषशंकालेशोपिनावकाशंलभतइति प्रसंगादेकादशतात्पर्यवाक्यैकदेशमेवपठति ॥ प्राणस्येति ॥ १३६ ॥ ननु यद्यसुरावेशादिदोषलेशाभावःप्राणस्य कथंतर्हि "अज्ञानंतुचतुर्वारं द्विवारंभयमेवच । शोकोपितावा"नित्यज्ञानभयशोकाद्युक्तिरित्यतोबृहद्भाष्यवाक्यंपठति ॥ ब्रह्मणइति ॥ ब्रह्मणोप्यल्पदुःखंस्यात् ।

ब्रह्मणोप्यल्पदुःखंस्या त्तदप्यनभिमानतः । नास्त्यात्मसंबंधितया भोगाभावात्कथंचन ॥ १३७ ॥

तदपिकथंचननास्ति । तत्कथं स्वसंबंधितया कथंचन सर्वथापि भोगाभावात् । भोगाभावोपिकुतः । अनभिमानतः मनसि किंचिद्दुःखात्मकतयाविकृतेसत्यपि तत्रसर्वथाऽभिमानाभावादित्यर्थः । इदमुक्तंभवति । भवत्येव प्राणः सर्वदोषविवर्जितः । सर्वस्वतंत्रत्वेनानादितोपिविलीनप्रकृतित्वेनच तत्रदोषोत्पादासंभवात् । निस्सीमज्ञानानंदादिगुणगणपरिपूर्णत्वाच्च । नचैवंसत्यज्ञानंतुचतुर्वारमित्याद्यनुपपत्तिरितिवाच्यं । भविष्यज्जनेष्वज्ञानभयादिस्वभावसिद्ध्यर्थंदग्धपटायमानएवांतःकरणेकेवलमीश्वरप्रीत्यर्थमेवात्यल्पतमाज्ञानभयादिलेशस्यक्षणार्धकालेउत्पादमात्रमंगीक्रियते नतुसर्वथाभोगः । "नीचोच्चतैवदुःखा

देभोंग"इत्युक्तेर्बाह्यांतःकरणेदुःखादिवृत्त्युत्पादांगीकारेपि तेनस्वरूपेनीचताद्युत्पादानंगीकारात् । सर्वत्रचनीचताद्युत्पादे दुःखाद्यात्मनाविकृतेंऽतःकरणेऽभिमानएवहिकारणं । प्राणस्यस्वामितयासर्वाभिमानित्वेपि बंधकाभिमानाभावस्य "ब्रह्मानिरभिमानित्वादि"तिवक्ष्यमाणत्वेन नीचतादिरूपभोगाभावस्ययुक्तत्वात् । एवं वृत्तौजातस्यभयस्यनदुःखोत्पादनहेतुत्वं । ज्ञानभावादेरपिनभयादिहेतुत्वं । किंत्वज्ञानभयशोकादिकंयावन्मात्रंशास्त्रेश्रूयते तावन्मात्रस्यैवक्षणैकदेशेकिंचिज्जनित्वा स्वफलमनुत्पाद्यैवसद्योविनाशांगीकारेण ननिर्दोषताविरोधइति । तथाचोक्तंषष्ठतात्पर्ये । "भविष्यतांजनानांतु स्वाभावानां

शेषवींद्रमुखादेवा देवेष्वपिविलक्षणाः । देवेशैरप्यचिंत्याश्च सर्वतत्वाभिमानिनः ।

प्रसिद्धये । ज्ञानादिगुणपूर्णस्य ब्रह्मणोपिक्षणार्धगाः । भयादिकाभवंत्येव नैवतास्मिन्स्थिरालयाः । भगवत्प्रीतयेनित्यं ब्रह्मणोयेभयादयः । नवृथातस्यभावःस्या त्कश्चित्तेपिक्षणार्धगाः । अज्ञानंतुचतुर्वारं द्विवारंभयमेवच । शोकोपितावज्ञान्यत्रकदाचिद्ब्रह्मणोभवे"दिति । ननुतथापि किंचिद्दुःखाद्युत्पादस्यपापकारणत्वांगीकारात् पापांगीकारेचपुनर्निर्दोषताविरोधइति । वक्ष्यामोत्रसमाधानं । परमोत्साहाभावनिमित्तएवप्राणस्यदुःखादिसंसारइति युक्तैवनिर्दोषतेति ॥ १३७ ॥ देवेष्वपिशेषवींद्रशिवतत्पत्नीनामतिवैलक्षण्येनोत्तमत्वमित्याह ॥ शेषेति ॥ बृहदारण्यके"कत्येवदेवायाज्ञवल्क्येति षळिति । एतेपुह्येदंसर्वं षळितीति सुपर्णशेषरुद्रतत्पत्नीनामतिप्राधान्यमभिधाय महापूर्त्युक्तेः । एतेषु सर्वदेवेषुमध्ये इदंषट्कं सर्वं पूर्णमितिश्रुत्यर्थः ।

"देवेष्विंद्रेशवायुश्रीविष्णूनामुत्तरोत्तरं। सिद्धयःपरिपूर्णाःस्यु"रिति, "प्रसादात्तत्रयाणांचाप्यनंतादेःसदागुणा" इतिचैकादश तात्पर्ये देवेभ्यःपृथक्कृत्यनित्यपूर्णगुणत्वोक्तेः। इंद्रोपीतरदेवापेक्षयाविलक्षणएव। इंद्रेशेत्युक्तेः। पूर्वप्रसिद्धवर्जंतुशक्रांतादेव तामता" इति ऋग्भाष्ये रुद्राद्युक्तमेषुप्रसिद्धश्रुतिभागंविनाशक्रस्यानंतवेदवेद्यत्वोक्तेश्च। तथाप्यतिमहावैलक्षण्यविवक्षयात्र शेषादिग्रहणं। अतएवतृतीयतात्पर्ये "अविकारौब्रह्मरुद्रौ देहभेदादिसंभवे। विकारवंतइंद्राद्या" इतिमहावैलक्षण्यमिंद्राद्यपेक्षयारुद्रादेरुक्तं। किंच "नागारिरुग्रबलपौरुषआपविष्णो र्वाहत्वमुत्तमजवोयदपांगलेशं। आश्रित्यशक्रमुखदेवगणैरचिंत्य"

अनंताद्भुतविज्ञान पूर्णानिस्सीमसद्गुणाः ॥ १३८ ॥

## ॥ इतिऋज्वतिरिक्तदेवप्रकरणं ॥ ५ ॥

समस्तगुणसंपूर्णा भारतीचसरस्वती। समस्तदोषरहिता शर्वशक्रादिवंदिता ॥ १३९ ॥

मिति द्वादशस्तोत्रे सुपर्णमहिम्नःशक्राद्यविदितत्वमुच्यते। "यूयमेतानपिज्ञातुमशक्ताःकिमुमा"मिति तलवकारभाष्ये उमादीनामपींद्राद्यवेद्यत्वाभिधानाच्च महावैलक्षण्यमिति। अन्यदुपासनाप्रकरणेवक्ष्यामइति ॥ १३८ ॥ इतिऋज्वतिरिक्त देवप्रकरणं ॥ ५ ॥

इदानीं सरस्वत्याश्चतुर्मुखानातिन्यूनत्वेन ऋजुपदवाच्यत्वात् चतुर्मुखस्यवक्ष्यमाणंमाहात्म्यंप्रायस्तस्याअपिज्ञेयमितिवक्ष्यमाण

त्वात् चतुर्मुखस्यमहिमनिरूपणेनैव वाणीमहिमापि विस्तरेणनिरूपितप्रायइतिमन्वानः संग्रहेणैवसरस्वतीस्वरूपंनिरूपयति ॥ समस्तेति ॥ अत्रसर्वत्र विस्तरेणसंग्रहेणेतिच स्वबुद्ध्यनुसारेणेतिमंतव्यं । नहि गीर्वाणगणेष्वतिकनीयसःपुष्करस्यमहिम्नो ऽनंतांशोपिमादृशैर्मनसाप्यधिगंतुंशक्यते। किमुतदन्यदेवानां किम्वेवापरिगणितगुणगणपरिपूर्णैः सर्वगीर्वाणगणा(धि)नायकैः शर्वसुपर्णफणिपप्रमुखैरतिप्रवीणै रनवरतमाम्नायविचारणैकनिरतैः करतलकलितामलकवदवभातानंतपरमार्थैरप्यनधिगत महामाहात्म्यस्य भगवतआदिदेवस्य सर्वविद्याधिदेवीवल्लभस्यप्राणस्य तस्याश्च । किंतु यथाखद्योतपोतःस्वप्रकाशंविस्तारयति

महत्तत्वादिजननी प्रकृत्याद्यभिमानिनी। सर्वस्यलयहेतुःसा महदादेःसरस्वती ॥ १४० ॥

श्रद्धासंप्रीत्यनुभव सुखभोगादिकस्यच। गुरुभक्तेर्हरिप्रीतेः सैवदेव्यभिमानिनी ॥ १४१ ॥

संकोचयतिच तथावयमपि स्वावगतमाहात्म्यलेशं संकोचयामोविस्तारयामश्चेति नास्माकंतथाकथनेनापराधलेशोभवितुमर्हति। तथापि प्रमादवशादधिकविजृंभणेनप्रसक्तमपारमप्यपराधं येचदयालवः सर्वसुपर्वप्रवरगुरवस्तेक्षंतुमर्हंतु । "स्त्रीगुणैस्सर्वपूर्णत्वाद्बृहतीतुसरस्वती । अनंतवेदरूपत्वात्सैवब्रह्मेतिकीर्तिता । विष्णोरतिप्रियत्वात्ते ह्यध्यर्धाइतिकीर्तिताः । सरस्वतीच गायत्री"त्यादिच "ब्रह्मासरस्वतीवायुरित्याद्युक्त्वा एतेसमाव्यासौ ब्रह्मेशौगुणतोधिकौ । अनंताश्चगुणास्तेषा मन्यजीवव्यपेक्षया"इत्यादिबृहद्भाष्ये । "प्रकृतिर्नामतत्पत्नी प्रकृतेरभिमानिनी । साप्रसूतेजगत्सर्वं सूत्रमारभ्यसर्वशः । महत्तत्वात्मकोब्रह्मा

तज्जत्वात्तत्रलीयते। गुणाधिकःपतिरपि तस्याःसत्वादिभेदत"इत्याद्येकादशतात्पर्यं । "श्रद्धामेप्रीति,रित्यादौबृहद्भाष्यवचनं स्पष्टं । व्याप्तिसाम्येसमाव्याप्ताविति बृहद्भाष्यं । न्यायविवरणेच ब्रह्मणश्चब्रह्माण्याश्चस्थानैक्यमि"ति । अन्यद्बृहद्भाष्यादौ स्पष्टं ॥ १३९-१४२ ॥ वाणीरूपेष्ववांतरविशेषंदर्शयति ॥ अर्धेति ॥ "अर्धनारीनरवपु र्वायुःकुत्रचिदीरित" इतिबृहद्भाष्ये । तथाचार्धनारीत्वेनवायुशरीरप्रविष्टभारतीरूपस्य वायुविशेषसंयोगवत्त्वेनेतररूपापेक्षयाधिक्यं । वायुविशेषसंयोग

स्वभर्त्राचसमाव्याप्तौ समस्ताम्नायवेदिता । सर्वविद्यास्वरूपासा सर्वलोकेश्वरेश्वरी ॥ विचित्रानंतसंपूर्ण माहात्म्याचस्वभर्तृवत् ॥ १४२ ॥ अर्धनारीनरत्वेन यदाभर्त्रासहस्थिता । तदोत्तमादक्षिणाव त्तदन्यत्रावरामता ॥१४३॥ रुद्रादिसर्वदेवानां मनोवाचामगोचरा । अनादितश्चसर्वज्ञा द्वात्रिंशल्लक्षणैर्युता ॥१४४॥

## इतिसरस्वतीभारतीप्रकरणं ॥ ६ ॥

हीनरूपांतराणांतु तदपेक्षयाकिंचिन्न्यूनत्वं । विशिष्टादक्षिणासुखे यथा तथेत्यर्थः । व्युत्पादनंतुतत्रवक्ष्यमाणमत्राप्यनुसंधेयं । उक्तंचछांदोग्यभाष्ये । "विशेषसंयोगहीनायदासैवसरस्वती । तदातस्यवरासैवप्राणसंयोगिनीमता । प्राणयोगवियोगाभ्यां सैषैकापिविभिद्यत"इति । अवाङ्मनोगोचरत्वंतु"विष्णुर्ब्रह्मातथावायु रनिरुक्ताःप्रकीर्तिताः । तत्पत्न्यश्चे"ति दशमतात्पर्येचस्पष्टमुक्तं । निरुक्तंचानिरुक्तंचेत्यादौच । अनिरुक्तत्वंसुवाच्यत्वाभावः । सरस्वतीभारत्योःऋज्वंतर्भावादनादितईशाद

न्यत्रालोचनेसुसूक्ष्माशेषविशेषविषयकं ईशेऽन्येभ्योधिकविषयकंज्ञानमिति द्वात्रिंशल्लक्षणादिकंचेति सकलमप्युपपद्यते । निर्दोषत्वेपि संसारित्वंचविरिंचवद्देवेतिसर्वमनवद्यं ॥ १४३ ॥ १४४ ॥ इतिसरस्वतीभारतीप्रकरणं ॥ ६ ॥

अथेदानींसर्वजीवोत्तमयोर्ब्रह्मवाय्वोःस्वरूपं यथाशक्ति निरूप्यते ॥ तत्पतीइति ॥ तयोःसरस्वतीभारत्योःपती । महानंतेत्यनेन यद्यपिसरस्वत्यादेरप्यनंतागुणास्संति । अनयोस्तुततोप्यनंताइत्युक्तंभवति । अनंतावांतरविशेषस्तु कल्पवत्सरदिनक्षणतदंशाद्यानंत्यवद्द्रष्टव्यं । विवृतंचैतत्तत्वप्रकाशिकायां ॥ १४५ ॥ गुणपूर्तिमुपपादयितुंतत्रासंभावनापरिहाराय"ब्रह्मत्व

तत्पतीब्रह्मवायूतु महानंतगुणाकरौ ॥ १४५ ॥ ब्रह्मत्वयोग्याजीवास्तु
ऋजवोनामकीर्तिताः । अनादिकालतःसर्व दोषहीनागुणाधिकाः ॥ १४६ ॥

योग्याऋजवो नामदेवाःपृथग्गणाः । तैरेवाप्यंतत्पदंत्वि"तिनिर्णयवचनानुसारेणाह ॥ ब्रह्मत्वेति ॥ अत्रब्रह्माणीचब्रह्माचब्रह्माणौ तयोर्भावोब्रह्मत्वमिति ब्रह्माणीपदयोग्यानामपि ऋजुत्वंज्ञातव्यं । "परशुक्लत्रयंस्मृत"मितिनिर्णये वाण्याअपि ऋजुशब्दार्थनिर्दोषतोक्तेः तमेवऋजुशब्दार्थप्रमाणेनाह ॥ अनादीति ॥ उक्तंचसुधायां ऋजवस्समीचीनाः निर्दोषाइतिह्यनर्थांतरमिति । नच "श्रमात्तापाच्चे"तिबृहद्भाष्ये अशनायापिपासोक्तिविरोधः । साचक्रीडाविभोःस्मृतेत्युत्तरवाक्येक्रीडामात्रत्वाभिधानात् । "क्षुत्पिपासादयश्चैव देवानांभोगसाधकाः । नतुपीडाकरास्तेषा मैश्वर्यादिगुणोन्नते"रित्युक्तेश्च । ननु

ऋजूनांकथंसर्वदोषविहीनत्वं प्रकृतिबंधादिदोषाणामवर्जनीयत्वात् । तथाहि । तत्रतावत्कथंप्रकृतिबंधाभावः । ब्रह्मणोमह त्त(त्वोपादान)त्वात्मकशरीरवत्त्वात् । "यद्रजोमूलरजसि मूलेतमसियद्रजः । तमश्चमूलेतमसिमहत्तत्त्वंतदात्मकं । दशांशास्त त्रसत्वंस्या"दित्यादितृतीयतात्पर्ये महत्तत्त्वस्य त्रिगुणात्मकत्वोक्तेः । "वायुस्तुब्रह्मणःपुत्रः प्रकृतौसमजायत । त्रिगुणात्मासमु द्दिष्टः प्रायस्सत्वात्मकस्तथा"इत्येकादशतात्पर्येचस्पष्टं । त्रिगुणात्मकप्रतिबंधाभिधानाच्च । "अज्ञानंतुचतुर्ब्रारंद्विवारंभयमेवच । शोकोपितावानि"तिषष्ठतात्पर्येचाज्ञानभयादेरुक्तत्वात्तस्यचत्रिगुणबंधंविनानुपपत्तेः। अपिच "अज्ञानंभावरूपं दुःखस्पृष्टस्ये"ति तत्वसंख्यानटीकायां दुःखस्पृष्टमात्रेभावरूपाज्ञानाभिधानात् । हिरण्यगर्भस्यापिदुःखस्पृष्टत्वात् । किंच "सुप्तुप्तिसंस्थान्ब्रह्मा दिकानिति, सुप्तास्तत्रयतोजीवाब्रह्मरुद्रपुरस्सरा"इतिच स्मृत्युक्तेः । सुप्तेश्चभावरूपाज्ञानकार्यत्वात् । दुःखाज्ञानादेश्चाधर्मकार्य त्वमंगीकार्यं । अन्यथातद्दातुर्हरेर्वैषम्यापातात् । तदन्यथानुपपत्त्याचभावरूपाज्ञानमवश्यमंगीकार्यं । किंच तस्यकर्मबंधो पिवाच्यः । संसृतिसंस्थत्वात् । तथाचैवंप्रकृतिबंधाज्ञानदुःखादियुक्तस्यकथंनिर्दोषत्वमिति । अत्रोच्यते । ब्रह्मणःप्रकृतिबंधां गीकारेप्यविद्यमानप्रायएवानादितस्तस्यप्रकृतिबंधः । परंतुप्रकृत्यादिसंबंधमात्रमस्ति । नतुतस्यबंधकत्वं । सत्वसत्वमहासत्व सूक्ष्मसत्वश्चतुर्मुखः" इति गीतातात्पर्ये अबंधकपरमसूक्ष्मसत्वोपादानकदेहादिमत्त्वाभिधानात् । यद्यपि "तमसियद्रजः । तम श्चमूलेतमसी"ति रजस्तमसी अत्यल्पतमेवर्तेते । मुक्तोपभोग्यसत्ववदितिविविक्ततमत्वाभावाच्च । तथापि अनादितोपिदग्धप टायमानतयैववर्तेते नस्वकार्यक्षमा । यथोक्तंसुधायां विलीनप्रकृतितयेति । नचभयाद्युत्पादानुपपत्तिः । दग्धपटायमानएव

त्रिगुणात्मकेमनसिईशेच्छयैवतत्प्रीत्यर्थंकिंचिद्भयादिप्राप्तावपि प्रकृतेर्बंधकत्वानभ्युपगमेननिर्दोषतोपपत्तेः । प्रकृतेःस्वतोभयाद्युत्पादकत्वेन भयादेर्दुःखाद्युत्पादकत्वेनवा दुःखादेर्नीचतादिजनकत्वेनबंधकत्वं । नचैवमित्युक्तं देवताप्रकरणे । अल्पभयादेर्दुःखादिमात्रोपादानत्वेनत्रिगुणात्मकांतःकरणस्य नित्यमुक्तवैलक्षण्यसंपादकतयाऋजुगणसंबद्धत्वेनकिंचिद्बंधकत्वविवक्षेतिचेत्कोनेत्याह । चित्प्रकृतिरेवकिंचिद्भयादिकमुपजनयतीत्यंगीकारात् । यत्तूक्तंभावरूपाज्ञानमस्तीति । तन्न । "नैव ब्रह्मादेरस्तिसाक्वचिदि"ति, श्रुतिगीतातात्पर्ये जीवाच्छादिकाद्यभिमन्यमानप्रकृतिनामकभावरूपाज्ञानस्याभावोक्तेः । "पंचपर्वात्वविद्यातु भूतेभ्योहरिणापुरा । उद्धृत्यब्रह्मणिक्षिप्ता सापुनस्तेननिस्सृता । तत्सृष्टत्वज्ञापनाये"त्यविद्यामात्रस्यतदधीन

ऋजूनामेकएवास्ति परमोत्साहवर्जनं । सगुणाल्पत्वमात्रत्वा न्नर्जुत्वेनविरुध्यते ॥

त्वोक्तेः स्वाधीनायास्तस्याबंधकत्वंयुक्तिपराहतं । तत्वसंख्यानटीकावचनंतु चतुर्मुखातिरिक्तविषयंवा दग्धपटायमानतयाऽकिंचित्करत्वेपिमुक्तव्यावृत्तसंबंधसद्भावमात्रत्वेनवा सावकाशं । नचसुप्त्युक्तिविरोधः । विनापिभावरूपाज्ञानसंबंधं केवलेश्वरेच्छयैवचित्प्रकृत्याच वृत्तिज्ञानोपरमरूपसुप्त्यंगीकारेबाधकाभावात् । यदप्युक्तंकर्मबंधोवक्तव्यइति तदपि परशुक्लत्रयमित्याद्यनेकप्रमाणविरुद्धं ॥ १४६ ॥ ननुतर्हिसंसारानुपपत्तिः । बंधप्रदस्येश्वरस्यकर्मानपेक्षत्वे वैषम्याद्यापातादित्युक्तमिति चेन्न । तेषांबंधकदुष्कर्माभावेपि स्वयोग्यसंपूर्णभगवदुपास्तिविषयकपरमोत्साहवर्जनलक्षणगुणाल्पतारूपस्यदोषस्यसत्त्वेनाशु

भाभावस्यानंदोत्साहसाधनत्ववदुत्साहोत्कर्षाभावस्यापि बंधहेतुतासंभवेन वैषम्यादिनिस्तारात् । नच सर्वदोषविहीनत्ववचनं जातविरोधं । अस्यैकत्वेनविवक्षाभावात् । अतएवानुव्याख्याने“सर्वत्रतएतेजीवेषु दृश्यंतेतारतम्यत”इति संसारापादकदोष सद्भावंरुद्रादिसर्वजीवानामभिधाय ऋजूनांपरमोत्साहाभावेनैवसंसारोनिरूपितइति तद्वाक्यंपठति ॥ ऋजूनामिति ॥ ऋजूनांपरमोत्साहवर्जनंनाम दोषोस्तीत्यतोनोक्तमयुक्तं । नचैवंसतिऋजुत्वविरोधः । यतोसावेकएवदोषः । बाहुल्याभावाभिप्रायमृजुत्ववचनं । अल्पस्वेनिःस्वशब्दप्रयोगदर्शनादितिभावः । प्रकारांतरेणविरोधंपरिहरति ॥ सइति ॥ सः परमोत्साहवर्जनंनामदोषः । यद्यपिमहोद्यमाभावोदोषएव । हेयत्वात् । तथापिनरागादिरिवभावरूपः । नापिगुणाभावरूपः ।

अघशब्दोदितोप्येष एवान्यन्नैवतत्रहि ॥ १४७ ॥

किंनामोत्साहलक्षणगुणाल्पतामात्रमित्यदोषोप्युच्यतइति नऋजुत्वेनविरुध्यतइति सुधातस्तदर्थोनुसंधेयः । ननुकर्मक्षयपादे“उत्तरपूर्वाघयोरश्लेषविनाशा”वित्यत्र अघाश्लेषादिर्ज्ञानफलत्वेनोच्यते । ब्रह्मणोप्येतत्सूत्रविषयत्वात् । तदेतत्कथंविरिंचस्योपपद्यते । तस्याघप्रसक्त्यभावस्योदितत्वात् । कथंच“ब्रह्मणोपासितोदद्याद्गायत्र्यापुरुषोत्तमः । अलेपंसर्वपापेभ्यो विशेषेणप्रतिग्रहा”दितिबृहद्भाष्ये अघालेपउच्यते । “विकर्मलेपोनैवास्ति ब्रह्मणस्त्वविकर्मत”इति विकर्मकरणाभावस्यैवोक्तत्वेनाघसंभावनाऽसंभवादित्यतः परमोत्साहाभावस्यैव पापतयाविवक्षितत्वेनात्राघशब्दस्यतत्परत्वादितिप्रसंगादाह ॥ अघशब्दोदितइति ॥ एकेतु “अलेपंसर्वपापेभ्य”इतिबृहद्भाष्यस्यानादितोपिगायत्र्युपासकतया नादितोपिविकर्मकरणाभावः । अत

एवपापाभावादेव तल्लेपाभावश्चेत्यभिप्रायइत्याहुः । ननूदाहृतवाक्ये प्रतिग्रहात्पापालेपइतिकथं । "विरिंचजन्मन्यखिला न्प्रतिगृह्णातिनित्यश" इत्युक्तस्य हरेस्सकाशात्सर्वजगत्प्रतिग्रहस्यादोषत्वादितिचेत्सत्यं । "ज्ञानभक्तीहरेस्तृप्तिं विनाविष्णोरपि क्वचित् । नाकांक्ष्य" मित्यच्छिन्नधर्मस्यहरेःप्रतिग्रहोपिदोषतयाप्रसक्तः । आधिकारिकतयातत्प्रतिग्रहोप्यावश्यकइतितदले पस्तस्येत्यभिप्रेतत्वादिति सर्वमनवद्यं ॥ १४७ ॥ महालक्षणसद्भावात्सर्वस्याधिपतित्वाच्च युक्ता सर्वगुणपूर्तिरित्याह ॥ **समस्तेति** ॥ द्वात्रिंशल्लक्षणैः षण्णवत्यंगुलत्वादिभिश्चसमस्तलक्षणैः । "द्वात्रिंशल्लक्षणैर्युक्ताःसम्यग्वायुलयोगिनइति, षण्ण

**समस्तलक्षणैःपूर्णाः समस्तजगदीश्वराः । मुक्तप्रायाःसदासर्वे समादेहादिभिस्तथा ॥ १४८ ॥**

**सविशेषंजगत्सर्वं भूतंभव्यंभवच्चयत् । आलोचनाच्चयज्ज्ञाने भासतेपरमाणुवत् ॥ १४९ ॥**

**असार्वत्रिकमीशेतु तथैवानादिनित्यकं । क्रमात्प्रवर्धमानंस्या दामुक्तेस्तुततोऽव्ययं ॥ १५० ॥**

वत्यंगुलोयस्तु," इत्यादि निर्णये । "एवंसर्वस्यहेतुत्वात्सर्वस्याधिपतित्वतः" इतिबृहद्भाष्ये । निर्दोषगुणपूर्णत्वादेवहिमुक्त प्रायाः । समादेहादिभिरिति केवलेश्वरशक्त्यैवदेहादिलयसाम्यमिति जीवप्रकरणेव्युत्पादितं ॥ १४८ ॥ ज्ञान माहात्म्यमाह ॥ **सविशेषमिति** ॥ एतेन ईशेजीवेभ्योधिकमन्यत्रालोचनेसर्वविषयमिति ऋजुज्ञानस्यलक्षण मित्युक्तंभवति ॥ १४९ ॥ अनादीति ॥ ऋजूनांज्ञानं सर्वत्रसर्वदाप्यनादिनित्यमेव । नानुप्रमाणजन्यमनित्यंचेतिभावः ।

यद्यनादिनित्यं नतर्हियोगिज्ञानं । योगजंहि योगिज्ञानमित्यतउक्तंक्रमादिति । योगप्रभावेनवृद्धिसद्भावाद्युक्तंतदित्याशयः । एतत्सर्वं प्रमाणलक्षणे तट्टीकायांच विशदं । आलोचनंसंसारएव । नमुक्तौ । तथाहि । "ततोप्यतिमहावित्तिः, अशेषोरुविशेषाणां मतिःस्पष्टतयाद्दशिः । नित्यमेकप्रकाराच नारायणमतिःपरे"त्यनुव्याख्याने नारायणमतेर्नित्यमेकप्रकारत्वमभिधाय रमामतेश्च "विशेषांस्तद्गतांस्त्यक्त्वा प्रायस्तल्लक्षणा श्रिय"इत्येकप्रकारत्वादिभगवन्मतिसादृश्यमुक्त्वा ब्रह्मणस्तु प्रायएवंश्रियोयथेति लक्ष्मीमतिविशेषणान्यपि मुक्तब्रह्ममतावतिदिश्य मुक्तानांतुतदन्येषां समुद्रतरलोपमे'ति तदन्यमुक्तानांसमुद्रतरंगवत्किंचिद्वृद्धिह्रासवत्त्वमुच्यते । तेनज्ञायते नमुक्तविरिंचमतेरालोचनानालोचननिमित्तकवृद्धिह्रासवत्त्वरूपविशेषोस्तीति । मुक्तावेकप्रकारमितिचपद्धतौ । ननु "अवृद्धिह्रासरूपत्वंमुक्तानांप्रायिकंभवेत् । कादाचित्कविशेषस्तुनैवतेषांनिषिध्यते । भोगानांतुविशेषेणवैचित्र्यंलभ्यतेक्वचि"दिति भाष्ये मुक्तानंदादिगुणगतविशेषेषुवृद्धिह्रासोक्तेर्मुक्तऋजुज्ञानेपिवृद्धिह्रासौवक्तव्याविति चेन्न । अवृद्धिह्रासेतिवाक्यस्यविरिंचातिरिक्तविषयत्वात् । अतएवसुधायां "ब्रह्मणस्तुप्रायएवंश्रियोयथे"त्येतद्व्याख्यानावसरे लक्ष्मीमतिविशेषणानिमुक्तब्रह्ममतावतिदिशति ॥ ब्रह्मणस्त्विति ॥ श्रियोयथा एवंप्रायः । तथावैशद्याद्यभावात्प्रायइत्युक्तं । केवलमित्युक्त्यभावाच्च । अतएवतत्रतदुक्तं । ब्रह्मणइतिविशिष्याभिधाने कोहेतुरित्यतआह ॥ मुक्तानांत्विति । विशेषबलेनवृद्धिह्रासवतीत्यर्थः । यथोक्तं "अवृद्धिह्रासरूपत्वमित्यादी"त्येवं वृद्धिह्रासस‌द्भावाभिधायकं भाष्यवाक्यंज्ञानपरं ब्रह्मातिरिक्तविषयमितिचदर्शितं । तथाच वृद्ध्यादिरहिततयैकप्रकारकत्वान्मुक्तऋजुज्ञानमनालोचनेपि

सर्वविषयमिति । नच लक्ष्मीज्ञानलक्षणस्यात्रातिव्याप्तिः । तत्रकदाप्यालोचनाभावस्यलक्षणत्वेनविवक्षितत्वात् । अत्रसंसारे आलोचनभावादिति । एकेतु मुक्तज्ञानस्याप्यस्त्यालोचनेसर्वविषयत्वं । परंतु सदाऽऽलोचनमप्यस्तीति सदासर्वविषयंतज्ज्ञानं । आलोचनस्यमनःप्रणिधानमात्ररूपत्वेन तस्यच स्वरूपत्वात् स्वरूपस्यचसर्वदाव्यक्तत्वादित्याहुः । अपरेतु मुक्तावप्यालोचनभावाभावाभ्यामस्तिविशेषः । अस्यचविशेषस्य वृद्धिह्रासरूपत्वाभावान्नग्रंथांतरविरोधइतिमन्यंते । ननु रमास्वरूपंविरिंचःसाकल्येनजानाति नवा । आद्ये रमास्वरूपभूतभगवद्विषयकज्ञानस्यापिज्ञेयताप्रसंगेन विषयविशेषितज्ञानावगमे विषयस्यापिज्ञेयताप्रसंगेन रमासमानज्ञानं भगवद्विषयेविरिंचस्यप्राप्तमित्यनेकप्रमाणविरोधः । नद्वितीयः । ईशादन्यत्रसर्वविषयत्वोक्तिविरोधादिति । मैवं । रमाज्ञानस्येशविषयकत्वेन तद्घटिततयेशकोटिप्रवेशांगीकारेणेशादन्यत्रपदेनैवव्यावर्तितत्वात् । ज्ञानातिरिक्तयावद्रमास्वरूपविषयकत्वांगीकारे ईशादन्यत्रसर्वविषयत्वोक्तिविरोधाभावात् । नच रमाज्ञानविशेषफलभूतानंदादिविशेषाणांविरिंचिज्ञेयत्वे तद्गतज्ञानविशेषप्रयोज्यत्वस्याप्यवगमप्राप्त्या पुनः रमाज्ञानसमानविषयत्वं विरिंचज्ञानस्यप्राप्तमिति वाच्यं । आनंदादिगतज्ञानविशेषप्रयोज्यत्वस्याप्युक्तरीत्या ईशकोटिप्रवेशांगीकारात् । यद्वा ज्ञानानंदादिगुणाकारस्यरमास्वरूपस्यैवेशांतरंगत्वेनेशकोटिप्रविष्टतया हिरण्यगर्भज्ञानंरमायामप्यसर्वविषयमेव तस्याश्चेशकोटिप्रवेशेनेशादन्यत्रपदेनतद्व्यावृत्तिः । यथा सुपर्णादिस्वरूपस्य शक्रमुखदेवगणैरचिंत्यत्वं यथावा ब्रह्मस्वरूपं सुपर्णादिभिरज्ञातगुणपूर्णं तथा रमास्वरूपस्यापि ब्रह्माज्ञातगुणपूर्णत्वोपपत्तिरिति । नन्वीशादन्यत्रालोचनेसर्वविषयत्वमृजुज्ञानसामान्यस्यलक्षणं । इदंलक्षणंतद्घटज्ञा

नेविशेषरूपेऽस्तीतिवाच्यं । अन्यथाऽव्याप्तिप्रसंगात् । नचान्नेशपदकृत्यमस्ति । घटज्ञानेईशस्याप्रसक्तेः । असंभावितंचसर्व
विषयकत्वंतस्य । तथात्वे सर्वज्ञानमेवभवेन्नघटज्ञानं । विषयव्यवस्थयाखलुज्ञानव्यवस्थेति । अत्रोच्यते । घटज्ञानेघटस्येशनि
यम्यत्वतज्जन्यत्वतदधीनसत्ताप्रतीत्यादिकत्वमपिज्ञातव्यं । अन्यथासम्यग्घटज्ञानानुपपत्तेः । तथाच हिरण्यगर्भःघटस्वरूप
भूतंभगवन्नियम्यत्वादिधर्मजातंजानात्येव । परंतु भगवान्यथेदंघटादिकंप्रेरयति तथातंनियमनप्रकारंघटानुबंधिभगवद्धर्मं
साकल्येन नजानाति । उक्तंचतलवकारे"नविद्म नविजानीमोयथैतदनुशिष्या"दिति । एवंच घटज्ञानेपीशादन्यत्रपदंसार्थक
मेव । सर्वविषयमित्यस्यतु घटगतगुणक्रियापल्पपरिमाणांशानंत्यविभुपदार्थसंयोगविभागभेदसादृश्यनिरूपकत्वादिभिरस्यैव
त्रैकालिकनानावस्थायांविविधविक्रियावत्त्वतत्तद्देवादिनियम्यत्वभोग्यत्वनानाजनस्पृष्टत्वादिविविधविचित्रैरनंतधर्मैश्चोपेतेत
स्मिन्घटेसर्वविषयत्वमर्थइति नातिप्रसंगशंकापीति । अथवा भेदसादृश्यादिधर्मात्मकघटादिज्ञानेप्रतियोगित्वाद्याकारेण
सकलपदार्थज्ञानस्याप्यावश्यकतया युगपदंगुलिद्वयवत्प्रतियोगित्वादिप्रकारोपेततद्धर्मात्मकसकलपदार्थानामपिघटाद्येकैकज्ञा
नेष्वपिस्फुरणेन तस्यसर्वविषयत्वमुपपद्यते । नचोक्तदोषः । प्राधान्येनघटाद्येकैकविषयत्वेपि तदुपयुक्ततयैवेतरजगदवगाहि
त्वस्याप्यंगीकारेणाविरोधादिति । अस्मिन्पक्षेईशेअसार्वत्रिकमितिमुख्यमेव । अन्येतु चतुर्मुखज्ञानव्यक्तिरेकैव । तस्यघट
पटविषयत्वाद्यनंताधर्माः । अतोलक्षणस्यैकव्यक्तिनिष्ठतयानोक्तशंकावकाशइतिमन्यंते । अत्रऋजुज्ञानेयोगप्रभावलब्धाति
शयत्वादिकंभगवद्विषयेएव । जगतितु अनादितोपिसुसूक्ष्माशेषविशेषवत्समस्तवस्तुविषयकं । अन्यथा ब्रह्मणस्तुप्रायःश्रियो

यथेत्यतिदेशविरोधः । किंच एकादशतात्पर्ये स्वाभाविकाविरिंचस्येतिस्वाभाविकत्वेनोक्ताणिमाद्यष्टमहासिद्ध्यंतर्गतप्राकाश्य सिद्धौ "दूरश्रुतिर्दूरदृष्टि स्त्रिकालज्ञत्वमेवच । परचित्ताद्यभिज्ञानं प्राकाश्यांतर्गतानिचे" ति सकलदेशकालवस्तुस्वभावव्यव हितार्थविषयक ज्ञानत्वलक्षणत्रिकालज्ञत्वादेरंतर्भावोक्ते जगद्विषयकज्ञानस्यापिस्वभावसिद्धत्वलाभेनानादितोपि योगप्रभा वप्रयोज्यत्वेप्यागंतुकातिशयलाभाभावात् क्रमवृद्ध्यनुपपत्त्यातद्विरोधासंभवात् ॥ १५० ॥ नन्वीशविषयेपिव्यक्त्यतिशयोनु पपन्नः । "शतजन्मसुपूर्वंतु ज्ञानोदयउदीर्यते । आपरोक्ष्येण पारोक्ष्यात्पूर्णज्ञानंसदैवही" ति एकादशतात्पर्ये परोक्षज्ञानपूर्ते रुक्तत्वेन ज्ञानव्यक्त्यतिशयस्यक्रमवृद्ध्यंगीकारेतद्विरोधादित्यतआह ॥ पारोक्ष्येणेति ॥ अयंभावः । भवत्यत्र ऋजूनांभग

पारोक्ष्येणतुपूर्णस्या त्तेषांज्ञानंसदैवहि । विशेषेणापरोक्ष्याच्च क्रमाद्वृद्धिरुदीरिता ॥

वद्विषयपरोक्षज्ञानमनादितोपि स्वयोग्ययावद्भगवद्गुणरूपक्रियाद्यशेषविषयत्वेनपूर्णं । तथापि परोक्षतोज्ञातरूपादिष्वेवतत्त द्गतावांतरविविधविचित्रानंतविशेषेषुक्रमेणवर्धमानमपिभवति । "ब्रह्मरुद्रादिदेवेषुज्ञानंसंस्थाप्ये" तिसूत्रप्रणयनेनब्रह्मणोपि ज्ञानस्थिरीकरणोक्तेः । एवंभगवद्रूपेषुकेषुचिदनाद्यपरोक्षज्ञानमप्यस्ति । "करतलेखलुकंदुकवत्सदा सकलयाकलयासहवि द्यया । अरिधरेणसमंस्फुरितंगुरोर्मनसी" तिमध्वविजयोक्तेः । "अनादितःकेशवान्नान्यसंस्था" इत्युक्तिबलेनपण्महिषीणामप्य नाद्यपरोक्षस्यांगीकर्तव्यत्वाच्च । तथागुणरूपांतरेषुमुक्तिपर्यंतमपरोक्षज्ञानंक्रमेणवर्धमानमपिभवति । नच शतजन्मसुपूर्वंज्ञा

नोदयाभिधानात्कथमनाद्यपरोक्षांगीकारइतिवाच्यं । तत्रकर्मक्षयपदप्राप्त्यादिसाधन योग्यापरोक्षाभिधानेनानादितःसामान्या परोक्षाविरोधात् । तदुक्तमनुव्याख्याने "ब्रह्मणांशतकालात्तु पूर्वमारब्धसंक्षय" इति । चतुर्थतात्पर्येच "ऋजवोनामयेदेवायो ग्याब्रह्मपदस्यतु । अनादिकालभक्ताश्चज्ञानिनश्चनसंशयः । विशिष्ट(वरिष्ठा)ज्ञानभक्त्यादांसर्वजीवनिकायतः । सर्वदापिवि शेषेणशतजन्मप्रयत्नतः । स्वपदप्राप्तिरुद्दिष्टे" ति । केचित्तु पारोक्ष्येणपूर्णमित्यस्य सरस्वत्यादिजीवापेक्षयासदेतिवा वैदिकपद लभ्यज्ञानंसदापूर्णमितिवाऽर्थमाहुः । तच्चिंत्यं । रुद्रादेरपिस्थावरापेक्षयासर्वदापूर्णज्ञानवत्त्वेनविरिंचेविशिष्यकथनायोगात् । नचैवं ऋजूनांज्ञानपूर्तिसद्भावेएकादशतात्पर्यविरोधः । तत्रसनकादिकृतप्रश्नप्रत्युत्तरापरिस्फूर्त्याद्यभिधानादितिवाच्यं ।

अनादितोप्यापरोक्ष्य युक्तारूपेपुचकचित् ॥ १५१ ॥ सर्ववेदाधिकज्ञाना महाप्रतिभयायुताः ।

"हेतुरन्योपितत्रास्ती त्येवंजानन्नपिप्रभुः । विशेषतोमनस्तत्र नाधाज्ज्ञानन्हरेःप्रिय" मित्याद्युत्तरग्रंथपर्यालोचनया तत्रहंसना मकभगवतःप्रत्युत्तरदानाभिप्रायोस्तीतिज्ञात्वा स्वयंतत्प्रश्नैकदेशविषयेमनःप्रणिधानरूपालोचनंनचकार । तदातस्यभगवदि च्छयैवचित्तेऽत्यल्पचलनमिवभगवद्ध्यानंचेत्याद्येवप्रतीयते नतुमनःप्रणिधानेप्यपरिस्फूर्तिरितिनकश्चित्क्षुद्रोपद्रवः ॥ १५१ ॥ ॥ ६७ ॥
अत्र सरस्वतीपदयोग्यज्ञानमप्यनेनैवलक्षितं । तस्याश्चऋजुपदवाच्यत्वस्योक्तत्वात् । इयांस्तुविशेषः । ब्रह्मपदयोग्यज्ञाने ईशादन्यत्रेतीशपदेन लक्ष्मीज्ञानस्य तत्समग्रस्वरूपस्यवासंग्रहः । अत्रतु चतुर्मुखज्ञानस्यापितत्स्वरूपस्यापिवासंग्रहइति ।

“स्वात्मानमन्यच्चसदा विशेषैरखिलैरपि । पश्यत्यजस्तथावाणी विशेषांस्तावतोनत्वि”त्यनुभाष्यपर्यालोचनयास्यार्थस्यप्रतीतेः । विशेषांतरमवतारंप्रसंगेवक्ष्यामइतिऋजुज्ञानातिशयमेवव्युत्पादयति ॥ सर्ववेदेति ॥ “वैदिकस्त्यक्तवेदश्च ब्रह्मैवहि चतुर्मुखः । केवलंवेदशब्देनजानन्वैदिकउच्यते । वेदंविनाप्यनुभवाज्जानंतस्त्यक्तवैदिकाः । तत्ववेदानुसारेणाचिंतयन्वैदिको भवेत् । वेदऊहामनुसरेद्यस्यसत्यक्तवैदिक”इत्याद्येकादशतात्पर्ये वेदस्यब्रह्मणऊहापरनामकप्रतिभानुसारित्वोक्तेः विरिंचज्ञानंवेदादधिकंज्ञायते । गीतातात्पर्येच “ऋषीन्राज्ञस्तथाऽऽरभ्यप्रतिभाभ्यधिकाक्रमात् । यावद्ब्रह्माब्रह्मणस्तु प्रायोनाप्रतिभासितं । विष्णोःप्रीत्यर्थमेवास्य श्रोतव्यंप्रायशोहरे”रितिप्रतिभातिशयमुक्त्वा वेदादिश्रवणंचनज्ञानार्थमित्युक्तं । तथाह्युक्तं न्यायदीपे “ब्रह्मणःप्रतिभापरिमाणमाह ॥ ब्रह्मणइति ॥ तर्हितस्यहरेःसकाशाच्छ्रवणंकिमर्थमित्यतआह ॥ विष्णोरिति ॥ विष्णोःप्रीत्यर्थमेव नतुज्ञानार्थ”मित्यादिना । पद्मनाभतीर्थाचार्यरचितप्रकाशिकायांतु “प्रायशोहरेरेवसकाशाच्छ्रोतव्यमित्यर्थ”इतिभिन्नक्रमतयाऽवधारणंव्याख्यातं । तथाचज्ञायते सकलवेदादिस्वरवर्णपदवाक्यमहावाक्यादिभिःशक्तितात्पर्याभ्यांभगवतोयावद्गुणरूपक्रियादिजातंप्रतिपादितं तत्सर्वंप्रतिभयैवावगम्यते । वेदानांतुप्रतिभावगतप्रमेयेषुसंवादितामात्रमिति । तथापितेषुस्वप्रतिभावगतगुणादिष्वेवकेषुचिदवांतरविशेषाः भगवल्लक्ष्म्युपदेशाभिनयादिबलेनवेदादिगतस्वरादिविशेषैरर्थात्सूचिताअवगम्यंते । उक्तंच “अनंतनियमैर्युक्ताअनंतार्थविशेषिण”इत्यनंतविशेषप्रतिपादकत्वमृग्भाष्ये । भगवदुपदेशादिसामर्थ्याद्वेदादिष्वेवविशेषार्थावगत्यनंगीकारे ज्ञातार्थेऽधिकारासंभवेन“ब्रह्मैवाधिकृतस्तत्रमुख्यत”इत्यनुव्याख्यानवि

रोधः । तथा "योग्योवानैवहिकश्चित् । ऋतेविरिंच"मिति गायत्र्यधिकारोऽपिबृहद्भाष्येब्रह्मणोमुख्योभिधीयते । "योग्या अस्यास्तुविद्यायाःसाक्षाद्वायुस्त्वयोगिन" इत्यादिचतत्रतत्रबहुशोदृश्यते । अपिच "तद्यत्परममृतंतत्साध्याउपजीवंती"तिभाष्य पदोक्तऋजूनांदेवताधिकरणेधिकारोनिर्णीयते । "ब्रह्मातत्प्रसादत"इतिभारताधिकारश्चमुख्यस्तस्यैवोच्यते । "एवंविधानि सूत्राणि कृत्वाव्यासोमहायशाः । ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु । ज्ञानंसंस्थाप्य"तिभाष्येब्रह्मादीनामप्राप्तलाभोभिधी यते । तत्वप्रकाशिकायांच"ब्रह्मरुद्रादिदेवेषुज्ञानंसंस्थाप्येत्यनेन पूर्वंस्थितस्यैवविशेषयुक्त्यादिभिर्दृढीकरणं किंचिदप्राप्त लाभश्चोच्यते"इत्यादीति । नचैवंसत्युदाहृतैकादशतातात्पर्यविरोधः । "प्रायस्तेवैदिकाएव रुद्राद्याअपिवैपुरा । वैदिकस्त्यक्तवे

वेदैःसंवादितामात्रं तेषांज्ञाने(वि)भिधीयते ॥ १५२ ॥

दश्च ब्रह्मैवहिचतुर्मुखः । ततस्तुकेशवंभक्त्या संपूज्यबहुजन्मसु । त्यक्तवेदत्वमापन्नाः प्रसादात्परमेष्ठिन"इतिप्रायोवैदिकानां रुद्रादीनांबहुजन्मानुष्ठितसाधनबलेनत्यक्तवेदत्वमभिधाय ब्रह्मणःस्वभावतएवानादितस्त्यक्तवेदत्वमुक्त्वापिवैदिकत्वंचोच्य ते । "केवलंवेदशब्देन जानन्वैदिकउच्यते । तत्वंवेदानुसारेण चिंतयन्वैदिकोभवे"दित्युक्त्या तत्रैवब्रह्मणोवेदेनज्ञाना तिशयांगीकारप्रतीतेः । नाप्युदाहृतगीतातात्पर्यविरोधः । तत्र "प्रायोनाप्रतिभासितं, श्रोतव्यंप्रायशोहरे"रित्यप्रतिभासित विशेषज्ञानार्थकश्रवणस्यापिप्रायश्शब्देनानुमतत्वप्रतीतेः । "विरिंचस्यकेवलंधर्मकारण"मितिऋग्भाष्यवचनस्यपाठमात्र विषयत्वेनतद्विरोधाभावाच्च । "करतलेखलुकंदुकवत्सदा सकलयाकलयासहविद्यये"त्यस्यप्राचुर्यार्थत्वात्पाठविषयत्वाच्चनतद्वि

रोधोपीति । नन्वेतंतर्हिपूर्वमज्ञातविशेषज्ञापकवेदगतसूचकत्वादिधर्मविशेषस्यप्रागनवगतत्वेन तस्यजगदंतःपातितया सर्वविषयकत्वरूपंतज्ज्ञानलक्षणमनुपपन्नंस्यादितिचेन्न । वेदगतयावद्धर्मज्ञानंसर्वदातस्यांगीकृत्यभगवदुपदेशाभिनयमात्रबलेनाधिकज्ञानाभ्युपगमेऽनुपपत्त्यभावात् । अतिनिर्बंधेत्वज्ञातवेदगतधर्मविशेषस्येशप्रतिपादकतया ईशानुबंधित्वेनेशकोटिप्रवेशादीशादन्यत्रपदेनव्यावर्तितत्वादितिसंतोष्टव्यमितिसर्वंसमंजसं ॥ १५२ ॥ सर्वाभिमानित्वाच्चसर्वगुणपूर्णत्वमुपपन्नमित्याह ॥ वायुर्हीति ॥ अत्रजीवपदेन अन्येसंसारिजीवाविवक्षिताः । नतुमुक्ताः । "मुक्ताएवहिमुक्तानां विशिष्टाविनियामका"

वायुर्हिसर्वजीवाना मभिमानीनियामकः । बलमेधाधृतिस्थैर्य ध्यानवैराग्यमानवान् ॥ १५३ ॥
सज्ज्ञानानंदभक्त्यादि गुणमानीसएकलः । आनंदानुभवस्यापि विमुक्तेरपिसप्रभुः ॥ १५४ ॥

इत्युक्तेः । संसारिजीवत्वावच्छिन्नाश्चात्रसर्वेपिविवक्षिताः । अतोन्यदेवानामिव कर्माभिमानिव्यतिरिक्तस्थूलशरीरापन्नजीवमात्रनियामकत्वमितिनभ्रमितव्यं, किंतुसर्वजीवाभिमानित्वादिकंमंतव्यं । उक्तंचबृहद्भाष्ये "लोकानांचैववेदानांसर्वेषांप्राणिनामपि । सर्वस्याधिपतिर्ब्रह्मे"ति, "सर्वजीवाभिमानीतुब्रह्मैववही"त्यैतरेयभाष्ये । नचात्रसर्वशब्दसंकोचः । बाधकाभावात् । किंच "भोगाश्चयेयानिचकर्मजातान्यनाद्यनंतानिममेहसंति । मदाज्ञयातान्यखिलानिसंतिधातुःपदे"इतिजगतिभगवत्कर्मसमानविषयकर्मवत्त्वस्यप्रमितत्वाच्चाशेषजीवनियामकत्वंवक्तव्यमेव । ननु "सूक्ष्मेंद्रियाणिसंत्येवस्युःस्थूलान्यप्यहंकृतेः । तेषां

भूतैरुपचयःसृष्टिकालेविधीयत"इति "सूक्ष्मत्वेनलयेसच्चप्राकृतैरुपचीयत"इत्यादौच्च सकललिंगदेहानामप्यहंकारपंचभूतैकाद शेंद्रियै रुपचयस्योक्तत्वेनोपचायकाहमाद्यभिमानिनामपि सकललिंगदेहावस्थानंप्राप्तमिति सर्वतत्वदेवानामपिकर्माभिमा न्यादिसर्वजीवेष्ववस्थानंप्राप्तमिति ब्रह्मणएवविशिष्यसर्वजीवनियामकत्वोक्तिःकथमितिचेत् उच्यते । अस्त्येवाशेषलिंग देहानामप्यहंकारादितत्वैरुपचयः।तथापितदभिमानिनांसर्वत्रावस्थानेन यावज्जीवसमसंख्याकविभागयोग्यांशवत्त्वानुपपत्तेः। प्रत्युत "अतीतानागताश्चैव यावंतःपरमाणवः। ततोप्यनंतगुणिता जीवानांराशय"इतिजीवानामेवाहमादिपरमाण्वपेक्षयानि रुपचरितानंताधिकत्वोक्तेश्च । किंनाम मितस्यैवाहमादिद्रव्यस्येश्वराचिंत्यशक्त्यैवप्राग्जीवप्रकरणे उपपादितरीत्याऽनंतसूक्ष्म देहतदनुबद्धेंद्रियोपचायकत्वमंगीकार्यं। अन्यथाअनंतस्थूलदेहोत्पादानुपपत्तेरुक्तत्वात्। तथाचसर्वत्राप्युपचयसद्भावेपि देवा भिमन्यमानतत्वद्रव्यस्यमितत्वेननतेषांजीवसमसंख्यांशवत्त्वमिति । यद्वा येषांजीवानांस्थूलशरीरप्राप्तिस्तेषामेवलिंगदेहाना महंकारादिभिरुपचयो नतुसर्वजीवलिंगदेहानां । उदाहृतवाक्यमप्येतत्परमेव । नचैवंसतिवियदधिकरणोक्तसर्वोत्पादानुप पत्तिःस्यादितिवाच्यं । विनापिद्रव्यांतरोपचयंसृष्टिसमयेसर्वलिंगदेहानामपियत्किंचिद्विक्रियाविशेषांगीकारात् । यथागृह एवावस्थितानामपिबीजाना मावापकालविशेषेविक्रियाविशेषलाभः। दृश्यतेहिस्पष्टंहरिद्रासूरणादिबीजेष्विति । प्रलयेतिरो हितस्यकर्माभिमानरूपपराधीनविशेषस्यसत्त्वाच्चनवियदधिकरणविरोधः । केचित्तु ब्रह्मणइवशिवशक्रकामानामपिकर्माभि मान्यादियावज्जीवनियामकत्वंमत्वा जीवसंख्याधिकरूपवत्त्वमाहुः। तत्रप्रमाणविशेषाश्चिंत्यः। स्वात्मस्वाभिमन्यमानकर्मदेश

कालाद्यतिरेकेणान्यविषयज्ञानशून्यानामतएवचक्षुरादींद्रियव्यापारविकलानां ( दर्शनश्रवणादिरहितानां )केवलंसुप्तप्रायाणां कर्माभिमानिनां नांतःकरणादिनियामकैःकृत्यमस्ति । सुप्त्यवस्थायांस्थूलदेहविशिष्टस्यापिमनआदिव्यापाराभावमात्रेणतदा रुद्रादिनियम्यत्वाभावाभिधानात् । अस्तिहिवायोःसर्वत्रव्यापारः । "जीवस्थितेनरूपेण वेदयत्यहमित्यपी"तिचैतन्यस्वरूप स्यसाक्षिणश्चकर्माभिमत्यादेश्चतदेकनिर्वाह्यत्वात् । यद्यपिकर्माभिमतिर्वृत्तिरूपा स्थूलदेहरहितानामप्यस्ति । तथाप्युक्तप्र माणबलाद्रुद्रादीनांसर्वजीवनियामकत्वे विशेषज्ञापकाभावाच्चेति वाय्वेकनिष्ठतांगीकार्या । अतःसुप्ताविवकर्माभिमानित्वे वायोरेवनियामकत्वमिति । तथाचयुक्तंवायोरशेषस्थूलसूक्ष्मशरीरवज्जीवाभिमानित्वेनतदधिकसंख्याकरूपवत्त्वमिति । शेषा देःसर्वजीवाभिमानितोक्तिःस्थूलदेहवज्जीवाभिमानित्वेतिनदोषः । ननुप्रतिकल्पमनंतानांजीवराशीनांसंसारनाशवत्त्वेनपूर्वपूर्व ब्रह्मकल्पापेक्षयोत्तरोत्तरकल्पेषुसंसारिजीवसंख्याल्पतावश्यंभावेन तन्नियामकानांपूर्वोत्तरब्रह्मणां रूपसंख्याबहुत्वाल्पत्वप्रसक्ति त्वनियामकत्वाल्पनियामकत्वरू(पाधिपत्य)पभगवत्सेवावैषम्यंचस्यादिति । मैवं । प्रतिकल्पमनंतानांमुक्तावपीशाचिंत्यशक्ति वशात्सर्वकल्पेष्वपिसंसारिजीवसंख्यासाम्यस्योररीकृतत्वात् । अन्यथाक्रमेणजीवसंख्याह्रासेन(अल्पतया)जगत्प्रवाहोच्छे दापत्तेः । यथापूर्वमितिश्रुतिविरोधापत्तेश्च । केचित्तुसंख्यावैषम्यमंगीकृत्य स्थूलशरीरापन्नजीवानांसर्वदासाम्येनतन्नियमने वैषम्याभावात्साधनसाम्यं । कर्माभिमानिजीवनियमनविषयेवैषम्यंत्वप्रयोजकं । तेषांस्वरूपसत्ताद्यतिरिक्तनियम्याभावात् । तस्यचाल्पत्वात्प्रतिनिधितयासाधनांतरसंभवेनसाध्यावैषम्योपपत्तेश्चेत्याहुः । नकेवलंजीवानांनियामकोऽपितुबलज्ञानादिगुणा

नामपीत्याह ॥ बलेति ॥ मेधा धारणाशक्तिः । धृतिर्धैर्यं । स्थिरत्वं हर्याराधनादौ । आदिपदेनसमाध्यादेःपरिग्रहः । उक्तंचबृहद्भाष्ये "चित्तंवायुर्बलंधृतिः । स्थितिर्योगश्चवैराग्यं ज्ञानंप्रज्ञास्मृतिःसुखं । मेधामुक्तिर्विष्णुभक्ति"रित्यादि । अत्रमुक्त्यभिमानित्वंनाम "जीवन्मुक्तेश्चमुक्तेश्चह्यभिमानीसएकल"इत्यादिप्रमाणेनद्रष्टव्यं ॥ १५३ ॥ १५४ ॥ औत्पत्तिकगुणस्येति ॥ सर्वेषां शुभप्राप्तियोग्यानां यच्छुभप्राप्तियोग्यत्वं, यच्च "यद्यद्विभूतिमत्सत्व"मितिन्यायेनयद्यद्वस्तु यद्गुणविशिष्टं तस्यतद्गुणयोग्यत्वं तदौत्पत्तिकगुणइत्युच्यते । सर्वंचैतदुक्तमेकादशतात्पर्ये "प्रधानोज्ञानिनांब्रह्मा ज्ञानमानीहृदिस्थितः । सत्त्वकालमानीच

औत्पत्तिकगुणस्यापि ह्यभिमानीजगद्गुरुः। वेदानांचैवलोकानां व्योम
कालादिकस्यच ॥ सर्वतत्वाभिमानीच सर्वप्राणगणाधिपः ॥ १५५ ॥

संहर्तॄणांपतिःस्मृतः । आनंदानुभवस्तूमा उत्कृष्टानुभवःस्मृतः । तद्युक्तत्वंतथासौम्य गुणानामधिकंहितत् । तस्मादानंदमानंतु गुणेषूत्कृष्टमुच्यते । तस्याभिमानीब्रह्मैको ज्ञानभक्त्यादिकस्यच । श्रद्धाभिमानिनीदेवी तथैव हिसरस्वती । तदन्येषांगुणानांतु तदन्येविबुधाःस्मृताः । गुणानांतुप्रभुर्ब्रह्मा तस्मादेकश्चतुर्मुखः । औत्पत्तिकगुणोनाम शुभप्राप्त्येकयोग्यता । तस्याभिमानीवायुस्तु सर्वगुण्यधिपस्तथा । गुणानांगुणयोग्यत्वं यत्सर्वगुणिषुस्थितं । वायुस्तदभिमान्येकः सर्वगुण्यधिकस्तत"इति । वेदानामित्यादौ मानानिप्रागेवोदाहृतानि ॥ सर्वप्राणगणाधिपइति ॥ सर्वेषामिंद्रियाणां

तद्देवानांचस्वामीत्यर्थः । उक्तंचभाष्ये "करणैःकारणंब्रह्म पुरुषापेक्षयाखिलं । श्रोत्रादिभिःकारयति करणानीत्यतोविदु"रिति । अत्रश्रोत्रादींद्रियदेवानांज्ञानेच्छाप्रयत्नरूपजीवप्रवृत्त्यनुसारेणभगवतःकरणत्वोक्त्यामुख्यप्राणस्यजीवप्रवृत्त्यनुसारेण करणत्वाभावोक्तेस्तस्यप्राणगणाधिपत्वसिद्धिः ॥ १५५ ॥ "प्राणस्यैतद्वशेसर्वं, इंद्रियाणांतुनियंताप्राणएकराट्" इत्यादिमहिमांतरमाह ॥ इंद्रियाणामिति ॥ यथा महाराजसमीपस्थोयुवराजः कार्येषुप्रसक्तेषुस्वयमासनेसंस्थितएवसर्वकार्याणिकारयति तथासर्वेंद्रियाधिपतिर्मुख्योपिहरेःसमीपेस्थितएवसन् इंद्रियाणांप्रवृत्तौप्रसक्तायामपि सर्वंकरोतिकारयतिच । इंद्रियदेवास्तुइंद्रियकार्येषुविषयेतेनाज्ञप्ताः स्वस्थानादुच्चलिताएव श्रोत्रादिभिःश्रवणादिकंकारयंतिकुर्वंतिच । प्राणस्यनराजादिवदा

इंद्रियाणांप्रवृत्तौतु स्थितएवकरोत्ययं । तदन्येंद्रियदेवास्तु किंचिच्चलनसंयुताः ॥ १५६ ॥

ज्ञापयितृत्वमात्रं किंतुप्राणःस्वस्थानस्थितएवजीवस्यदूरदर्शनादींद्रियप्रवृत्तिं स्वयंकरोतिकारयतिच । देवास्तुतदधीनस्वरूपसत्ताप्रतीतिप्रवृत्तयोदारुयोषावत्प्राणाधीनव्यापृतयो नतुराजानुज्ञामात्रव्यपेक्षामात्यादिवत्स्वयमेवस्वकार्यक्षमाः । तदेतदप्युक्तंभाष्ये "विषयद्रवणात्तेषामिंद्रियत्वमुदाहृतं । तेषांनियामकःप्राणस्थितएवाखिलप्रभुरितिबृहत्संहितायां । ॐभेदश्रुतेः स्थितएवेदंमुख्यप्राणःकरोतिकारयति वलतिबालयति धत्तेधारयति प्रभुमेनमाहुरथेंद्रियाणिनस्थितानि नकुर्वंतिना[illegible]रयंति नबलंतिनबालयंति नदधतेनधारयंति तानिहवाएतान्यबलानितस्मादाहुरिंद्रियाणिकरणानीतिपौत्रायणश्रुतेः । ॐवैलक्ष[illegible]ाच्च

ॐ पुरुषापेक्षयाप्रवृत्तिरिंद्रियाणांदृश्यते नतुमुख्यस्य । प्राणाग्नयएवैतस्मिन्पुरेजाग्रतीतिश्रुते"रिति । तइंद्रियाणितद्व्यपदेशादन्यत्रश्रेष्ठादितिच ॥१५६॥ किंच राजादिस्तत्तद्देशाधिकारिणोविनानराष्ट्रपालनेक्षमः। नैवंप्राणः। किंतुत्विनापीतरदेवानेकैर्नैवरूपेणैकत्रावस्थितएवाशेषकार्यकरणेशक्तः । तथापिदेवानांसर्वप्राणेंद्रियादिप्रेरणेन श्रीपतिप्रीतिमुपजनयितुमतिकृपयैवानंतरूपैस्तेषुस्थित्वासर्वकार्याणि लीलयैवसाक्षात्करोतिकारयतिचेतिप्रतिपादिकां न्यायविवरणोदाहृतांश्रुतिंपठति ॥ तानीति ॥ इंद्रियस्थैःस्वरूपैस्तु ज्ञानानिजनयत्यसौ। मनःस्थेनविशेषेण कामकर्मकृदेवच । पृथक्स्थितेनरूपेण जीवंधारयति

तान्येतान्यवशान्येव तथापिकृपयैवसः । पृथक्शक्तोपितद्वैस्तु स्वरूपैस्तद्ध
कार्यकृत् ॥ १५७ ॥ मुख्यप्राणोमहानेष येनव्याप्तंचराचरं। तस्मिन्नोतमिदं
सर्वं चेतनाचेतनात्मकं ॥ यथासूत्रेमणिगणा रथनाभावरायथा ॥ १५८ ॥

प्रभुः। जीवस्थितेनरूपेण वेदयत्यहमित्यपि। प्राणएकोवशीनित्यं बाह्यांतःकरणेश्वरः । तान्येतानीत्यादि । तान्येतानि इंद्रियदैवतानि । स्ववशानिनेत्यवशानि पराधीनानीतियावत् । तथापीत्थंतेपांकेवलपराधीनप्रवृत्तिकत्वेपि स्वयंदेवान्विनापृथक्कर्तुंशक्तोपि तत्तदिंद्रियगतैरूपैस्तत्तदिंद्रियनिर्वर्त्यज्ञानकर्मादिकार्याणिकरोतीत्यर्थः ॥ १५७ ॥ यथेति ॥ "यथाकंथापटाःसूत्र ओताःप्रोताश्चसंस्थिता, इत्याद्येकादशतात्पर्ये। अराइवरथनाभौप्राणेसर्वंप्रतिष्ठित" मितिषट्प्रश्नोपनिषदि ॥१५८॥

“प्राणाएवाधस्तात्प्राणउपरिष्टात्प्राणोमध्यतःप्राणःसर्वतःप्राणएवेदंसर्वमि”तिप्राणस्यव्याप्तिःश्रूयतइति । एकादशतात्पर्ये च “चतुर्मुखस्तुसर्वांतर्व्याप्तदेहोमहातपा” इति । अत्रैवमाचक्षते सावरणांडापेक्षयाऽधिकप्रवेशएवैकेनरूपेणव्याप्तिः । ततःपरं समग्राव्याकृताकाशे पृथक्पृथगेवंविधैःपरिच्छिन्नैरनंतरूपैर्व्याप्तिः । समनेतिसूत्रेरमारमेशयोरेवसमग्रदेशव्याप्त्युक्तेः । “पवमानोहरितआविवेशेतिवायुरेव पवमानोदिशोहरित आविष्ट”इतिश्रुतेरप्ययमर्थइति यावद्देशसंचारमात्रंव्याप्तिरितिविवक्षितमित्याहुः । रमारमेशयोश्चैतन्यस्वभावतोव्याप्तिरितिसमनेतिसूत्रेउच्यते । विरिंचस्यतुस्वभावतोऽणुचेतनत्वमेव । जीवत्वात् । तथापिचैतन्यविकासेनयावद्देशव्याप्तिरस्तीत्याहुः । अणूनामपिजीवानांप्रकाशोव्यापकोभवेत् । अंडमात्रेबहिश्चापि

यतःसर्वंजगद्व्याप्य तिष्ठतिप्राणएवतु । छंदांसिवायोर्लोमादा वाश्रितान्यखिलान्यपि ॥ १८९ ॥

देवतानांयथाक्रममित्युक्तप्रकाशव्याप्तिः । ब्रह्मणःसमग्रदेशेसत्त्वात्तदभिप्रायेणव्याप्तिरितिचवदंति । अत्रायंविशेषः । अमुक्तत्वेदेहद्वाराव्याप्तिः । देहेचचैतन्यविकासेनव्याप्तिःसमर्थिता । मुक्त्यवस्थायांतु साक्षाच्चैतन्यविकासेनैव । वस्तुतोजीवानामणुस्वभावत्वस्याणवश्चेतिसूत्रे समर्थितत्वात् । अणुश्चेतिसूत्रेपृथगणुत्वोक्तेश्चप्राणस्य । अत्रोक्तंतत्वप्रदीपे अणुत्वेचास्यमहद्भूलक्षण्यमवगम्यते । पृथक्सूत्रादिति । अणवश्चेतिसूत्रे सर्वजीवानामणुत्वस्योक्तत्वेपि प्राणविषयेपृथक्सूत्रप्रणयनादाधिक्येनतदणुत्वंज्ञायते । सिद्धेसत्यारंभोनियमार्थइतिन्यायादिति तदभिप्रायः । अतोमुख्यप्राणाख्यरूपेणाणुः । देहाद्बहिर्वर्तमानेनमु

ख्यवायुरूपेणव्याप्तिश्चेत्येवंरूपेणभाष्यादौव्यवस्थापितंद्रष्टव्यं । छंदांसीत्यादिबृहद्भाष्येस्पष्टं ॥ १५९ ॥ सप्तस्कंधगतइति ॥ आवहविवहसंवहपरावहप्रवहोद्वह ··· इत्येतैःसप्तभिःस्कंधैरूपैः गतःप्राप्तःलोकान्बिभर्तीत्यर्थः । यद्वास्कंधेनगतःप्राप्तःसन् सप्त लोकान्बिभर्तीत्यर्थः ॥ कूर्मरूपेणेति ॥ "सवायुर्वायुरूपेण जगत्पातिशरीरगः । आदित्यस्थेनरूपेण जगद्भातिप्रकाशयन् । अग्निस्थेनैवरूपेण हूयतेसर्वयष्टृभिः । सएवकूर्मरूपेण वायुरंडोदकेस्थित"इत्यादिबृहद्भाष्ये ॥ १६० ॥ भूतानीति ॥ "वायोर्भूतानिजायंते लयमेष्यंतितत्रचे"त्यादिषुप्रसिद्धमेतत् ॥ १६१ ॥ हंसेति ॥ "हंसरूपोहितोदेवो श्वासोच्छ्वासप्रवर्तकः ।

सप्तस्कंधगतोलोका न्योबिभर्तिमहाबलः । सएवकूर्मरूपेण बिभर्तीदंजगत्सदा ॥ १६० ॥

भूतानिमात्राश्चेष्टाश्च मुख्यप्राणादिदंजगत् । एकोहिकर्तासर्वस्य रमानाथप्रसादतः ॥ १६१ ॥

हंसगोवत्सरूपाद्यैः प्राणापानादिकैस्तथा । सर्वप्राणिषुसंस्थःस न्सर्वचेष्टाप्रवर्तकः ॥ १६२ ॥

पदप्रदश्चदेवानां तत्तच्छक्तिप्रदस्तथा । वायुर्हिनित्यसंचारी सदासर्वप्रवृत्तिमान् ॥ १६३ ॥

वायुर्गोवत्सरूपेण सर्वप्राणिषुसंस्थितः । तस्मात्सर्वोत्तमोदेवो विविधंतुयदष्टकं । देवानृषीन्पितॄन्यज्ञा न्गंधर्वान्मानुषोरगान् । असुरांश्चवशेनित्यं नयत्यमितपौरुषः । संपूर्णाश्चसुपर्णेश शेषेंद्रास्तत्स्त्रियोपिच । अष्टौनयत्युन्नयति वशीकृत्यस्वयंप्रभुः । अतो व्यष्टिःसमष्टिश्च वायुरेवाभिधीयते"इतिबृहद्भाष्ये । अग्निर्नासिक्यवायुश्च दिक्पाइंद्रादयोखिलाः । यमःसोमश्चरुद्रश्च तेनैव स्वपदेस्थिताः" इत्याद्यैतरेयभाष्ये ॥ १६२ ॥ तत्तच्छक्तिप्रदइति ॥ "यथेंद्रियप्राणगत स्तेषांशक्त्याभिधीयते । इष्टिदः

श्रुतिदश्चैव ज्ञानदोऽज्ञानदस्तथा"इत्येकादशतात्पर्ये । "वायुर्हिनित्यसंचारीत्याद्यैतरेयभाष्ये । व्याप्तिर्नित्यगतोवायुरितिछांदो ग्यभाष्ये । मारुत्येवयतश्चेष्टासर्वा"इतीशावास्यभाष्ये ॥ १६३ ॥ सएवजीवनकरो यदापानेनसंयुतः । प्राणान्नियमयत्यस्मि ञ्शरीरेपुरुषोत्तमः । तदामृत्युप्रदइत्यैतरेयभाष्ये । मुक्तवायुर्मुक्तानांजीवनप्रदइतिज्ञेयं ॥ १६४ ॥ "एषोग्निस्तपत्येषसूर्यएषप र्जन्य"इत्यादिषट्प्रश्नादौच सूर्यचंद्रेत्यादि स्पष्टं ॥ १६५ ॥ १६६ ॥ १६७ ॥ किंबहुनारमारमेशातिरिक्ताशेषजगद्विषयेमुख्ये

सएवजीवनकरः प्राणापानादिरूपकः । तथामृत्युप्रदश्चायं मुक्तानामपिजीवनं ॥ १६४ ॥

सूर्यचंद्राग्निपर्जन्य पृथिव्यन्नादिषुस्थितः । आशादिस्थस्तथासर्व देवर्ष्यादिषुसंस्थितः ॥ १६५ ॥

बृहत्युक्थादिषुतथा नानारूपैरवस्थितः । पंचरूपीससर्वत्र सहपंचात्मविष्णुना ॥ १६६ ॥

तथाहंसादिरूपेण मेघादिषुजगद्गुरुः । अनंतानंतरूपेण जगद्यमयतीश्वरः ॥ जाग्रत्स्वप्न

सुषुप्त्यादि सर्वावस्थानियामकः ॥ १६७ ॥ यानियानीहकर्माणि जगन्निरस्थूरमापतेः ।

नानियतंनकिंचिदप्यस्ति । किंत्वीशइवाशेषजगन्नियमनभोगादिमानित्याह ॥ यानीति ॥ "भोगाश्चयेयानिचकर्मजाता न्यनाद्य नंतानिममेहसंति"इत्यादिनिर्णये । एकोहिकर्ताजगतो ब्रह्मैवहिचतुर्मुखइतिभाष्ये । ननुकथंसमस्तभोक्तृतासर्वक्रियाकर्तृताच । हर्यैकभोग्यसारस्यापिगीताभाष्यादावुपपादितत्वेनतद्विरोधात् । कथंहरिकृताखिलकर्मवत्ता । रावणहननवनीतभक्षणादि

क्रियाणांभगवदेकनिष्ठत्वादितिचेत्सत्यं । केवलंभगवदेकभोगयोग्यकर्मातिरिक्तानामेवाखिलानीत्यत्रविवक्षितत्वात् । अत एवोक्तंप्रायइति । मुख्यविवक्षयेदमुदितं । वैवक्षिकानितुप्राणेपिसंति । अदनोपयोगित्वेननवनीतादिनियामकतयातत्रावस्थितेरेवतद्भोक्तृत्वमित्युपचारात् । किंच हरिणाद्यमाननवनीतादिगतस्यप्रविविक्तपदोक्तस्यहर्येकयोग्यस्यसारविशेषस्याभोगेपि तदन्यसारस्यभोगोपपत्तेः । तस्यच नवनीतादिभिन्नत्वेनहरिभुक्तनवनीतभोक्तृत्वसंभवात् । अतएव "सर्वंसपूतमश्नातिस्वदितंमातरिश्वना" इत्युपपद्यते । रावणहननादिकर्मस्वपिकरणभूतबाणादिरूपत्वेनहननहेतुत्वोपपत्तेः । अतएवसंग्रहरामायणे रावणहननप्रस्तावे शरंमहामेरुसममित्याद्युक्त्वा साक्षाद्दजूनांननुयुक्तमेतदित्युक्तं । निर्णयेच पंचात्मकोमारुतएवबाणइत्युक्तं ।

प्रायःप्राणाधिपेतानि समस्तानिनसंशयः ॥ १६८ ॥

करताडनादिनैवहन्यमानकंसादौतुहरिसेवार्थंतेनहंतव्यतोपयुक्तबलप्रदानायावस्थानादुपचारेणतत्क्रियावत्त्वंज्ञेयं । उक्तंच देहेपियोऽभवदमुष्यरमेशबंधुर्वायुरिति । एवंहिरण्याक्षमधुकैटभादावपिहननहेतुत्वंध्येयं । ननुतथापिनजगद्गतसर्वक्रियाहेतुत्वं । त्रिवृत्क्रियायतोविष्णोरित्यादिभाष्यन्यायविवरणयोस्त्रिवृत्कर्तृत्वंविष्णोरेवेतितत्वप्रकाशिकायांत्रिवृत्करणक्रियायास्तथा "पुरुषःसुखदुःखानांभोक्तृत्वेपिहेतुरुच्यत" इतिगीतायां "जीवस्यसुखदुःखानांभोगशक्तिप्रदःसदा । परमःपुरुषोविष्णु" रिति तात्पर्ये । तृतीयस्कंधतात्पर्येच आनंदाद्यनुभवदानक्रियायाभगवदेकनिष्ठत्वोक्तेरितिचेत्सत्यं । "एवंब्रह्माद्यास्तदवांतरा" इति भाष्येतत्वप्रदीपिकायांच एष्यत्प्राणस्यभविष्यद्ब्रह्मणःश्रुतिस्मृतिप्रसिद्धत्रिवृत्कर्तृत्वस्यपरमानंतरभावित्वादिनातत्राप्यल्पप्रवृ

त्युक्तेः । "तस्मादानंददानंतु गुणेषूत्कृष्टमुच्यते । तस्याभिमानीब्रह्मैक" इत्येकादशतात्पर्येब्रह्मणआनंददानपदोक्तानंदानुभवाभिमानित्वोक्तेस्तदभिमानितयातद्गतत्वमुपचर्यते । किंच परमेश्वरस्यैवसर्वकर्तृत्वेपि भोक्तृत्वदानेदेव्याअल्पप्रवृत्तिरिति दर्शयितुमुच्यतइतिस्थानद्वयेप्युक्तं । कर्तृत्वेपिसएवमुख्यहेतुः । तथापिभोक्तृत्वापेक्षयातस्याधिकप्रवृत्तिरिति कर्तृत्वेहेतुः प्रकृतिरुच्यतइति सर्वहेतुत्वेपिविष्णोःप्रकृतेर्जीवंप्रतिभोक्तृत्वदानेऽल्पप्रवृत्तिरिति पुरुषोभोक्तृत्वेहेतुरुच्यतइति विशेषहेतुरेवमुच्यतइतिगीतातात्पर्ये आनंदानुभवदातृत्वंहरेरित्युक्त्वा रमायाअप्यल्पप्रवृत्तेरुक्तत्वेन तन्न्यायेन वायोरप्यल्पमानंदानुभव

सर्वत्रविनिविष्टःस न्सर्वभोक्ताचतुर्मुखः । भोग्यभोक्तात्मनाचापि स्वयमेवव्यवस्थितः ॥ १६९ ॥

सर्वत्रगःसर्वनामा सर्ववेदाभिधश्चसः । बृहतीसहस्रवाच्यश्च तावद्रूपःपरोविभुः ॥ १७० ॥

दानमंगीक्रियते । कुतएवंवैवक्षिकत्रिवृत्करणहेतुत्वादिकंवायोरंगीक्रियतइतिचेत् "मदाज्ञयातान्यखिलानिसंती" तिस्पष्टमुक्तेः । उदाहृततत्वप्रकाशिकातत्वप्रदीपिकावाक्येष्वेवतथाप्रतीतेः बाधकाभावाच्चेति ॥ १६८ ॥ सर्वगतत्वाच्चसर्वप्रवर्तकइत्याह ॥ सर्वत्रेति ॥ उक्तंचतृतीयतात्पर्ये "प्रधानवायुरन्येषु नित्याविष्टोयतस्ततः । तद्गुणास्तेषुचोच्यंत" इति । अतएवसर्वभोक्तेत्याह ॥ सर्वेति ॥ मुख्यतइति । रुद्राद्यपेक्षयेतिज्ञेयं । तस्माद्धोक्तैषएवासौसर्वस्यान्यस्यमारुतः । तत्प्रसादात्परेऽश्नंतिकिंचित्किंचिन्नचाखिलं" इत्यैतरेयभाष्ये ॥ भोग्येति ॥ "एकएवब्रह्माभोक्तृभोग्यत्वेनस्थित" इत्युक्तेः । छांदोग्यभाष्ये "भोक्तृभोग्यात्मनानास्तितस्यदुःखंकथंचने" त्यादेश्च ॥ १६९ ॥ सर्वगत्वादेव स्वातंत्र्यंतद्गतत्वंचे त्युक्तरीत्यासर्वशब्दाभिधेयोतएवसर्ववेदोदितः

त्याह ॥ **सर्वत्रगइत्यादिना** ॥ उक्तंचतृतीयतात्पर्ये "शब्दब्रह्मात्मकोब्रह्मासर्वशब्दाभिधेयतः । ऋतेनारायणादीनांनाम्नां सविषयोयतः" इति । ऐतरेयभाष्येचएषनारायणोदेवइत्यारभ्यशतर्च्यादिऋषिनामवत्त्वं सूक्तादिसर्वशब्दाभिधेयत्वमुक्त्वा तावाएताःसर्वाऋचइत्यस्यव्याख्यानावसरे ब्रह्मादिदेवतानाम्नांसमुद्रमेघघोषादीनां मार्जारादितृणादिलोकशब्दानांच तत्तत्प्र वृत्तिनिमित्तैर्भगवत्परत्वमभिधाय तथैवसर्वनामानिप्रवर्तंतेचमारुते । अन्यव्यपेक्षयावायौमुख्यवृत्तिर्विधीयतेइत्युक्त्वा अतः सर्ववेदाद्यभिधेयत्वंवायोरप्यस्तीत्युपपाद्य "द्वावात्मानौहिदेवेषुद्वौप्राणौद्वौचचेतनौ । अज्ञानाभिभवास्पृष्टौ वायुर्नारायण श्चतौ । सर्ववेदोदितौतस्मादेतौद्वावेवनापरः । अन्येचैवमितैःशब्दैरुच्यंतेनामितैःक्वचित्" इत्यादिसर्ववैदिकपदलोकशब्दमे

**वेदवर्णपुराणादौ तत्तन्नामाद्यवस्थितः । अनंताम्नायवेद्योसौ विनाविष्णोःप्रसिद्धतः ॥ १७१ ॥**

घाग्निवारिधितलादिसर्ववेदाभिधेयत्वंमुख्यवायोरुच्यते । अत्रहरौरमायांचप्रसिद्धवेदभागातिरिक्तवेदप्रतिपाद्यतावायोरित्य यंविशेषऋग्भाष्येऽभिहितः । "देवतासर्वविद्यानां स्वयंनारायणःप्रभुः । ऋतेतत्रप्रसिद्धाश्च देवताश्रीस्तथात्रच । ऋतेप्रसिद्धा ब्रह्मै"वेति । वायोर्बृहतीसहस्रप्रतिपाद्यत्वंद्वासप्ततिसहस्ररूपत्वंचैतरेयभाष्ये । अन्यदेवताविषयत्वेनप्रतीयमानाअपिऋचो भगवद्विषयाएवमुख्यतः । तदाज्ञयावायोश्च । तस्माद्बृहतीसहस्रंसर्वंमुख्यतोनारायणस्यापन्नं । अनंतरंतदाज्ञयावायोश्चेत्या दिना यःप्राणदेवतावायुस्तस्यप्रतिमारूपमिदंबृहतीसहस्रं । सचवायुर्विष्णोर्मुख्यप्रतिमा । तस्माद्विष्णोरेवप्रतिमाबृहतीसहस्र मित्यंतेनेति ॥ १७० ॥ वेदवर्णेत्यादिकमेकादशतात्पर्येस्पष्टं । "तस्मात्सर्वाधिकोब्रह्मा गुणैःसर्वैर्नसंशयः । वर्णस्थोवर्णना

मासौ स्वरस्थःस्वरनामकः । मनस्स्थश्चमनोनामा तन्नामाचक्षुरादिगः । तस्यसर्वाणिनामानिमुख्यतःकवयोविदुः । तत्स्थानत्वादिंद्रियादेर्वर्णादेश्चोपचारतः । एवमस्योपचारेणविष्णोःसाक्षात्तुमुख्यतः" इत्यादौ ॥१७१॥ ओंकारवाच्यइति "एतद्वैसत्यकामपरंचापरंचब्रह्म यदोंकारइति" षट्प्रश्नोपनिषदिविरिंचस्यओंकारवाच्यत्वंज्ञायते । तट्टीकायांस्पष्टमुक्तः । ननुमातृकाष्टाक्षरादिमंत्राणांपुरुषसूक्तादिवेदानांचतंत्रसारोक्तक्रमेणोंकारव्याख्यानरूपत्वात् वायोर्व्याख्येयोंकारप्रतिपाद्यत्वे तद्व्याख्यानाष्टाक्षरादिप्रतिपाद्यत्वंचप्राप्नोतीति ऋतेतत्रप्रसिद्धाइत्युक्तविरोधइतिचेन्न । नहिअकाराद्यतिशांतांताष्टाक्षरात्मकसमग्रोंकारमुख्यप्रतिपाद्यत्वंविरिंचस्योक्तं । किंतुअकारोकारमकाररूपवर्णत्रयात्मकोंकारैकदेशान्मुख्यप्रतिपाद्यत्वमेव । उगक्रमेअकारउकारो

ओंकारवाच्यःप्राणोसौ वेदानुक्तगुणस्तथा ॥ १७२ ॥

मकारइतितावन्मात्रस्यैवप्रस्तावात् । तथाचाष्टाक्षरादीनांसमग्रोंकारमुख्यव्याख्यानरूपत्वान्नोक्तविरोधः । विष्ण्वेकनिष्ठभागपरित्यागेनेतरवेदभागानां विरिंचप्रतिपादकोंकारांशव्याख्यानरूपत्वमंगीक्रियत इतिसमग्रस्यवेदादेःप्रणवव्याख्यानत्वोपपत्तिरिति । अस्तिच चतुर्मुखस्यनारायाणादिशब्दावयवार्थत्वाभावेपि स्वंरूपंशब्दस्येतिन्यायेन नारायणादिशब्दाभिमानित्वेनाभिमान्यभिमन्यमानयोरेकनामत्वनिश्चयादेतद्विवक्षया नारायणादिशब्दवाच्यता । नकेवलंसर्ववेदप्रतिपाद्यः अपितुवेदानुक्तगुणश्चेत्याह ॥ वेदेति ॥ तैत्तिरीयोपनिषद्भाष्ये "त्यच्चानिरुक्तंविज्ञानं तथानिलयनंमहान् । सत्यंप्राणस्तथाश्रीश्च" ति विरिंचवायुरमादेवीनांत्यदादिशब्दवाच्यत्वमभिधाय तद्वद्विष्णोस्तुसंबंधात्स्वतस्तन्नामकोहरिरित्यनन्याधीनमुख्यप्रवृत्तिनिमित्तक

त्वाद्विष्णोरेवैतच्छब्दमुख्यवाच्यत्वं प्रकृतिप्राणब्रह्मणांतु भगवत्संबंधेनपराधीनाल्पप्रवृत्तिनिमित्तगब्दावेनेश्वरापेक्षयाऽमुख्यप्रतिपाद्यत्वंचोक्त्वा त्यदादिशब्दनिर्वचनंक्रियते । "ततोनियामकश्चेतित्यदानंत्यादवाच्यतः । अनिरुक्त"मित्यादिना । अवाच्यत्वेआनंत्यादितिहेतुरितिव्यासतीर्थीये । तथाचभगवत्प्रसादाच्छ्रीब्रह्मवायूनांसाकल्येनवेदाद्यवाच्यत्वलाभाद्वेदानुक्तगुणत्वंसिध्यति । "अवसादसुवाच्यत्वदौर्बल्याज्ञत्वसाधुताः । प्रकृतिप्राणतोन्यत्रकुर्व"न्निति तदन्येषांसुवाच्यतोक्तेश्चैतेषामवाच्यत्वं सिध्यति । एकादशस्कंधेचतुर्विंशेध्याये "आसीज्ज्ञानमयोर्थ"इतिज्ञानार्थात्मकंसत्यमुपक्रम्य "वाङ्मनोऽगोचरंसत्यंद्विधासम

नित्यपूर्णगुणत्वाच्च हरेःप्रियतमत्वतः । अशक्याप्राप्यराहित्या द्व्यर्द्धःसमुदाहृतः । तस्मादखंडशक्तिःस निस्सीमगुणबृंहितः ॥ १७३ ॥

भव"दितिज्ञानार्थशब्दप्रतिपाद्यहिरण्यगर्भवाण्योर्मनोवाचामगोचरत्वमभिधीयते । तात्पर्येच"तच्छब्दार्थात्मकमुभयंमहत्तरं । ज्ञानाभिमानीपुरुषःसब्रह्मासमुदाहृतः । अर्थाभिमानिनीप्रकृति र्गायत्रीसाप्रकीर्तिता । तयोर्नियामकोविष्णुः"इतितट्टीकायां स्पष्टमेषोर्थोवगम्यते । दशमषोडशतात्पर्येच "विष्णुर्ब्रह्मातथावायु रनिरुक्ताःप्रकीर्तिताः । तत्पत्न्यश्चेतिनगुणाव्यत्यस्तास्तु ध्वसंशय"इतिसाकल्येनावाच्यत्वमुक्तं । नितरां साकल्येनोक्तानिरुक्ताः ननिरुक्ताअनिरुक्ताइति ॥ १७२ ॥ वायोर्माहात्म्यं बुद्धावारोहयितुं बृहद्भाष्योक्तमध्यर्धत्वंतत्रोक्तयुक्त्यादर्शयति ॥ नित्येति ॥ तथाहिबृहद्भाष्ये "अध्यर्धोवायुरुच्यते । अध्य

र्धीहिगुणानित्यंवायोरध्यर्धएवतु । नचैकत्वंभवेद्वायोस्तद्विशिष्टोयतोहरिः । नद्वितीयोयतस्तस्मिन्प्रीतिरभ्यधिकाहरेः । ततो ध्यर्धगुणायस्मात्सर्वस्माद्देवतागणात् । नचाशक्यंनचाप्राप्यमतोध्यर्धइतीरित" इति । "वायुःपूर्णोहिदेवानां तस्माद्ब्रह्मेतिचोच्य त" इतिछांदोग्यभाष्ये । ततश्चमहागुणत्वंतस्यसिद्धमित्याह ॥ तस्मादिति ॥ उक्तंचबृहद्भाष्ये "तस्मादखंडशक्तिःस मुख्यवायु रुदाहृतः । शापैरथवरैर्वापि नास्यप्रतिहतिर्भवेत्" इति ॥ निस्सीमगुणेति ॥ "यतोनिस्सीमकास्तेषां देवानामष्टसिद्धयः । देवे ष्विंद्रेशवायुश्रीविष्णूनामुत्तरोत्तर" मित्याद्युक्त्वा "सर्वेगुणास्तुप्राणस्य परमात्मप्रसादतः । प्राणविष्ण्वोःप्रसादेन भारत्याः संप्रकीर्तिताः" इत्येकादशतात्पर्ये निस्सीमगुणत्वमुक्तं । "प्राणस्यनिस्सीमबलंप्रकाशय" न्नित्यादीनिनिर्णयेबहुशोवाक्यानिवर्तंते

अनंतान्यस्यरूपाणि त्रिकोटीनिविशेषतः । प्राणादिदशरूपोसौ सोध्यात्मादिगतःप्रभुः ॥ १७४ ॥

हनुमान्भीमसेनश्च पूर्णप्रज्ञार्यइत्यपि । श्रुतानित्रीणिरूपाणि मूलरूपसमानिच ॥ १७५ ॥

॥ १७३ ॥ इदानींब्रह्मवाय्वोर्गुणानाह ॥ (अथवायोरूपवैपुल्यंदर्शयति) ॥ अनंतानीति ॥ "अनंतमूर्तिर्भगवा नवनंतजगदा स्थित" इत्युक्तेर्वायोरप्यनंतरूपाणिसिद्धानि । भूम्नांकृतावतारविशेषानप्याह ॥ त्रिकोटीत्यादिना ॥ "त्रिकोटिरूपःपवनश्च मेसुत" इतिनिर्णये । "प्राणादिपंचकंचैव तथानागादिपंचकं । नागःकूर्मश्चकृकलो देवदत्तोधनंजयः । एवंदशविधःप्राण अध्यात्मादित्रिधाखिला" इतितृतीयतात्पर्ये । अध्यात्माधिभूताधिदैवंप्रत्येकशोदशरूपीप्राणःसर्वत्रवर्ततइत्यर्थः । बलित्थेत्या दिश्रुतौत्रीणिरूपाण्युक्तानीत्यर्थः ॥ १७४ ॥ इत्थमेवनिहितमित्युक्तेराह ॥ मूलरूपेति ॥ उक्तंचतत्वप्रदीपिकायां "तत्वविं

द्यार्यवर्याणांमूलरूपइव सर्वरूपेष्वपिसौबल्यसार्वज्ञ्यमौलक्षण्यादिगुणाः परिदृश्यमानायुज्यंत"इति । नन्वेवंचेत्कथंनिर्णये "सर्वेगुणाआवृतामानुषत्वे युगानुसारान्मूलरूपानुसारात् । क्रमात्सुराणांभागतोव्यक्तरूपा आदानतोव्यक्तिमायांत्युरूणां । इच्छाव्यक्तिःप्रायशोमारुतस्य तदन्येषांव्यक्तताकारणेनेति, सौगंधिकप्रकरणे"देवानांहिनृजाताना मल्पव्यक्तंभवेद्बलं । इच्छ याव्यक्ततांयाति वायोरन्येषुतच्चन । अन्येषुदेवताव्यतिरिक्तेषु तच्चाल्पंस्वरूपबलमपिव्यक्तंभवेदितियत्तच्चनेतितदर्थः । एवम न्येपिहिगुणा मानुषादिषुजन्मसु । देवानांमानुषादौतु शक्तावव्यक्तताकृतेः । धर्मवृद्धिर्भवेत्तेषां प्रीतोभवतिकेशवः । तस्मानु षेबलेतस्य वराद्धारितवत्स्थिते दैवंबलंसुशक्तोऽपि नाविश्चक्रेसमारुत"इति नहुषप्रश्नेचभीमावतारेबलादिगुणानामावृतत्व मुच्यते । मूलरूपावताररूपयोःसाम्येतदनुपपत्तेः। नचाव्यक्तत्वेपिस्वरूपतोगुणसद्भावात्साम्यमितिवाच्यं। तस्यसर्वसाधारणत्वे नविशिष्य इत्थमेवनिहितमित्यनुपपत्तेः । नचावतारेइच्छयाव्यक्तिसद्भावेन मूलरूपसाम्यं । प्रायशइतिकदाचिदिच्छायामपि व्यक्त्यभावोक्तेः । अतोनोक्तंयुक्तमिति । अत्रोच्यते । इतरदेवतावैलक्षण्यंतावदस्ति । केषांचिद्देवानांबहुशोगुणाव्यक्तिमंगी कृत्यमानुषभावांगीकारत् । उरूणांक्वचिद्बलवत्कारणेनमहाप्रयत्नपूर्वकं मूलरूपगतबलाद्यादानतएवावतारेव्यक्तिः । अत्रो त्तमानांशेषशक्रादीनांलक्ष्मणादिभावे स्वतएवाव्यक्तानां मूलरूपएवस्थितानां विशेषस्मरणरूपादानेनदैवबलंव्यक्तंभवति । तदुक्तंआदानतोव्यक्तिमायांत्युरूणामिति । यथा "सस्माररूपंनिजमेवलक्ष्मणः । चचालपृथ्वीसहमेरुमंदरा ससागरानैवचचा ललक्ष्मणः। सहस्रमूर्धास्यबतैकमूर्ध्नि धराखिलेयंनन्नुसर्षपायती"ति मूलरूपमाहात्म्यानुसारेणमाहात्म्यस्यादानतोव्यक्तिर्लक्ष्मण

स्योक्ता । अतएवावतारप्रसंगेसहस्रमूर्ध्नइति मूलरूपस्थितिवर्णनंकृतमितिज्ञेयं । एवमन्यत्रापिद्रष्टव्यं । भीमसेनादिरूपस्य वायोस्तुमूलरूपेविद्यमानंगुणजातंसमस्तमस्त्येव । इत्थमेववपुषेनिहितमितिस्पष्टमुक्तेः । अस्त्यत्रविशेषः । अवतारस्रूपेविद्यमानंसर्वंदैवंबलादिकंननित्यदाव्यक्तं । किंतुकचित्कचिदिच्छयाव्यक्तंभवति । तर्हीत्थमेवनिहितमितिकथमितिचेदुच्यते । भगवतिक्रियाणांशक्तिव्यक्त्यात्मनावस्थानंप्रमितं । तत्ररावणहननवनीतभक्षणादिक्रियाणां रामकृष्णादिरूपेषुव्यक्तिदशायां नव्यासकपिलादिरूपेषुव्यक्तिरित्येतावता नतेषांरूपाणांसाम्याभावः । किंतुक्रियाणांस्वरूपतःसत्त्वमात्रेणैवसाम्यं । तथाभीमादौदैवबलादेःस्वरूपतःसत्त्वमात्रेणसाम्यंयुज्यते । यत्तुधर्मभायाच्छादितत्वंनहुपेणवारितत्वमित्यादिकंतत्केवलमानुषबलविवक्षयेतिनदोषः । वायोस्तुकारणविशेषमपहाय इच्छामात्रेणमूलरूपगतसमग्रव्यक्तीकरणात् । नचयथाकथंचिदव्यक्तिमत्त्वात्साम्याभावइतिवाच्यं । अव्यक्तेःकादाचित्कत्वेनाल्पतया व्यक्तीकर्तुंशक्येप्यव्यक्तताकरणनिमित्तधर्माभिवृद्धिभगवत्प्रीतिसर्वदेवगतमुनींद्रतपःस्वीकारादिरूप महाप्रयोजनोद्देशेनबुद्धिपूर्वव्यक्तीकरणाभावादव्यक्त्यंगीकारेऽपि तद्विवक्षाभावात् । ननुतर्ह्यनावृतत्वे इच्छायाव्यक्त्युक्त्यनुपपत्तिः । नहिनित्यव्यक्तिःस्वेच्छापूर्वकव्यक्तिरित्युपपद्यतइतिचेन्न । भावानवबोधात् । नहिवयंपरमात्मनइव नित्यव्यक्तगुणत्वंब्रूमः । येनोक्तदोषः । किंतुमरुत्पतेर्मूलइवावताररूपेप्यपिकदाचित्स्वतएवगुणाव्यक्ताभवंति । अन्यदानस्वतोव्यक्ताः । तदापीच्छयाव्यज्यंते । प्रायशइत्यस्याप्ययमेवार्थः । इच्छाव्यक्तिःप्रायशः कदाचिदनिच्छायामपिव्यक्तिरितिवा क्वचिदिच्छाभावादव्यक्तिरितिवा क्वचित्किंचिदादानइतिवा । सर्वंचैतदुपपन्नं । "प्रदर्शयामासतथाऽसुर

णांमोहायैवाशक्तवच्छक्तरूपइतितत्रैव, पूर्णज्ञानौजसोस्ते गुरुतमवपुषोःश्रीमदानंदतीर्थ क्रीडामात्रंतदेतत्प्रमदद सुधियां मोहक द्वेषभाजां" इतिवायुस्तुतौच, पूर्णशक्तित्वेपिमोहनार्थमशक्तवत्तत्प्रदर्शनाद्युक्त्या स्वतोव्यक्तिप्रतीतेः दैवंबलंसुशक्तोपि नाविश्चक्रेसमारुतइति सर्वदेवमुनींद्राणांतपसआदानार्थंव्यक्तीकरणार्थमिच्छाभावेनाव्यक्तेरपिश्रुतत्वात्। तथाजरासंधहनन समये "क्रमशोबलंस्वंसमाददेमारुतनंदनोपि" इत्यादानेनव्यक्तत्वस्याप्युक्तत्वात्। तथाच स्वतोवा इच्छयावा किंचिदादा नतोवा समग्रव्यक्तिसद्भावात् इत्थमेवेत्याद्युक्तिरुपपद्यते । आवृतिमंगीकृत्येच्छाव्यक्त्यंगीकारात् कदाचित्प्रयोजनविशेषव शेनव्यक्त्यभावाच्च वैवक्षिकावृतत्वोक्तिरुपपद्यते। केचित्तु इच्छायामव्यक्तिःप्रायश्शब्दार्थइत्याहुः। तदनुपपन्नमितिभाति । यतस्तस्यापिकामस्यक्षणव्यवहितिर्भवेदितिक्षणमात्रव्यवहितसत्यकामत्वोक्तिविरोधात् । नचैतद्वाक्यंचतुर्मुखविषयं नवायु विषयमितिमंतव्यं । ब्रह्मवाय्वोरविशेषस्य अन्योन्यगुणदातृत्वात्समानौब्रह्ममारुतावित्यैतरेयभाष्याद्यनेकप्रमाणसिद्ध त्वात् । वायुत्वेकिंचिदूनतेत्यस्यभगवद्विषयकज्ञानपरत्वात् । क्रमेणवर्धमानमितिबहुवृद्ध्युक्तेःकथंज्ञानेकिंचिदूनतेति चेत् क्रमवृद्धेर्विशेषमात्रविषयकत्वेनापरोक्षाकारविषयकत्वेनचोभयोरपि गुणरूपादिधर्मविषयपरोक्षज्ञानसाम्येनतदपेक्ष यातन्निष्ठविशेषाणांकिंचित्त्वस्यविवक्षितत्वात् परोक्षापेक्षयाचकिंचिदूनताविवक्षितेतिनदोषः । ननु नहुषप्रश्ने "क्षिप्र मात्मविमोक्षणं । इच्छन्नपिनमोक्षाययत्नंचक्रेवृकोदर" इतीच्छायामपिप्रयत्नाभावनिमित्तकमोक्षाभावोक्तेः कथंक्षणमात्र व्यवहितसत्यकामत्वमितिचेन्न । तस्यतदानींक्षिप्रमोक्षेच्छैवश्रूयते नतुतस्मिन्नेवक्षणे । तथापि "कालतोभंगंस्वयमे

वैषयास्यति । आज्ञयावासुदेवस्य दार्ढ्यादेहस्यमेतथा । स्रस्तांगेपतितेसर्पे यास्यामीतिविचिंतयन्" इत्युत्तरग्रंथविरो
धात् । क्षिप्रमोक्षणंचयुधिष्ठिरागमनेजायतइतिनसत्यकामत्वहानिः । नचयुधिष्ठिरेण नहुषकृतप्रश्नोत्तरदानतः प्रसन्ने
ननहुषेणबंधमोचनंकृतमिति तत्रस्पष्टमुक्तत्वात्स्रस्तांगेपतितेसर्पइति चिंतनंभ्रमरूपमापन्नमितिवाच्यं । "सनहुषोथासी
त्स्रस्तभोगःशनैःशनै", रितिस्रस्तांगत्वसमयएव युधिष्ठिरागमनस्योक्तत्वेनाविरोधात् । ननुतथापिब्रह्मवाय्वोःसाम्यंकथं
युज्यते । द्विवारंभयमेवच । शोकोपितावानितिचतुर्मुखस्यद्विवारमेवशोकोक्तेः । "भीमोपिविह्वलतनुःसतुकिंचिदेवे"
त्युक्तेःप्रतिदिनकल्पमपिवायोर्भीमतायांविह्वलतायावक्तव्यत्वेनषट्त्रिंशत्सहस्रवारंविह्वलतापत्त्याशोकस्यापितावद्वारमंगीकार्य
त्वादितिचेन्मैवं । तन्नदेहमात्रगतोविह्वलतारूपोधर्मएवोच्यते । नतुतदानींशोकोत्पत्तिः । मध्यंदिनेसूर्यक्षोभइवशरीरे
दृढतराभिघातप्रयुक्त किंचिद्विकारविशेषमात्रोत्पत्तिपरत्वेनास्यवाक्यस्य शोकोत्पत्तिपरत्वानंगीकारात् । यत्रद्विवारंभ
योक्तिस्तत्रभयमात्रं नतन्निमित्तकंदुःखं । यत्रचशोकोऽभिधीयतेतत्रापिशोकवृत्तिजननमात्रं नतुतन्निमित्तकोनीचताविकार
इत्येवंयत्रयत्रयावच्छ्रूयतेतावदेवप्रतिपत्तव्यं । नत्वस्मदादाविवतत्तदविनाभूतःशोकादिर्नीचतादिर्वा । सर्वदोषविहीनत्वनियं
मात् । मनुष्यभावमापन्नत्वाद्देहमात्रस्यविह्वलतेतिसर्वमनवद्यं । अथवाब्रह्मवाय्वोःसर्वसाम्याभावः । नैतावन्मात्रेणकामिता
नवाप्तिर्वक्तुंयुक्ता । तथात्वेभगवत्कामनाविरुद्धकामवत्त्वरूपदोषप्रसक्तेः । भगवत्कामानुसारित्वप्राप्तेर्नियतत्वात् । तदेवंने
च्छायामप्यव्यक्तिर्युक्तेति । ननुतथापिनमूलरूपावताररूपयोःसाम्यं । "अतोभीमार्जुनौधर्मादत्युत्तमबलावपि । देवमायां

समाश्रित्यधर्मेणस्वापितौक्षणात् । मुहूर्तमात्रंसामायातयोराच्छादनक्षमे"तिबकप्रश्नेभीमस्यस्वावरधर्ममायाबद्धत्वोक्तेः । नच वाच्यंनासौमायाबद्धः किंतुबद्धवद्दर्शयामासेत्येवेति । तयोराच्छादनक्षमेत्याच्छादनक्षमत्वस्यस्पष्टोक्तेः । अपिचनहुषबलप्रतिबद्धत्वंचतस्योच्यमानमनुपपन्नमिति । अत्रोच्यते । भीमेहिद्विविधंबलं । मानुषशरीरत्वेनमानुषभावप्राप्त्यातच्छरीरोद्भवंमानुषबलं स्वरूपकृतंदैवंबलंचेति । उक्तंचतत्रैव "देवाअपिमनुष्येषुजाताःसुबलिनोपिहि । मानुषेणैवभावेनयुक्ताःस्युःकेशवादृते । अतोभीमार्जुनौधर्मेणस्वापिताविति, तन्मानुषेबलेतस्यवराद्वारितवत्स्थिते । दैवंबलंसुशक्तोपिनाविश्चक्रेसमारुतिः ।" इति । तथाचधर्ममायादिनामानुषबलस्यैवकिंचित्प्रतिबंधोनदैवबलस्य । अयमपिकिंचित्कालएव । अतएवमुहूर्ममात्रमित्युक्तं । "ततःप्रबुद्धयोर्धर्मोनैवशक्तिशतांशभाक्"इतिच । नहुषेणबद्धत्वंतुमानुषबलमादायबुद्धिपूर्वंबद्धवदवस्थानं । अतएवमानुषेबलेइति, वारितवदितिचोक्तं । शक्तोपीतिबहुशइति । नरस्वभाववृत्तिर्दैवबलानाविष्करणादिरूपंमूलरूपावताररूपयोर्वैषम्यमंगीक्रियतएव । अत्यल्पत्वात् । अतएव "ब्रह्मणात्वंशरूपेषुभारत्याज्ञानवर्जन"मिति भीमाद्यवतारेषुक्वचित्क्वचिद्भगवद्गुणादिगतविशेषापरोक्ष्यंनेत्यादिवैषम्यांगीकारविरोधोपिनिरस्तः । अत्यल्पवैषम्यस्याविरोधित्वादिति । ननुतथापि "जगामचानुमारुतिःसुसूक्ष्ममक्षिकोपमः । यदैनमेषबाधतेतदाविमोचयाम्यहं । यदिस्मशक्यतेस्यतुस्वमोचनायतद्वरंइति, व्रजत्यनुस्मतंमरुत्सुतेनिशाचर"इति यद्यालिंगितज्ञानोक्तिविरोधः । यद्यालिंगितज्ञानस्यसंशयरूपत्वात् । संशयस्यचमूलरूपेऽभावादितिचेन्न । यद्यपितुहिनसलिलमाल्यादिभिःसिक्तःसुग्रीवोविगतसकलयुद्धग्लानिःसन्कुंभकर्णात्स्वयमेवस्वात्मानंमोचयिष्यत्येवेतिश्रीहनूमा

न्निश्चित्यैव स्वीयस्यपरैरपहारेप्रसक्तेप्रच्छन्नवेषैरपरैस्तदीयैस्तन्मोचनायसहगंतव्यमितिनीतिप्रदर्शनार्थमेवसहगतवान् नतुसंशयपूर्वं । तथापिपश्यतांकलिमुख्यानांमोहनाय सतांविडंबनायच तादृशज्ञानाकारंदर्शयामासेतिकुतोविरोधः । यद्वा "जघान शूलेनपुनःसराक्षसः, अमोघशूलंप्रपतत्तदीक्ष्यरवेःसुतस्योपरिमारुतात्मजः । प्रगृह्यजानौप्रणिधायशीघ्रंबभंजतंप्रेक्ष्यननादचोच्चै"रित्युक्तेः यदाएषकुंभकर्णःएनंसुग्रीवंशूलेनबाधते तदाऽहंशूलभंजनेनैनंविमोचयामीतिप्रथमार्धार्थः । अतएवयदातदेत्यादिप्रयोगोनतुयदितर्हीति । द्वितीयार्धस्यतुकुंभकर्णेनगृहीतसुग्रीवविमोचनायनमयाप्रयतितव्यं । तुहिनसलिलमाल्यादिभिःश्रमपरिहारेसस्वात्मानंमोचयिष्यत्येवेत्यभिप्रायः । योजनातुअस्यस्वमोचनायशक्यतइतियत्तद्धरमिति । सुधायां"पंचरात्रनिषेधार्थसूत्राण्याचक्षतेयदी"त्यनुव्याख्याने यदीत्येतदनूद्ययदेतिव्याख्यातमिति प्रकृतेपितथाव्याख्यातमित्यदोषः । तथाचास्यग्रंथस्य निश्चयरूपभिन्नविषयज्ञानद्वयानुवादपरत्वा न्नानेनहनुमतःसंशयस्यशंकावकाशइति । केचित्तु अनालोचनदशायांहनुमतोयद्यालिंगितज्ञानमित्याहुः । अपरेतु यथानिश्चयरूपमपिसाक्षिज्ञानंसदोषंनिर्दोषंवा प्रमाणमप्रमाणंवा इतिमानससंशयप्राप्तयोःसदोषत्वप्रामाण्यकोट्योः अदोषत्वाप्रामाण्यकोट्योश्चतादर्थ्यमात्रं । सदोषंचेदप्रमाणमदोषंचेत्प्रमाणमितिगृह्णाति तथाएनमेषबाधते नवा हनुमान्मोचयिष्यतिनवा स्वमोचनायशक्यतेवानवा इतिलोकसंशयप्राप्तबाधविमोचनादीनांकोटीनांतादर्थ्यमात्रंविषयीकुर्वज्ज्ञानंयदैनमेषबाधतइत्यादिनानूद्यतइतिवर्णयंतीत्यलंप्रसक्तानुप्रसक्त्या । तदेवंमूलइवाशेषरूपेष्वपिसाम्योक्तिरुपपन्नेति

॥ १७५ ॥ ज्ञानेविशेषंदर्शयति ॥ कदाचिदिति ॥ क्वचिदिति । रूपविशेषेष्वित्यर्थः । तत्रापिकदाचिदित्यर्थः । इदंवायोरेव नब्रह्मणः । तस्यभूमावताराभावादित्याह ॥ ब्रह्मणइति ॥ तस्यापिगुणरूपक्रियादिगतव्याप्त्यादिधर्मविशेषेषु क्वचित्कदाचिद्दर्शनाभावोस्तीतिप्रसंगादाह ॥ विशेषादर्शनमिति ॥ ब्रह्मणइतिवर्तते । नचैवंमुक्तावपिमंतव्यमित्याशयवाननुव्याख्यानवचनंपठति ॥ मुक्तस्त्विति ॥ तदेतत्सर्वमुक्तमेकादशसप्तमतात्पर्यानुव्याख्यानादौ । तथाहि । "ब्रह्मणस्त्वंशरूपेषुभारत्याज्ञानवर्जनं । ब्रह्मगायत्रिभावेतुनांशावतरणंक्वचित् । शतजन्मगतायाश्चह्यापरोक्ष्योज्झितिर्भवेत् । क्वचित्क्वचित्सरस्वत्या

कदाचिद्वतारेषु ह्यापरोक्ष्योज्झितिःक्वचित् । ब्रह्मणोनावतारोस्ति विशे
षादर्शनंक्वचित् ॥ मुक्तस्तुसर्वदापश्ये त्सर्वगत्वेनचापितु ॥ १७६ ॥

अंशावतरणेष्वपी"तिएकादशतात्पर्येब्रह्मणोभारत्याश्चअंशरूपेषु भूमाववतीर्णभीमकाल्यादिक्वचिद्रूपविशेषेषु अपरोक्षज्ञानवर्जनं मोहोज्ञानस्यभण्यतइतिपूर्वेणान्वयः । यथावायोरवताररूपेषुभारत्यामूलरूपेअवताररूपेषुच प्राप्तस्यापिभगवद्रूपविषयकापरोक्षज्ञानस्य कदाचिदपिकेषुचिद्भगवद्रूपेष्वेवतिरोधानंभवति नपरोक्षज्ञानस्य "पारोक्ष्यात्पूर्णज्ञानंसदैवे"तितत्रैवोक्तेर्नसर्वदा नापिसर्वभगवद्रूपेषु । "करतलेखलुकंदुकवत्सदा, अरिधरेणसमंस्फुरितंगुरो"रितिश्रीमदाचार्यावतारेभगवद्रूपापरोक्षज्ञानस्य सदासत्त्वोक्तेः । अत्रब्रह्मपदंनचतुर्मुखपरमितिभ्रमितव्यं । तस्यावताराभावात् । किंतुवायुपरमेतत् । तस्यांशसंभवात् ।

एवंभारतीवायुपत्नीत्याशयेनाह ॥ ब्रह्मेति ॥ अत्रब्रह्मणोभारत्याश्चसर्वांशेषुज्ञानतिरोधानविषयेसाम्यं । मूलरूपेषुविशेषोस्तीत्याह ॥ शतजन्मगतायाइति ॥ भारत्याःअपरोक्षज्ञानानंतरं शतजन्म महाकल्पीयजन्म गतायामूलरूपिण्याअपिक्वचित्काले क्वचिद्रूपविशेषेषुआपरोक्ष्योज्झितिर्भवेदित्यर्थः। अंशरूपेषुभारत्याज्ञानवर्जनमित्युक्तमेवप्रसंगात्पुनराह ॥ अंशावतरणेप्यपीति ॥ यद्वाद्वितीययोजनानुसारेणअंशरूपेष्वित्यस्यपूर्वत्रैवसंबद्धत्वेनभारत्याज्ञानवर्जनमितिसामान्यमेवप्रतिभाति । नतुमूलरूपेअवताररूपइतिविशेषोज्ञायते । अतउभयत्रापीत्याह ॥ शतजन्मेति ॥ अंशावतारेष्वितिचेतिदुर्योज्यत्वात्प्रमाणवाक्यार्थोत्रविवृतः । अधिकांशोदाहरणंतुसरस्वत्याअपिब्रह्मप्रकरणे प्रायःप्राप्तत्वेनतद्विवरणार्थमितिज्ञेयं । विशेषादर्शनमित्यत्रतु "नतुसर्वे

ब्रह्मानिरभिमानत्वा च्छरीर्यन्यशरीरवान् । वृद्धिह्रासौनयस्मात्त देहस्यान्नादिनागतः ॥ १७७ ॥

षुकालेषुतथापश्यत्यमुक्तिगः । मुक्तस्त्विव"त्यनुव्याख्यानेब्रह्मणोप्यवस्थाभेदेनविशेषउच्यते । नतुसर्वेष्विति । तथासर्वगतत्वेनेत्यादिसुधायां तथा चतुर्मुखत्वादिसंसारित्वावस्थायांनसर्वगतत्वादिविशेषादर्शनंक्वचिद्युज्यते । ब्रह्मणस्त्वंशरूपेष्वित्यत्रसूचितो ज्ञानविरोधाभावस्तुगुणरूपादिधर्मविषयेबहुशोविशेषेषुचप्रायःसर्वदासत्त्वेनाविरोधइति ॥ १७६ ॥ अशरीरप्रायत्वाज्जनमानुषादिरूपेषुवैषम्यमित्याशयेनैकादशसप्तमतात्पर्यवचनंपठति ॥ ( इतरदेववैलक्षण्यंस्पष्टमेकादशतात्पर्यवचनेनदर्शयति ॥ ) ब्रह्मेति ॥ प्रसंगादमृतत्वंतस्योपपादयति ॥ वृद्धीति ॥ अन्नादिना अन्नादिभावेनतदभावेनचेत्यर्थः । अतोऽमृतइतियोज्यं

॥ १७७ ॥ प्रकारांतरेणतदुपपादयति ॥ अतिरोहितेति ॥ उक्तंचईशावास्यभाष्ये "अतिरोहितविज्ञानाद्वायुरप्यमृतःस्मृत" इति । बृहद्भाष्येच "अमृतोवायुरुदिष्टोनित्यज्ञानात्मकत्वत"इति । ननुसुषुप्तिसंस्थान्ब्रह्मादिकानितिवायोःप्रलयकालेसुषुप्ति श्रवणात्कथमतिरोहितज्ञानंतस्येत्यतःप्रलयेपिज्ञानतिरोधानाभावपरमनुव्याख्यानवाक्यंपठति ॥ एवमिति ॥ सुषुप्तिसंस्थानि तिकथंतर्हिसुषुप्त्युक्तिरितिचेत् ब्रह्मादिकानित्यत्रतद्गुणसंविज्ञानोबहुव्रीहिरित्याहुः । अस्मिन्पक्षे "सुप्तास्तत्रयतोजीवाब्रह्मरुद्रपुर स्सरा"इतिऐतरेयभाष्यंकथमितिचिंत्यं । तत्ररुद्रस्यापिस्वपदेनग्रहणात्तत्राप्यतद्गुणत्वोक्तौ तस्यापिसुप्त्यभावप्रसक्तेः । अपरे तुब्रह्मशब्दस्यबृहस्पतिरर्थइत्याहुस्तदपिचिंत्यमेव । एकेतुवायोर्ज्ञानतिरोधानाभावमंगीकृत्यजगद्विषयव्यापारभावएवसुप्तिः ।

अतिरोहितविज्ञाना(दप्ययंह्य)द्वायुरप्यमृतःस्मृतः । एवंप्रलयकालेपि प्रतिभातपरावरः ॥ १७८ ॥

हरिभ(क्त्येक)क्त्यैवसंतृप्तो मोक्षादीच्छाविवर्जितः । अच्छिन्नभगवद्धर्मा काम्यकर्मविवर्जितः ॥१७९॥

अतोनवाक्यद्वयविरोधइतिमन्यंते । इतरेतुब्रह्मशब्देनविरिंचवायुव्यतिरिक्ताऋजवोऽभिधीयंतइति । सांप्रदायिकास्तु प्रलय कालेप्रायेणाशेषजगद्विषयज्ञानतिरोधानाभावः । किंतुप्रलयकालावसानेयदाहरिःस्वोदरस्थानशेषान्पश्यति तस्मिन्क्षणेऽत्य ल्पतमकालएवतिरोधानेनसुप्तिः । अतोनविरोधइतिसंगिरंते । तथाप्यतिरोहितविज्ञानत्वंभग्नं । ईषदपितिरोधानांगीकारा दितिनवाच्यं । स्वरूपज्ञानस्यजगद्विषयस्यनित्यव्यक्तत्वेनतत्रातिरोधानाभावात् । वृत्तिज्ञानेपीषत्तिरोधानस्याल्पतयाऽविवक्षो पपत्तेरिति ॥ १७८ ॥ पुनरपिवायोर्माहात्म्यंदर्शयति ॥ हरीति ॥ "प्रवर्धतांभक्तिरलंक्षणेक्षण"इत्यादिनिर्णयादिग्रंथेषुस्पष्ट

मेतत् । मोक्षादीच्छाविवर्जितइति । "मुक्तिप्रदानात्प्रतिकर्तृतामेसर्वस्ये"तिनिर्णयेस्पष्टमेतत् । चर्चातुप्रागेवदेवप्रकरणेप्रसंगात्कृता । अच्छिन्नधर्मत्वादिकंनिर्णयेद्रष्टव्यं ॥ १७९ ॥ **समस्तगुणभोक्तृत्वादिति** ॥ "भोगाश्चयेयानिचकर्मजातान्यनाद्यनंतानिममेहसंति । मदाज्ञयातान्यखिलानिसंतिधातुःपदेतत्सहभोगनामे"तिगुणशब्दोदिताखिलशुभभोग्यभोक्तृत्वोक्तेर्भोगस्य चानंदप्रयोजकत्वान्निस्सीमानंदत्वमुपपन्नमितिभावः ॥ १८० ॥ अभ्यधिकाइति ॥ सुपर्णाद्यपेक्षयातत्सजातीयगुणानाम

**सर्वज्ञानोपदेष्टाच मोक्षदाताखिलस्यच । समस्तगुणभोक्तृत्वा त्पूर्णानंदतरःस्मृतः ॥ १८० ॥**

**सुपर्णशेषशक्रादि देवेभ्योप्यधिकागुणाः । सुपर्णादिभिरज्ञाता स्तदभीमानवर्जिताः ॥ १८१ ॥**

**ब्रह्मणस्तुपुनःसंति तेषांकर्ताजनार्दनः । तस्मात्सर्वाधिकोब्रह्मा गुणैःसर्वैर्नसंशयः ॥ १८२ ॥**

**वायुर्हिब्रह्मतामेति तस्माद्ब्रह्मैवसस्मृतः । प्रायेणैवंहिविज्ञेया भारतीतत्प्रसादतः ॥ १८३ ॥**

## इतिसत्तत्वरत्नमालायांचतुर्मुखप्रकरणं ॥ ७ ॥

युताधिक्यं । विजातीयगुणानामनंताधिक्यं । तथासजातीयगुणगतांशवैचित्र्यस्फुटतानामप्यानंत्येनाधिकत्वमितिज्ञेयं । उपपादितमेतद्देवताप्रकरणे । उपसंहरति ॥ तस्मादिति ॥ १८१ ॥ १८२ ॥ क्वचिद्ब्रह्मणःक्वचिद्वायोश्चग्रहणेऽभिप्रायमाह ॥ **वायुर्हीति** ॥ उक्तंचतृतीयतात्पर्ये "नियमाद्वायुरेवैकोब्रह्मत्वंयातिनापरः । तस्मात्समानताभुक्तौवायुत्वेकिंचिदूनते"ति ।

तथाचपूर्ववायोरेवपश्चाद्ब्रह्मत्वेनोभयनाम्नाप्युभयोर्ग्रहणमितिभावः । प्रोक्तमाहात्म्यंसरस्वतीभारत्योरप्यतिदिशति ॥ प्राये णेति ॥ भारतीपदेनोभयोर्ग्रहणं । ब्रह्मवायुसममाहात्म्याभावाभिप्रायेणप्रायइत्युक्तं । तत्प्रसादतःब्रह्मवाय्वोःप्रसादतः ॥ १८३ ॥ इतिसत्तत्वरत्नमालाव्याख्यायांचतुर्मुखप्रकरणं ॥ ७ ॥

अथेदानींमहालक्ष्मीमाहात्म्यंसंग्रहेणनिरूप्यते ॥ ततइत्यादिना ॥ गुणशब्दोगणनार्थः । ततोविरिंचापेक्षयाकोटिसंख्याताधिकतयागुणितैरानंदादिभिरनंतगुणैःपरिपूर्णामहालक्ष्मीरितिभावः । तदुक्तंबृहद्भाष्ये "हिरण्यगर्भायेऽतीतायेभाव्यायश्चवर्तते । एतेभ्यःश्रीस्तुमुक्तेभ्योगुणैःकोटिगुणोत्तरा । ज्ञानानंदबलादिभ्यःसर्वेभ्यःसर्वदैवत्वि"त्यादिना । अत्रोक्तंकोटिगुणाधि

ततःकोटिगुणश्रेष्ठा ज्ञानेऽनंतगुणाधिका । सर्वदेवगणाचिंत्य गुणपूर्णासदारमा ॥ १८४ ॥

कत्वंसजातीयानंदादिगुणगतसंख्यापरिमाणविषयंमंतव्यं । वस्तुतस्त्वानंदादिगुणगतांशवैचित्र्योत्कर्षस्फुटतादिविशेषाणांविजातीयगुणानामप्यधिकानामनंतानांभावात् । तदेतद्देवताप्रकरणेव्युत्पादितरीत्यात्राप्यनुसंधेयं । ज्ञानविषयेत्वपवादमाह ॥ ज्ञानेनंतगुणाधिकेति ॥ सजातीयज्ञानसंख्यादिविषयेप्यनंतगुणाधिकेत्यर्थः । प्रागुक्तंकोटिगुणोत्तमत्वंतुसजातीयानंदादिगुणविषयमेव नज्ञानविषयं । "सर्वत्रसर्वदैवेशंपश्यत्येवरमापितु"इत्यादि ज्ञानपादीयानुभाष्येऽभिधाय "उमायावदनंतांशान्पूर्वदृष्टेभ्यएवतु । विशेषान्वासुदेवस्यपश्चादुक्ताविचक्षत"इत्युमापर्यंतंरमाब्रह्मादीनांप्रागुक्तसजातीयज्ञानविषयएवस्वस्वनीचापेक्षया

नंतगुणाधिकत्वोक्तेः । ननु "विष्णोःप्रियत्वेतद्भक्तौतज्ज्ञानेपिश्रियस्तुते । मुक्ताअप्यवरानित्यंसर्वैकोटिगुणेनत्वि" तिपृथग्ज्ञानमप्यनूद्यविरिंचस्यज्ञानेपिकोटिगुणावरत्वोक्तेस्तद्विरोधइतिचेन्न । गुणांतरैःसहज्ञानस्याप्यनुवादेनास्यसामान्य प्रकरणत्वात् । अनुव्याख्यानस्यज्ञानमात्रविशेषविषयत्वेनापवादरूपत्वात् । अंगीकार्यंचैवं । "तेभ्यश्शतगुणा वराः । विष्णुभक्तौचतत्प्रीतौज्ञानानंदादिकेष्वपि । मुक्तेःपश्चादपिगुणैस्सर्वैर्ब्रह्मभ्यईरिता" इतिब्रह्मणःसरस्वतीभा रत्योःशतगुणावरत्वस्य, तथा "जैगीषव्यादिरूपकाः । पूर्वोक्तैःस्वगुणैःसर्वे ताभ्यश्शतगुणावरा" इतिशिवादीनां वाणी भ्यःशतावरत्वादेर्बृहद्भाष्योक्तत्वेपि यथाउमायावदितिवाक्यबलेन, "अनंताश्चगुणास्तेषामन्यजीवव्यपेक्षया । तेना ध्यर्धगुणायस्मात्सर्वस्माद्देवतागणा"दितिबृहद्भाष्यवाक्यपर्यालोचनया, "तस्मादमितनामाना वपितौमितनामवत् । श्रीश्चवायुश्चविष्णुस्तु मुख्योक्तेरमिताभिध"इत्याद्यैतरेयवाक्यबलेन, "त्यच्चानिरुक्तंविज्ञानं तथानिलयनंमहान् । सत्यंप्राण स्तथाश्रीश्चे"त्यादितैत्तिरीयभाष्यैकादशतात्पर्यादिवहुग्रंथसामर्थ्याच्च रुद्राद्यपेक्षयासरस्वत्यास्तदपेक्षयावायुविरिंचयोर्विजाती यानंतगुणाधिकत्वंसजातीयज्ञानानंत्यंचाधिकमंगीक्रियते तथाप्रकृतेपि "श्रियोधिकागुणास्सर्वे सर्वेभ्योनियमेनतु । उक्ताश्चैवाप्यनुक्ताश्चे"ति तृतीयतात्पर्योक्तेः । "चिद्रूपासाप्यनंताचअनादिनिधनापरा । अनंतब्रह्मरुद्रादेर्नास्याःशक्तिकला पिहि । तेषांदुरत्ययाप्येषेति, सूक्ष्मत्वादप्रसिद्धत्वाद्गुणबाहुल्यतस्तथा । अनिर्देश्यौतथाऽव्यक्ता वचिंत्यौश्रीश्चमाधव"इत्यादि गीतातात्पर्ये, अप्रतर्क्यादनिर्देश्या दितिकेष्वपिनिश्चय"इत्यादिगीताभाष्यादावनिर्देश्याचिंत्यानंतगुणसद्भावप्रतीतेश्च, सम

नेतिसूत्रे परिमाणलक्षणगुणविषये कोटिगुणत्वोत्केरपवादस्य प्रमितत्वाच्च मुक्त्यनंतरंब्रह्मणोज्ञानाभिवृद्धेरभावाद्रमायाः प्रतिक्षणमपि यावत्कालंज्ञानाभिवृद्धिरस्तीतिवक्ष्यमाणत्वाच्च, जीवत्वदुःखस्पृष्टत्वाणुचेतनत्वादिना समानेभ्यःसुपर्णादिभ्यो पिविरिंचादावनंतगुणाधिकत्वस्यप्रमितत्वेन, अनादितोपिदुःखास्पृष्टत्वव्याप्तत्वनित्यमुक्तत्वाद्यतिवैलक्षण्योपेततया भगवत्स मायाभगवदनंतरूपेष्वुनित्याऽवियोगिन्याःपरमोच्चनिजस्वभावानंतगुणगणपरिपूर्णत्वेन महच्चमाहात्म्यंतस्यावेदेषूच्यतइति गी ताभाष्यादौप्रमितताया, वेदानुक्तमाहात्म्योपेतत्वेन महद्ब्रह्मानिरुक्तादिशब्दप्रतिपाद्यायाः सर्वकालगताशेषप्रपंचस्यापि मंद कटाक्षमात्रात्सर्गस्थितिप्रलयसंसृतिमोक्षहेतोर्महालक्ष्म्याः किमुततोप्यनंतगुणाधिकत्वमिति कैमुत्यन्यायसिद्धत्वाच्चानवश्यमं

यज्ज्ञानाव्याकृताकाशे विश्वंभातिपराणुवत् । क्षणस्यानंतभागाना मेकांशस्यांशके(पि)नच्च ॥ १८५ ॥

गीकर्तव्यंविजातीयानंतगुणाधिकत्वं सजातीयज्ञानानंदाधिक्यंचेति । तदेतदाह ॥ सर्वदेवेति ॥ तच्चोक्तमचिंत्याश्रीरिति द्वादशस्तोत्रे ॥ १८४ ॥ उक्तंज्ञानानंत्यमेवविशदयति ॥ यज्ज्ञानेति ॥ तच्च "यात्रापात्रंपयोधाविवलयसमये' इत्याद्युक्त्वा, 'यज्ज्ञानेभातिकृत्स्नंजगदतिविशदे' इतिविष्णुस्तुतावनंताव्याकृताकाशव्यापिप्रलयार्णवगतनौकादृष्टांतेनरमाज्ञानस्यातिमहा नंत्यं तदितरब्रह्मादिप्रपंचस्यात्यल्पतमत्वंचोपपादितं । प्रलयार्णवस्यानंताव्याकृताकाशव्यापित्वंच "प्रकृतिर्ह्युदरूपेण सर्व मावृत्यतिष्ठति । अप्रकेतंसलिलंसर्वमाइदं" इत्याद्यनेकप्रमाणसिद्धं । किंचप्रतिक्षणंसंवर्धमानमहाज्ञानवारिधेर्महालक्ष्म्यायुक्त

मितरापेक्षयाऽपरिमितगुणगणार्णवत्वमित्याशयेन ज्ञानाभिवृद्धिमुपपादयति ॥ क्षणस्येत्यादिना ॥ क्षणादिकालांशस्य "अपर्यवसितिश्चाणोर्दृश्यतेसाक्षिणाद्वयो"रित्यनुव्याख्यानबलेनसूक्ष्मसूक्ष्मतराद्यपर्यवसितानंतांशोपेतत्वमुपपादितंपुरस्तात् द्रष्टुं शक्तापीत्यनेन "युगपदगणितानीक्षितुंदक्षिणाक्षी"त्यादिसूचयति ॥ १८५–१८७ ॥ तथापीति ॥ प्रतिक्षणमपियुगपदनेकदर्शनेपीत्यर्थः ॥ १८८ ॥ नजानातीत्युक्त्याप्राप्तांमंदाशंकांनिवारयत्यनुव्याख्यानवचनेन ॥ सर्वत्रेति ॥ अयमर्थः

विष्णोर्गुणाननंतांश्चद्रष्टुंशक्तापिसास्फुटं । क्षणेक्षणेनवनववस्तुविशेषोपलंभतः ॥ १८६ ॥
तत्तत्कालेगाहमानाकौतूहलमहार्णवे । परमानंदसंदोहसांद्राध्यायतिसापुनः ॥ १८७ ॥
पुनराश्चर्यसंयुक्तापुनरद्भुतदर्शनात् । विष्णोर्गुणांशलेशंवानजानातितथापितु ॥ १८८ ॥
सर्वत्रसर्वदैवेशंपश्यत्येवरमापितु । नतुसर्वविशेषैस्तंपश्यंत्यप्यन्यतोऽधिकं ॥ १८९ ॥

सर्वदेशेसर्वकालेचईशं अनंतरूपगुणक्रियाद्युपेतं परंब्रह्मरमापश्यत्येव । तर्हिज्ञानेकिंभगवत्समेतिपृच्छति ॥ अपित्विति ॥ उत्तरमाह ॥ नत्विति ॥ अन्यतोज्ञानिवर्गादधिकंपश्यंत्यपि सर्वैर्विशेषैर्युक्तंतंनैवपश्यतीत्यादि । अत्रैकेचोदयंति । नमहालक्ष्म्याःप्रतिक्षणंज्ञानाभिवृद्धिरंगीकर्तुमुचिता।साधकाभावाद्बाधकसद्भावाच्च । तथाहि । नतावद्रमायाज्ञानाभिवृद्धौसाधकमानंपश्यामः । नचवाच्यंजानंत्याऽपिदेव्या लोकानुग्रहार्थंविशेषज्ञानार्थंच पृष्टआहेत्यैतरेयभाष्यंमानमिति । तस्माज्ज्ञलोका

नुग्रहार्थं ज्ञानिलोकस्यविशेषज्ञानार्थंचे त्यर्थतयासावकाशत्वेन देव्याविशेषज्ञानार्थंगित्यभिप्रायकत्वाभावात् । नापि "श्रियो पिच । ज्ञानस्फूर्ति"रितीशावास्यभाष्यवचनंज्ञापकं । यथायोगंक्रियाध्याहारइतिटीकाबलेन श्रियस्तुसर्वदाविद्यतइत्यर्थक त्वात् । प्रत्युततस्यज्ञानाभिवृद्ध्यभावज्ञापकत्वात् । नवनवसुविशेषोपलंभेनेतिविष्णुस्तुतिवचनस्यापि रमायाभवद्गुणेष्वाद रातिशयवशेन "यद्यप्यसौपार्श्वगतोरहोगत स्तासांतथाप्यंघ्रियुगंनवंनव"मित्युक्तन्यायेन पूर्वावगतगुणेष्वेव नवनवतया विषयीकरणाभिप्रायकत्वात् । स्पष्टज्ञापकांतराभावाच्च । अपिच पूर्वानवगतविशेषज्ञानव्यक्त्यंगीकारे "अशेषोरुविशेषाणा मतिस्पष्टतयादृशिः । नित्यमेकप्रकाराच नारायणमतिःपरा । सूर्यप्रभावदखिलं भासयंतीनिरंतरा । निर्लेपावीतदोषाच नित्यमेवाविकारिणी"इत्यनुव्याख्याने नारायणमतेर्नित्यमेकप्रकारत्वाद्युक्त्वा, "विशेषांस्तद्गतांस्त्यक्त्वा प्रायस्तल्लक्षणाश्रियः । तथैवस्पष्टताऽभावात्तत्तंत्रत्वंचकेवल"मितितदेकप्रकारत्वादिकं रमामतावतिदिश्यते । सोनुपपन्नःस्यात् । तेनज्ञायतेरमाज्ञा नस्यनास्त्यभिवृद्धिरिति । नचप्रायःशब्देनैकप्रकारकत्वंव्यावर्त्यतइतिवाच्यं । प्रायइत्यस्यतात्पर्यमाह । तथैवेतीत्यादिसुधात स्तादृक्स्पष्टतादेरेवप्रायःशब्दव्यावर्त्यतावगमात् । अपिच अवृद्धिह्रासरूपत्वंमुक्तानांप्रायिकंभवेदितिभाष्ये मुक्तमात्रस्यवृद्धि ह्रासाभावोक्तेः रमायाअपिमुक्तत्वेनवृद्ध्यंगीकारेतद्विरोधःस्यात् । किंचयोगप्रभावलब्धातिशयंहि योगिज्ञानं । यदिरमा ज्ञानस्याप्यतिशयलाभोंगीक्रियते तर्हितत्रातिव्याप्तंतल्लक्षणंस्यात् । अपिचरमायाज्ञानाभिवृद्ध्यंगीकारेअधिकारित्वापत्त्या इयदामननादित्यादिष्वधिकारिणां प्राणावसानमात्रत्वकथनमयुक्तंस्यात् । तदुक्तममहालक्ष्म्यवसानत्वस्यैववक्तव्यत्वात् ।

किंचज्ञानाभिवृद्धेःसाधनरूपत्वेन तत्साध्यानंदादिवृद्धिरप्यंगीकार्यास्यात् । नहिभगवद्विषयेसंपादितंज्ञानं निष्फलमितियुक्तं । 'तंयथायथोपासते'इत्यादिविरोधात् । नचैतन्मुक्तोपासनवत्फलरूपमेव नसाधनरूपमितिवाच्यं । तेषामधिकार्जनाभावात् । अत्रतुतदंगीकारात् । आनंदादिवृद्ध्यंगीकारेच तस्याःकालभेदेनबहुतारतम्यापातेनानेकविप्लवापत्तेः । तस्मान्नरमायाज्ञानाभिवृद्धिरंगीकर्तुमुचितेति । अत्रोच्यते । मानाभावस्तावदसिद्धः । जानंत्याअपिदेव्याइत्यस्यैवोक्तार्थेस्पष्टप्रमाणत्वात् । यदत्रोक्तं ज्ञानिलोकस्यविशेषज्ञानार्थमितिसावकाशतेति तत्तुच्छं । देव्याविशेषज्ञानार्थंपृष्टइति समभिव्याहारबलेनैव पितुर्धनमित्यादिवत्स्वस्यविशेषज्ञानार्थमित्येव स्फुरणेनप्रतीतोल्लंघनस्यानुचितत्वात् । अन्यथालोकानुग्रहार्थमित्यनेनैव ज्ञान्यज्ञानिलोकयोरपूर्वज्ञानोत्पादलक्षणानुग्रहार्थमित्यर्थलाभेन विशेषज्ञानार्थमित्यस्यैववैयर्थ्यापत्तेः । 'श्रियोपिच । ज्ञानस्फूर्ति'रितीशावास्यवाक्यंचनिरवकाशप्रमाणं । नचतट्टीकाविरोधः । ब्रह्मादीनामागंतुकलाभइव नास्याःश्रियः । किंतुसर्वत्रसर्वदेवेशं सकलगुणरूपक्रियाद्युपेतंपश्यंत्याअपिरमाया ज्ञातगुणादिगतविशेषेष्वेवसर्वदाज्ञानातिशयोविद्यत इत्यभिप्रायकत्वात् । अतएवतद्विवरणंकृतं ज्ञानस्फूर्तिर्ज्ञातव्यार्थप्रतिभासर्वदाविद्यतइति । ब्रह्मादीनांतु "शतजन्मसुपूर्वंतु ज्ञानोदयउदीर्यत"इतिगुणरूपादिधर्मिविषयकागंतुकापरोक्षज्ञानाभ्युपगमेन वैलक्षण्याद्यथायोगंक्रियाध्याहारइत्युक्तमिति । "लक्ष्मीरक्षीणदीक्षे"त्यादिकंविष्णुस्तुतिवचनंतु लक्ष्म्याज्ञानाभिवृद्धिसद्भावेस्पष्टतरंज्ञापकं । यदस्यान्यथाकरणंतदतीवानुपपन्नं । भागवतेपूर्वोत्तरप्रकरणपर्यालोचनयाकृष्णमहिषीणां कृष्णस्यकुरुदेशादिगमनेपितत्साक्षात्कारोयद्यपिविद्यते तथापितदागमनेहर्षादादरातिशयान्नित्यसि

द्धमपि दर्शनंनवनवमिवेत्यर्थएववक्तव्यइतिनिश्चीयते । नचात्रतथात्वेज्ञातुंबद्धदीक्षत्वानुपपत्तिः । रमाज्ञानस्यनित्यत्वेन ज्ञात विषयेदीक्षासंभवात् । किंचानुपक्रांतसंवित्संततंपश्यंतीत्युक्त्वा सिद्धेसत्यारंभोनियमार्थइतिन्यायेन पुनरुपलंभपदेनापूर्वज्ञान लाभमभिधाय नवनवसुविशेषादिपदप्रक्षेपेणतदुपपादनंक्रियते । अन्यथासुविशेषादिपदानां प्रतिक्षणमाश्चर्यमग्नताव्युत्पादन स्याद्याप्यंतंनपश्यतीत्युक्तेश्च नह्युपपत्तिःसंभवति । नह्यपूर्वदर्शनाभावेआश्चर्याद्युपपद्यते । अतोविशेषज्ञानलाभार्थकत्वमेवो ररीकरणीयं । अन्यथा आधुनिकग्रंथस्ययथाप्रतीतोर्थोग्राह्यइति वृद्धप्रसिद्धिविरोधश्चस्यात् । यदुक्तंनित्यमेकप्रकारेत्यनुव्या ख्यानविरोधइति । नतद्युक्तं । नित्यमेकप्रकारेत्यनेनगुणत्रयाबद्धताव्युत्पादनायोत्पत्तिविनाशरूपान्यथाकाराभावस्यैवव्यु त्पादनात् । यथोक्तंसुधायां नित्यमेकप्रकारेत्युत्पत्तिविनाशरहितेति । अयमपिगुणातीतत्वेहेतुरिति । नचात्रनित्यमेवावि कारिणीत्यविकारित्वोक्तेर्वृद्ध्यंगीकारे सैवविकारइति तद्विरोधइतिवाच्यं । एतद्वाक्यस्यापियथास्मदादीनांतत्तद्विषयकज्ञाने मनस्यागंतुकविक्रियोत्पत्तिः यथावास्वरूपेभिन्नाभिन्नविक्रियाविशेषप्राप्तिर्नैवमित्यभिप्रायकत्वेननिरस्तः । कुड्यादिप्रतिबंधकनि रासे तत्तदर्थविषयीकारिसूर्यप्रभादीश्वरेच्छारूपावरणनिवृत्तावधिकविशेषविषयकत्वांगीकारेपि विक्रियानंगीकारात् । तथाह्यु क्तंसुधायां "किंतेषुतेषुपदार्थेषुज्ञातेषुविक्रियते नेत्याह॥ नित्यमविकारिण्येवेति॥ कथंतर्हितत्तद्विषयीकरणमित्यतउक्तंसूर्येति । यथासूर्यप्रभानिर्विकारापितांस्तान्प्राप्तान्विषयान्विषयीकरोतितथेयमपीत्यर्थः । अत्रविशेषएवनिर्वाहक"इति । भगवज्ज्ञानप रत्वेप्यस्य रमामतावप्यतिदेशादित्थमुक्तिरितिध्येयं । यच्च वृद्धिह्रासरूपत्वमितिवाक्यमुदाहृतं तन्मुक्तजीवपरं । अन्यथा

तदुत्तरग्रंथविरोधइति नतद्बाधोपि । यच्च किंचेत्यादिनारमायाज्ञानाभिवृद्ध्यंगीकारेयोगिज्ञानलक्षणस्यात्रातिव्याप्तिरित्युक्तं तदपिमंदं । तत्रागंतुकनिवर्तककर्मध्यानादियोगाभिवृद्धिक्रमेणा गंतुकगुणरूपादिविषयकज्ञानस्यक्रमेणाभिवृद्धेर्लक्षणतयाभिप्रेतत्वात् । रमायास्त्वनादिसिद्धभगवदनुग्रहादेवानाद्यवगतगुणरूपादिनिष्ठविशेषविषयकापरोक्षज्ञानाभिवृद्धेर्विवक्षितत्वात् । तादृशानुग्रहश्च "वायुंहरेःसुतंज्ञात्वा नाहंपुत्रतयारुदं। अनादिकालसंबंधादित्युवाचवरारमे"त्युक्तन्यायेनानाद्युपासनालब्धइति नकश्चित्क्षुद्रोपद्रवः । यदप्युक्तमियदामननादितिसूत्रेअधिकारिणांप्राणावसानत्वोक्तिविरोधइति तदपिन । मुक्तियोग्यानामेव तत्रतारतम्योक्तेः । रमायास्तुनित्यमुक्तत्वादेवानुक्तेः । तर्हिभगवतःप्राणोत्तमतासिद्ध्यर्थं व्यतिहारोविशिंषंतिहीतरवदित्यत्राध्याहारोक्तिविरोधइतिनवाच्यं । तस्यानधिकारित्वेप्यधिकारिणां मुक्तिप्रदातृतयावैशिष्ट्यज्ञापनायाध्याहारोक्तेः । तदुक्तंभाष्ये "नामादयस्तुबद्धत्वा न्मोचकत्वात्परोपिच । उभयोरप्यभावेन यथाव्यक्तंनतूदित"मिति । यच्चमहालक्ष्म्याज्ञानाभिवृद्ध्यंगीकारे तत्साध्यानंदादिगुणाभिवृद्धेरप्यंगीकार्यतेति तत्सत्यं । परंतुप्रतिक्षणमभिवर्धमानज्ञानस्यसर्वस्य फलभूतंयावदानंदादिगुणजातं तावतःसर्वस्याप्यनादिकालादारभ्यसत्त्वमंगीक्रियते । नचसाध्यस्यपूर्वभावित्वंसाधनस्यपश्चाद्भावित्वमितिनयुक्तंव्याहतेरितिवाच्यं । यथा "यतोऽवराणांसर्वेषां गुणाःसर्वाःक्रियाअपि । नियमेनैवपूर्वेषां सुप्रसादनिबंधनाः । मोक्षोज्ञानंचक्रमशो मुक्तिगोभोगएवच । उत्तरेषांप्रसादेन नीचानांनान्यथाभवेत्"इत्यादिप्रमाणबलेन यावत्स्वोत्तमानुग्रहेणैव मोक्षस्तमंतरामोक्षाभाव इत्यवगमात्केषांचिन्मध्यमाद्यधिकारिणां बहुकालव्यवधानेनोत्तरत्रमुच्यमानानामिदानीमपि विशिष्ट

ज्ञानोदयाभावेन स्वावरयोग्यजीवेष्वनुग्रहकरणासंभवात्तेषांचकेषांचिदवराणां ज्ञानपूर्त्यापूर्वमेवमोक्षावश्यंभावादेष्यंतंस्वोत्तमानुग्रहंनिमित्तीकृत्य पूर्वमेवमोक्षंददातीश्वरइत्यवश्यमंगीकार्यमितिहिनिश्चितं । तत्रयथाकारणस्यपश्चाद्भावित्वेपीशाचिंत्यशक्तिवशान्नव्याहतिः । यथावा रमायावायुजनक दिङ्नामकभगवद्बाह्वाद्युपास्ति दुःखाभावादीनामनादितया समकालीनानामपि साध्यसाधनभावेपिनविरोधः । यथाचतदात्मानमेवावेदहंब्रह्मास्मीति तदपिस्वरूपंनित्यापरोक्षज्ञानतोजानात्येव । अतएवसर्वदापरिपूर्णमभवदितिबृहदारण्यकरीत्या भगवतःस्वात्मापरोक्षस्वपूर्त्योः प्रयोज्यप्रयोजकभावापन्नयोः समानकालत्वे

नित्याभिवृद्धसंपूर्णज्ञानाशश्वत्सुखाधिका । हरेरचिंत्यशक्त्यैवरमतेसर्वदारमा ॥ १९० ॥
सृष्टिःस्थितिश्चसंहारोनियतिर्ज्ञानमावृतिः । बंधमोक्षादयःसर्वेमहाभूतिपुरस्सराः ॥१९१॥

पिनविरोधः तथात्रापिभगवान् स्वाचिंत्यशक्तिवशात्पश्चाद्भाविसाधनंनिमित्तीकृत्य तत्फलभूतानंदादिगुणगतसुविशेषानपि पूर्वमेवददातीति ॥ १८९ ॥ तदेवंरमायागुणाभिवृद्धिर्युक्तैवेति तदेतदभिप्रेत्याह ॥ नित्याभिवृद्धेति ॥ विवृतंचैतन्मयैवान्यत्र "नित्याभिवृद्धसंपूर्णं ज्ञानादेतादृशाच्छुभात् । सुखादीनांगुणानांच याभाव्यापूर्तिरंजसा । सातस्याःसर्वदास्त्येव महालक्ष्म्याअशेषतः । अचिंत्यशक्तिसंपूर्णं जगदीशकृपाबलात्" इति ॥ १९० ॥ इदानींमहालक्ष्म्या जगत्सृष्ट्यादिमाहात्म्यं निरूपयति ॥ सृष्टिरित्यादिना ॥ महाभूतिर्महदैश्वर्यं । तद्योग्यानां । आदिशब्देनसुषुप्त्याद्यवस्थानां पुरस्सरशब्देनज्ञानानंद

बलादीनांग्रहणं । ब्रह्मादीनामधिकारानंतरमेवसृष्ट्यादौव्यापृतिर्नपूर्वं नापिमुक्तौ । नैवंनित्यमुक्तायाः किंत्वतीतानागताखिलकल्पीयाशेषजगत्स्रष्टृत्वमीश्वरवदेवेत्यभिप्रेत्यानाद्यनंतकालेष्वित्युक्तं ॥ १९१ ॥ १९२ ॥ समस्तजगदीश्वरत्वेनप्रसिद्धानां सर्ववेदप्रतिपाद्यानांब्रह्मादीनामपि स्वरूपसत्तापदप्राप्तिजगदाधिपत्यादिधर्मारमाधीनाः किमुततदन्यप्रपंचधर्माइत्यभिप्रेत्याह ॥ ब्रह्मेरेति ॥ यथायोग्यमिति ॥ ब्रह्मवाय्वोःसत्यादिचतुर्दशभुवनाधिपत्यादिनिरुपचरितमहदैश्वर्यं । शेषगरुडादीनांभगव

अनाद्यनंतकालेषुसर्वस्यजगतोपिच । कटाक्षलेशमात्रेणमहालक्ष्म्याभवंतिहि ॥ १९२ ॥

ब्रह्मेरवीशशेषेशशक्रार्केद्रादिदेवताः । भूतैष्यद्वर्तमानाश्चसर्ववेदोदिताअपि ॥ १९३ ॥

पदानिचस्वकीयानिसृष्टिस्थित्यादिकर्तृतां । सर्वस्यांतर्नियंतृत्वमव्यक्ताद्यभिमानितां ॥१९४॥

पारमेष्ठ्यादिकैश्वर्यंभोगान्सर्वजगद्गतान् । ज्ञानभक्त्यादिकान्धर्मान्मुक्तिंचानंदसंततिं ॥१९५॥

अनाद्यनंतकालेपियथायोग्यंपृथक्पृथक् । प्राप्नुवंतिमहालक्ष्म्याअपांगलवमात्रतः ॥ १९६ ॥

त्पादपंकजमहासनत्ववाहनत्वादिकं । शक्रादीनांत्रिलोकेश्वरत्वादि यथायोग्यमित्यर्थः । प्रपंचितंचैतत्द्वादशस्तोत्रेसप्तमेध्याये "यदधीनश्रियोपांगाद्ब्रह्मरुद्रादिसंपद" इति । प्रथमतात्पर्ये संहरंतीसदालोकान्सैवब्रह्मादिषुस्थितेत्यादि, तृतीयतात्पर्ये श्रीश्च परेयंधार्यतेयथा । चिद्रूपासाप्यनंताच अनादिनिधनापराइत्यादि, गीतातात्पर्यादौ ममयोनिर्महद्ब्रह्म तस्मिन्गर्भंदधाम्यहं ।

संभवःसर्वभूतानां ततोभवतिभारत । यावत्संजायतेकिंचित्सत्वंस्थावरजंगमं । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धिभरतर्षभ" इत्याद्य
नेकत्रस्पष्टमिदमितिनमीमांस्यते ॥ १९३-१९६ ॥ अंभ्रिणीसूक्तोक्तमहिमानमाह ॥ रुद्रैरित्यादिना ॥ "अहंमित्रावरुणो
भाविभर्मी" त्यादौमित्रावरुणावितिद्विवचनेसत्यपि पुनरुभावित्युक्त्यामुक्तामुक्तवरुणादिग्रहणमभिप्रेतमित्याशयेनोक्तं सदा

रुद्रैर्वसुभिरादित्यैर्विश्व(श्वे)देवैस्तथापरैः । सर्वैर्देवैस्तथासेव्याविमुक्तैरप्यनेकधा ॥ १९७ ॥
सदामुक्तौचसंसारेबिभर्त्येतान्सदारमा । सैवसर्वस्यकर्त्रीचसदासर्वत्रसंस्थिता ॥ १९८ ॥
योजक्षतिप्राणितिवाशृणोतिचविपश्यति । वक्तिस्पृशतियत्किंचिदाद्दातिचगच्छति ॥
इत्यादिसर्वरमयातांविनानहिकिंचन ॥ १९९ ॥ विरिंचादींस्तृणीकर्तुंतृणमप्युत्तमंतथा ।
कर्तुंसमर्थासंमोदद्दात्रीभक्तजनायसा ॥ २०० ॥ नाशक्यंविद्यतेतस्याःकिंचिन्नारायणादृते ।
सर्वस्तच्छक्तिविषयस्ततःसर्वेश्वरीरमा ॥ २०१ ॥ दिक्कालदेशप्रकृतिप्राकृतानांचसर्वशः ।

मुक्तौचसंसारइति । एतेनयज्ञेष्वभिषूयमाणसोमाभिमानिनंचंद्रं त्वष्टारमित्यादावप्युभयविधमितिग्राह्यमितिसूचितंभवति ।
अहंराष्ट्रीत्यादितात्पर्यंसैवेत्यादि ॥ १९७ ॥ १९८ ॥ जक्षति भक्षति हसतीतिवा । जक्षभक्षहसनयोरितिधातोः । प्राणितिचे
ष्टते । उपलक्षणाभिप्रायेणान्यवचनं ॥ १९९ ॥ यंकामयइत्यादितात्पर्यं विरिंचादीनित्यादि ॥ २०० ॥ २०१ ॥ "सर्वा

भिमानिनीदेवी मूलप्रकृतिरेवच । सर्वायतनासर्वकालासर्वावस्थासर्वेच्छापूर्वकप्रज्ञायोग्यतास्यात् । रमातदभिमानिनी । कालाभिमानिनीसैवे"त्यादिबृहद्भाष्यसूत्रभाष्यैकादशतात्पर्याद्युक्तं सर्वाभिमानित्वंविवृणोति ॥ दिक्कालेत्यादिना ॥ तद्धर्माणां संसारिमुक्तधर्माणांपृथगभिमानिनीत्यर्थः । एकामुख्या ॥ २०२ ॥ नित्यस्यदिक्कालादेरनाधेयातिशयत्वात्किंनियमनेनेत्यतोऽनित्यदृष्टांतपूर्वमाह ॥ सदेति ॥ नित्यस्यनित्यतायाअनादितस्तत्सत्तादिधर्माणामनादितोपितदधीनत्वं । यथाऽनित्यस्याधी

स्रृतिगानांमुक्तिगानांतद्धर्माणांतथापृथक् ॥ नारायणैकनियतास्वयमेकाभिमानिनी ॥२०२॥
सदाऽनित्यतयाऽनित्यंनित्यंनित्यात्मनातथा । नियामयतिसर्वंचसर्वांतर्बहिरास्थिता ॥२०३॥
सर्वाकारवतीतस्मात्तथासर्वाभिधाशुभा । एवंसर्वत्रगाप्येषानिर्लेपानिर्विकारिणी ॥ २०४ ॥
अत्तिसर्वगतान्सारान्मुक्तान्स्वपतिनैवहि । विनाविष्णवेकभोग्यंतुनानयाकिंचनक्वचित् ॥
अभुक्तमस्तिसर्वत्रशुभेषुविविधेषुहि ॥ २०५ ॥ नित्यावियुक्ताहरिणासर्वप्रियतमाहरेः ।

नत्वंतथैवेतिभावः । तस्मात् सर्वनियामकतया सर्वाभिमानित्वादभिमानिन्याअभिमन्यमानेव्याप्यावस्थानस्यापवादाभावे अवश्यमंगीकार्यत्वात्सर्वाकारवती । अभिमानिन्यामेवशब्दप्रवृत्तिनिमित्तपौष्कल्यात्सर्वाभिधेत्यर्थः । शुभेत्युक्तोपपादनं एवमिति ॥ २०३ ॥ २०४ ॥ सर्वत्रस्थित्वासर्वसारभोक्त्रीत्याह ॥ अत्तीति ॥ २०५ ॥ जगतिविद्यमानेषुशुभेषुमध्यङ्

त्यर्थः । सकलदेशकालपदार्थेषुहरिणासहैवावस्थानात्सर्वगतसारभोक्तृत्वंहर्यनंतरमुपपद्यतइतिभावेनाह ॥ नित्याविमुक्तेति ॥ "नित्यावियोगिपरमेतितिनिर्णये । यत्समंतुप्रियंकिंचिन्नास्तिविष्णोर्महात्मन" इतिगीतातात्पर्ये । तदुपपादनायसमव्याप्तिमाह ॥ समेति ॥ "समनाचामृत्युपक्रमादमृतत्वंचानुपोष्ये" तिसूत्रं । देशतःकालतश्चैव समाप्रकृतिरीश्वरे । नित्याव्यवहितत्वात्तु विशेषाच्छक्तिनामिके" त्यादिप्रमाणात् ॥ सर्वत्रसर्वावयवेति ॥ "अणोरणुतरैरूपैः पाणिपादादिसंस्थितैः । सर्वत्रसंस्थित त्वाद्वा सर्वतःपाणिपादवानि" तिभगवतउक्तन्यायेनैवैतद्बोध्यं ॥ व्यासदेहेंद्रियेति ॥ पृथग्व्याप्तानि देहाश्चेंद्रियाणिचयस्याः

समव्याप्ताचहरिणादेशतःकालतस्तथा ॥ सर्वत्रसर्वावयवाव्यासदेहेंद्रियाचसा ॥ २०६ ॥

भातिकुक्ष्येकदेशेऽस्यावेदकालादिकंतथा । अनंतशीर्षाक्षिमुखपाणिपादादिसंयुता ॥२०७॥

सर्वतःप्रकृतिःसूक्ष्मासर्वतोपिमहीयसी । एवंकालातिगादेवीविरुद्धानंतरूपिणी ॥ २०८ ॥

सातथोक्तेति ॥ २०६ ॥ रमायाअधिकव्याप्तेर्वक्ष्यमाणत्वात्तल्लभ्यमाहात्म्यमाह ॥ भातीति ॥ "सर्वतःप्रकृतिःसूक्ष्मे" तिसूक्ष्मत्वे, महत्त्वेतु "यदूर्ध्वंगार्गिदिव" इत्यादिनागार्गिब्राह्मणेदेशादिकंसर्वमनूद्य "आकाशएवतदोतंचप्रोतंचे" त्युक्तिःप्रमाणं । अतएवसर्वतोतिमहीयसी ॥ एवमिति ॥ देशातिक्रमवदित्यर्थः । कालसत्तायास्तदधीनत्वान्नतत्सत्ताकालाधीना । अतएव नकालावच्छिन्ना । यथाव्याप्तिर्नदेशाधीनादेशानवच्छिन्नाच तथेतिभावः । उक्तंमांडूकभाष्ये "त्रिकालातीतत्वंप्रकृतेरपि

विद्यतइत्यन्यदितिविशेषणमिति ॥ विरूद्धानंतरूपिणीति ॥ युगपदणुत्वमहत्त्वाद्यनेकविरुद्धधर्मोपेतेत्यर्थः । "यस्मिन्विरुद्धग
तयोप्यनिशंपतंतिविद्यादयोविविधशक्तयआनुपूर्व्ये"तिछांदोग्यभाष्योदाहृतभागवते । अत्रविरुद्धगतयोयुगपदणुत्वमहत्त्वाद्या
विष्णोरन्यत्र विद्यादयः विद्यैवादिःकारणंयासांताः । हरौतुस्वभावसिद्धाइतिव्यासतीर्थीये । तथाचोपासनाजनितविरुद्धधर्म
स्यान्यत्रसत्त्वाभिधानात् रमागुणानांचानादिनित्यत्वेपि "वायुंहरेःसुतंज्ञात्वानाहंपुत्रतयारुदं । हरेःप्रसादसामर्थ्यादक्षरा
चाजराह्यह"मित्यादिषुरमागुणानामुपासनाजनितत्वाभ्युपगमात् । अन्यत्रविद्यादयोविरुद्धगतयइतिरमायांपर्यवसन्नत्वेनैत

गुरुत्वलघुताद्यास्तुदूरत्वांतिकतादयः । सर्वेधर्मास्तद्गताश्चसर्वतोपिमहत्तराः ॥ २०९ ॥
अनंतानंतरूपाचज्ञानानंदादिरूपिणी । समाचसर्वरूपेषुविशिष्टादक्षिणासुखे ॥ २१० ॥

द्वाक्यमत्रप्रमाणंभवतीतिज्ञायते । अपिच संप्रतिपन्नमानुषपरिमाणोपेतांसीतामधिकृत्य "व्याप्तत्वान्निरवद्यत्वा"दितिमणि
मंजर्यामुच्यमानंव्याप्तत्वं युगपत्परिमाणद्वयाभावेकथंसंगच्छते । किंच "विमताख्यंचपर्यंकंविष्णोर्मानेनसंमित"मितिछांदो
ग्यभाष्येलक्ष्म्यात्मकपर्यंकस्यपुरुषाकारहरिरूपसंमितत्वमुच्यते । तथाचहरिसंमितत्वंचशिरःपाण्यादिविशिष्टरूपावयवादिसं
बद्धमपहायावशिष्टांशराहित्यलक्षणतन्मात्रसंबंधित्वं । एतच्चचतुरश्राकृतिमत्पर्यंकस्यनविनाविरुद्धधर्मसमावेशमुपपद्यतइति
॥ २०७ ॥ २०८ ॥ सर्वतःप्रकृतिःसूक्ष्मेतिन्यायःसर्वगुणेष्वप्यनुसंधेयइत्याशयवानाह ॥ गुरुत्वेति ॥ २०९ ॥ समाचेति ॥

अवतारादिसर्वरूपेषुमूलरूपइवज्ञानानंदादिगुणेषुसमेत्यर्थः । अत्रापवादमाह ॥ विशिष्टेति ॥ तदुक्तमेकादशतात्पर्ये "वेदाभिमानिनीसैवसाविष्णोर्दूरतःस्थिता । यज्ञाख्यासैवविष्णोस्तुयातूरस्स्थलमाश्रिता । हरिणारतियोगस्थादक्षिणाख्यापिसैवतु । उत्तरोत्तरतःसातुविशिष्टादक्षिणासुख"इति । अयंभावः । यद्यपिरमायाःसर्वरूपेषुसाम्यमेव । जीवस्यापिवायोःप्राकृतदेहविशिष्टस्य 'इत्थमेवनिहित'मित्याद्युक्तेः केवलचिद्रूपायाः "हरेःप्रसादसामर्थ्यादक्षराचाजराह्यह"मित्युक्तायाईश्वर्याःकैमुत्येनसाम्यस्यसिद्धत्वात् । तथापिभगवत्समीपतातिशयक्रमेणसुखेक्रमः । तत्रापिदक्षिणारूपंभगवच्चिद्योगलक्षणातिसंश्लेषवत्तयारतियोगवत्त्वेनातिशयितंसुखंभवति । ननुतद्विशिष्टंसुखंश्रियोनतावत्स्वरूपं । स्वरूपत्वेरूपांतरेष्वभावःकथं । स्वरूपस्यकुत्राप्यनपायात् । नचभगवत्संनिधिलक्षणव्यंजकसद्भावाद्दक्षिणारूपेव्यक्तिः अन्यत्रतदभावादव्यक्तिरितिवाच्यं । रूपांतरेषुकदापिताद्दृशसंश्लेषविशेषाभावेनकदाप्यव्यक्तत्वे अन्यत्राननुसंधीयमानत्वेसतिसर्वथात्रानुसंधीयमानस्यतत्स्वरूपत्वानुपपत्तेः । अतएवविकर्मकरणादिनाह्रसितमुक्तस्वरूपानंदवदुपपत्तिरितिनिरस्तं । अपिचदक्षिणायांव्यक्तंरूपांतरैरनुसंधीयतेनवा । आद्येकथंदक्षिणैवविशिष्टसुखा । रूपांतरेष्वपितदनुभवसद्भावात् । नद्वितीयः । परस्परसुखाद्यनुसंधानस्यस्वरूपैक्यव्यापकत्वेनव्यापकाभावेव्याप्यैक्यायोगात् । नचवाच्यं इंद्रादिगतसुखाद्यनुसंधानस्यार्जुनादावभावेपि अर्जुनादिगतयावद्धर्मानुसंधानस्यइंद्रादौसद्भावमात्रेणैक्योपपत्तिवद्दक्षिणागतसुखानुसंधानस्यान्यत्राभावेपि रूपांतरगतयावदनुसंधानस्यात्रसद्भावमात्रेणैक्यंयुक्तमिति । दृष्टांतेमानुषदेहाद्युपाधिसद्भावेनकथंचिदुक्तव्यवस्थासद्भावेप्यत्रतदयोगात् । "तत्रा

प्यंशिगतस्यसाधनोत्तमस्यांशेनभुज्यमानत्वा”दितिन्यायविवरणोक्तेर्दृष्टांतोप्यसंमतएव । विश्लिष्टोपाधिविशिष्टसौभरिकर्दमा दिरूपेष्वपिपरस्परानुसंधानाच्च । तथाचाननुसंधानेऐक्यायोगात् अनुसंधानेदक्षिणायाःसुखवैशिष्ट्यानुपपत्तेः नोक्तंयुक्त मिति । अत्रोच्यते । यदत्रोक्तंविशिष्टसुखस्यरूपांतरेषुकदाप्यव्यक्तौतत्स्वरूपत्वानुपपत्तिरिति । तत्रैकेआहुः । नहिदक्षि णारूपंनाम प्रतिनियतंवर्तते । किंनाम सर्वाण्यपिरूपाण्यर्धनारीत्वेनभगवदतिसंश्लेषदशायांदक्षिणानामकानि । यदातान्ये वदूरादिगतानि नतदादक्षिणानामकानि । अतएवरतियोगस्थेत्यवस्थाविशेषवैशिष्ट्येनैवदक्षिणारूपमुक्तं । तथाचसर्वरूपेष्वप्यु क्तविशेषव्यक्तेरवस्थाविशेषेविद्यमानत्वेननास्वरूपत्वशंकेति । वस्तुतस्तु नसर्वरूपाणांकालविशेषेदक्षिणात्वं । किंतुदक्षिणाना मकानि प्रतिनियतान्येवरूपाणि । तेषामेवसर्वदाऽर्धनारीत्वेनावस्थानं । परंतुतान्येवांशविश्लेषेणान्यरूपाणिभवंति । यथारुक्मि ण्यादीनि । अन्यथानिर्णये “दक्षिणाभिस्साक”मित्यन्योत्तमत्वंदक्षिणानामभिधाय सत्स्वपिरूपांतरेषु “सेयंभैष्मीदक्षिणे”तिवि शिष्यरुक्मिण्यादक्षिणात्वकथनमयुक्तंस्यात् । ऐतरेयभाष्येच “तस्याइनोहिविष्णुःसदक्षभागेस्थितस्सदे”ति सर्वदादक्षभागस्थि त्युक्तेः “सादक्षिणामानिनीदेवताचसाचस्थिताबहुरूपामदर्थे”इत्युक्तेश्च सत्त्वाद्यभिमानिश्रीभूदुर्गारूपादिवत्पृथग्रूपत्वस्यैवदक्षि णानामकरूपस्योचितत्वाच्च । तथाचदक्षिणारूपेष्वेवसुखविशेषव्यक्तिः । रूपांतरेषुतदनुसंधानसद्भावादस्वरूपत्वाभावश्च । यद त्रोक्तंदक्षिणागतविशिष्टसुखस्यरूपांतरेष्वनुसंधाने “विशिष्टादक्षिणासुख”इतिविशिष्योक्तेरनुपपत्तिरिति । तन्न । यथाहस्ताद्यंश गतसुखादेःपादादावनुसंधानेपि हस्तेमेसुखमित्यादिविशेषव्यवहारः सुखादिव्यक्तिस्थानत्वादुपपद्यते । एवंसर्वरमारूपेषुसुखवि

शेषानुसंधानेपिदक्षिणारूपस्यैवातीवभगवद्रतियोगवत्त्वेनविशिष्टसुखव्यक्तिस्थानत्वाद्विशिष्योक्तिर्युज्यतइति । अथवा एतत्सु
खविशेषानुसंधानमात्रस्यान्यत्राभावेपि तदितरसुखज्ञानादियावद्धर्मानुसंधानस्यसद्भावेनैक्योपपत्तेर्नकश्चिद्दोषइति ॥ २१० ॥
अनंतानंतरूपैरित्यादि ॥ उक्तंचैतत्पर्यंकोपासनायां निर्णयादौच ॥२११॥ प्रकारांतरेणपूजांविवृणोति ॥ यानीति ॥ "यांयांपरे
शउरुधैवकरोतिलीलांतांतांकरोत्यनुतथैवरमापिदेवी"त्यादिनिर्णये, श्रीर्यत्ररूपिण्युरुगायपादयोःकरोतिमानंबहुधाविभूतिभिः।
तुलसीभिरीशमभ्यर्चती"त्यादिभागवते । भोक्तृत्वदानेदेव्याअल्पप्रवृत्तिरितिदर्शयितुमित्यादिगीतातात्पर्याद्यनुरोधादाह ॥

अनंतानंतरूपैश्चनानाकारगतैःशुभैः । पूजयंतीजगन्नाथंसर्वदापरमादरात् ॥ २११ ॥
यानियानिकरोतीशोह्यनुतानिकरोतिच । समस्तभोगदात्रीचप्रसादजननीहरेः ॥ २१२ ॥
हरिपूजात्मकाशेषमहाश्चर्याखिलक्रिया । अनंतानंतकल्याणगुणसांद्रमहाकृतिः ॥ २१३ ॥

समस्तभोगदात्रीति ॥ हरेःस्वयंस्त्रक्चंदनवनितादिरूपेणसमस्तभोगदात्रीत्यर्थः । "श्रीःसंतुष्टाहरेस्तोषंजनयेत्क्षिप्रमेवत्वि"
त्याद्यनुसृत्योक्तं प्रसादजननीति ॥ २१२ ॥ "एवंप्रकारेणाव्यक्तशब्दशब्दिताप्राकृतगुणलक्षणासामहालक्ष्मीरितिसंलक्ष्यते,
स्वयंसूत्रंसैवहिसत्यादयइति, तदभिमुखमिवचप्रतिभातियथाव्यक्तंनतूदितमित्युदाहरद्भिःभगवत्पादैः भगवतासहतांकटाक्षेण
वीक्षमाणामीक्षामहे। साचदेवीप्रस्तुतैवभगवत्प्रस्तावे अनादिकालतोपिभगवत्संबंधित्वात् । विशिष्यभूमादिगुणत्वमुभय
थापिविष्णोरेवेति भूमाविष्णुरेवेत्युक्तंपुरस्ता"दित्यादिना तत्वप्रदीपिकायांछांदोग्योक्तानांसत्यविज्ञानमतिश्रद्धानिष्ठाकृति

सुखभूमत्वलक्षणानां महागुणानांभगवतिरमायाअपि सैवहिसत्यादयइति सूत्रार्थत्वेनोक्तेर्निस्सीमानंतमाहात्म्यंतस्यालभ्यतइ
त्याशयवांस्तन्महिमानमाह ॥ अनंतानंतेति ॥ "अनंताश्चगुणास्तेषामन्यजीवव्यपेक्षये"तिवाण्यादीनामप्यनंतगुणत्वोक्ते
स्तदपेक्षयाऽनंतगुणगणपरिपूर्णायाअनंतानंतगुणत्वंनासंभावितमितिद्रष्टव्यं ॥ २१३ ॥ अचिंत्याव्यक्तरूपाचेत्यादौतु "येत्व
क्षरमनिर्देश्यमव्यक्तंपर्युपासते । सर्वत्रगमचिंत्यंचकूटस्थमचलंध्रुव"मितिगीतायांतद्भाष्येच । अप्रतर्क्यादनिर्देश्यादितिके
ष्वपिनिश्चयः । सर्वगाचिंत्यादिलक्षणाचसा । तथाचमोक्षधर्मे "नारायणगुणाश्रयादजरादतींद्रियादग्राह्यादसंभवतः अस

अचिंत्याव्यक्तरूपाचतथासर्वेंद्रियातिगा । अप्रतर्क्यातथाऽवाच्याप्यग्राह्यातिविलक्षणा ॥ २१४ ॥
चिंत्यादिरूपाचतथाप्यचिंत्याद्भुतशक्तितः । श्रीरप्यमितवेदोक्ताविष्णुवन्नतुमुख्यतः ॥ २१५ ॥
हरेरत्यंतरंगत्वात्सामीप्याच्चप्रियत्वतः । हरिक्रियानुकर्तृत्वात्पृथग्वेदेषुनोदिता ॥ २१६ ॥

त्यादहिंस्राल्ललामात्द्वितीयप्रकृतिविशेषादवैरादक्षयादमरादक्षरादमूर्तितः सर्वस्याःसर्वकर्तुःशाश्वतंतमसः,। आसीदिदंतमो
भूतमप्रज्ञातमलक्षणं। अप्रतर्क्यमनिर्देश्यंप्रसुप्तमिवसर्वतः,। दृष्टाचसाभक्तिमतीवदेवइत्यादौ, उपासितामुक्तिदासासद्यएवे"
त्यादिगीतातात्पर्येच ॥ २१४ ॥ सर्ववेदप्रतिपाद्यत्वेप्रमाणवचनमेवपठति ॥ श्रीरपीति ॥ पूर्वप्रसिद्धवर्जमितिऋग्भाष्योक्त
न्यायेनब्रह्मेंद्रादिलिंगघटितसर्ववेदप्रतिपाद्यतोपपत्तेः श्रीसूक्तादौविवादाभावाच्चामितवेदोक्तेतिभावः ॥ २१५ ॥ विष्ण्वंतर्भा

वेनतत्परवेदप्रतिपाद्यताचोपपद्यतइतिभावेनाह ॥ हरेरिति ॥ तदुक्तंबृहद्भाष्ये "प्रकृतिस्त्वतिसामीप्यादनातोपिपृथङ्नतु । उच्यते नत्रियोयद्वत्रयस्त्रिंशत्सुनोदिताः । अत्यंतरंगंयत्तस्मान्नहरेःपृथगीरिता । श्रीःस्वरूपविभेदेपिसर्वोत्कृष्टाचनित्यशः" इति ॥ २१६ ॥ वेदानुक्तगुणपूर्णत्वंतु विरिंचप्रकरणेनिपुणतरंप्रतिपादितं । बृहद्भाष्येच महद्ब्रह्मशब्दवाच्याप्रकृतिरेवेति । ब्रह्मवेदस्तस्मान्महत् तदनुक्तगुणेतियावदित्युक्तंभवतीति । गीतातात्पर्येच "तांब्रह्ममहदित्याहुरिति सूक्ष्मत्वादप्रसिद्धत्वाद्गुण

वेदानुक्तमहानंतगुणपूर्णासदारमा । कोनामवक्तुंशक्तोस्यामाहात्म्यममरोपिवा ॥ २१७ ॥

किमन्येमानुषामंदाःकुतोऽल्पप्रतिभायुताः । तथापिसंग्रहेणैवयथाशक्तिनिरूपितं ॥ २१८ ॥

## ॥ इतिश्रीसत्तत्वरत्नमालायांमहालक्ष्मीप्रकरणं ॥ ८ ॥

अनंतानंतगुणतइंदिरायाःपरोहरिः । इंदिराऽगम्यनिःसीममहामाहात्म्यबृंहितः ॥ २१९ ॥

बाहुल्यतस्तथा । अनिर्देश्यौतथाऽव्यक्तावाचिंत्यौश्रीश्चमाधव" इत्यादिनिमित्तप्रदर्शनपूर्वकमुपसंहरति ॥ कोनामेति ॥ अन्ये ऋषिगंधर्वपित्राद्याः । मादृशाः मनुष्याद्यामंदाः । कुतः सुतरामित्यर्थः ॥२१७॥२१८॥ इतिमहालक्ष्मीप्रकरणंसंपूर्णं ॥८॥ हरिः ॐ ॥ अथैवंनिरूपितंसर्वपरतंत्रतत्वं यद्वशत्वेनज्ञातमेवाभिमतफलसाधनं यत्प्रतिपत्त्यर्थंचाशेषमहाशास्त्रप्रवृत्तिः यश्च ज्ञातःसुप्रसन्नोमोक्षाद्यशेषपुरुषार्थसाधनं तस्यश्रीमहालक्ष्मीरमणस्यश्रीनारायणस्य माहात्म्यंदुरवबोधमपिश्रीहरिगुरुकरुणा

बलाद्यथायोग्यंयथामतिसंग्रहेणनिरूप्यते ॥ अनंतानंतेत्यादिना ॥ गुणशब्दोगणनार्थः । यावज्जीवराशिगतंयत्संख्याती तत्वलक्षणमानंत्यं तादृशमेकत्वेनविवक्षितत्वात्ततोप्यसंख्येयत्वेनोत्तमः । यथारमाविरिंचादीनांस्वस्वनीचापेक्षयाकोटिशतादि संख्यातउत्तमत्वं एवंरमापेक्षयाऽनंतगुणोत्तमत्वमितिन । किंनाम । जडप्रपंचेयावदानंत्यं ततोप्यनंतगुणिताजीवानांराशयः पृथगितियज्जडगतादधिकंजीवानंत्यं यावच्चततोप्यधिकमेकैकचतुर्मुखरूपाद्यानंत्यं ततोपिरमागुणरूपादिगतमनुपचरितंयाव न्महानंत्यं तावच्चसर्वमप्येकीकृत्यततोपिनिरवधिकमहाद्भुतानंतसंख्यातःसर्वगुणैरधिकइत्याशयः । एतच्चबुद्ध्यारोहार्थमुक्तं ।

अनंतगुणमाहात्म्यशक्तिज्ञानमहार्णवः । नारायणःपरोशेषचेतनेभ्यःपरंपदं ॥ २२० ॥
मुक्तब्रह्मादिदेवेष्वप्यमुक्तेषुजडेषुच । रमायांचस्थिताःसर्वेसद्गुणास्तदपेक्षया ॥ २२१ ॥
अनंतानंतगुणितास्तेभ्योत्यंतविलक्षणाः । अत्याश्चर्यारमादेस्तुमनोवाचामगोचराः ॥२२२॥

वस्तुतस्तु तदुत्कर्षेरमादीनामपिमनोवाक्प्रवृत्तिरेवनघटते । "यतोवाचोनिवर्तंते"इत्याद्युक्तेरित्याद्यभिप्रेत्याह ॥ इंदिरा गम्येति ॥ अत्रानुव्याख्यानमुदाहरति ॥ अनंतेति ॥२१९॥२२०॥ तत्रतावद्गुणोत्कर्षमुपपादयति ॥ मुक्तेत्यादिना ॥ इतरत्र सर्वत्रस्थिता(रमादिसर्वास्वतंत्रजगद्गता)येसर्वेसद्गुणाः उत्सर्गतस्तज्जातीयाअपितदपेक्षयाऽत्यंतविलक्षणाअनंतानंतगुणिताः संति । यथाक्षीरार्णवस्यपरिदृश्यमानक्षीरजातीयत्वेप्यतिवैलक्षण्यं यथावा सूर्यादिज्योतिषोज्योतिर्जातीयखद्योतादिवैलक्षण्यं

तथातेभ्योप्यतिविलक्षणाश्चेत्यर्थः । प्रपंचयिष्यतेचैतदानंदोनेदृशानंदइत्यादिप्रमाणोदाहरणेन । रमादिगतानंदादिसाजात्यमंगीकृत्यतदपेक्षयाऽऽधिक्यमुक्तं । अथतदपेक्षयाऽतिविजातीयाअप्यानंदादिपदवाच्याएवहरेःसंतीत्याह ॥ विजातीया इति ॥ ज्ञानानंदबलप्रकाशादिलोकजातीयगुणापेक्षयातद्विजातीयज्ञानादिशब्दवाच्याएवगुणास्संति । यथासर्वथाघटादिकं नज्ञानादिशब्दवाच्यंतद्विजातीयं तथालोकगततगुणवाचकशब्दावाच्याः अतएवतद्विजातीयाअलौकिकास्तादृक्शब्दप्रतिपाद्याः परस्परमत्यंतवैजात्योपेताएकजातीयाअप्यनंतानंतावांतरप्रभेदोपेता गुणगणाहरौनिस्संख्यतयासंतीतिभावः । तदे

संतिचैतद्विजातीयाअप्यसंख्यतयाहरौ । ज्ञेयाहरेर्गुणाःसर्वेमहोत्कृष्टामहाद्भुताः ॥ २२३ ॥

पूर्वमुक्तपदार्थायेसर्वेतेप्यमितांशकाः । तदंशांशाह्यनंताःस्युस्तदंशाश्चतथाविधाः ॥ २२४ ॥

तत् "गुणाःश्रुताःसुविरुद्धाश्चदेवेसंत्यश्रुताअपिनैवात्रशंका, अलौकिकास्तस्यशब्दास्तथार्था"इत्यादिप्रमाणपर्यालोचनयाऽवगम्यते ॥ २२१ ॥ २२२ ॥ २२३ ॥ इतःपरं "एतैस्सुरादिभिरतिप्रतिभादियुक्तैर्युक्तैस्सहैवसततंप्रविचिंतयद्भिः । पूर्तैरचिंत्यमहिमापरमःपरात्मा, नारायणस्यगुणविस्तृतिरन्यगाक्क, समेत्यसर्वेपिसदावदंतोप्यनंतकालाच्चनवैसमाप्नुयुः । गुणांस्त्वदीयान्"इत्यादिनिर्णये । "अवाच्योत्कर्षोमहत्त्वात्सर्ववाचांसर्वागमानांचमहत्परत्वमितिगीताभाष्ये, सोनंततेजाश्चततस्ततोपि, ब्रह्मेशानादिभिर्देवैःसमेतैर्यद्गुणांशकः । नावसाययितुंशक्य"इत्यादिप्रमाणावसितंश्रीनारायणमहोत्कर्षमेवप्रपंचयितुं तदुप

योगितयाजगदानंत्यंतावद्बुद्धावारोहयति ॥ पूर्वमित्यादिना ॥ अनंताव्याकृताकाशवेदवर्णपुराणकालप्रकृतिगुणत्रय महदहमादितत्वजातब्रह्मांडचतुर्दशभुवन सरित्समुद्रगिरितरुलतौषधितृणादिकं निखिललोकसंस्थमनंतानंतविविधविचित्रपदार्थजातं विविधानंतजातीयानंतानंतजीवराशयस्तद्देहेंद्रियादिरूपाःपूर्वमुक्तपदार्थाइत्यर्थः। उक्तंजगदानंत्यमंशबाहुल्येनोत्कर्षयति ॥ सर्वेतेप्यमितांशकाइति ॥ "नचानवयवंवस्तुक्वचित्तन्मानगोचर"मिति, सर्वदिक्ष्वभिसंबंधादित्यादिप्रमाणबलादुक्ताः सर्वेप्येते

क्षणस्यानंतभागानामेकभागेप्यनंतशः । धर्माःसंतिहिकालस्यदेशादेश्चैवमेवहि ॥
पृथक्पृथगनंताःस्युर्धर्माःसर्वेषुवस्तुषु ॥ २२५ ॥ जीवानामतिबाहुल्यंपूर्वमेवप्रदर्शितं ।
पृथक्तेषुसर्वेषुकर्मानंत्यंमहत्तरं ॥ २२६ ॥ तेषुनानाविधाधर्माह्यनंताश्चतथाविधाः ।
मुक्तानामपिसर्वेषांसुखसंततिपूर्वकाः ॥२२७॥ [सजातीयविजातीयाअप्यनंततयाधिकाः ।
संख्यांशपरिमाणाद्यैःसंत्यनंतगुणाधिकाः ॥ २२८ ॥] इतिनानाप्रकारेणमनोवाचामगोचरं ।

पदार्थाअप्यपर्यवसिताः नित्यपरमाणुपर्यंतंविभक्तांशोपेताः "अविभागःपराणुते"त्युक्तपरमाणव आकाशादयोप्यपर्यवसिता विभक्तानंतांशोपेताइत्यर्थः ॥२२४॥ जगद्धर्मानंत्यमुपपादयति ॥ क्षणस्येत्यादिना ॥ क्षणानंतानंतांशभूतसूक्ष्मकालस्यापियद्व्याकृताकाशव्यापित्वेनानंतमूर्तामूर्तपदार्थसंबंधात्तदाधारत्वतत्कालीनजन्यवस्तूत्पत्तिनिमित्तकारणत्व स्वेतरसकलपदार्थग

तभेदप्रतियोगित्वाद्यनंताधर्माःसंतीत्यर्थः। वेदादावप्येवमेवबोध्यं। पृथक्पृथगनंताइत्येतदुपपादितंजडप्रकरणे ॥२२५-२२९॥ एवंजगदानंत्यमुपपाद्य ततोप्यतिमहाधिकंरमारूपादिबाहुल्यमित्याह ॥ महालक्ष्मीति ॥ यद्यपि चतुर्मुखस्वरूपमपितदित राशेषप्रपंचादतिबहुलं। तथापितत्सहिताशेषप्रपंचापेक्षयालक्ष्मीस्वरूपमतिमहानंतंज्ञेयं ॥२३०॥ एवंविद्यमानजगद्बाहुल्यंदिक्प्र दर्शनायसंक्षेपतोऽभिधाय भगवदुत्कर्षस्यबुद्ध्यारोहायाभूतोपमान्यायेनपदार्थबाहुल्योत्कर्षंदर्शयति ॥ रमेत्यादिना ॥ प्रत्ये कमुक्तविधानं(तजगत्तदंशतद्धर्म)त्यसमसंख्याकाः यद्यनंताः लक्ष्म्योविरिंचाःशिवाइंद्राइत्येवंसमस्तामुक्ताअमुक्ता जीवग

वर्ततेहिजगत्यस्मिन्नानंत्यंसुमहत्तरं ॥२२९॥ महालक्ष्मीस्वरूपंचाप्येतस्मात्सुमहत्तरं ॥२३०॥

रमाब्रह्मादयःसर्वेप्येतदानंत्यसंमिताः । यदिस्युरपितेषांहिपृथगंशास्तथाविधाः ॥ २३१ ॥

ततोप्यनंतगुणिताअनंताश्चपुनःपुनः । ज्ञानादिगुणसंपूर्तौयर्हिस्युस्तेश्रियोऽधिकाः ॥२३२॥

णास्तृणांताजडपदार्थाश्चभवेयुः तेषामेकैकरमादीनामंशाश्चतावदानंत्यसमाश्चभवेयुरित्यर्थः ॥ २३१ ॥ पुनरेवमपर्यवसिता भूतोत्प्रेक्षाकार्येत्याह ॥ ततोपीति ॥ एवमभूतोत्प्रेक्षयाबुद्धिस्वीकृतपदार्थबाहुल्येनभगवदुत्कर्षंज्ञापयितुं भगवदुत्कर्षानु चिंतनोपयुक्तज्ञानादिगुणगणपरिपूर्तिमुत्कर्षयति ॥ ज्ञानादीति ॥ एतदुक्तंभवति । रमायावस्तुतोयावज्ज्ञानादिगुणजातं "यात्रापात्रंपयोधाविवे"त्यादिप्रमाणप्रमितं ततोप्यनंताधिकज्ञानादिगुणयुक्तत्वेनोत्प्रेक्षितानां तृणादिरमांतानांचेतनानामेतेषां

मिलित्वायावज्ज्ञानं तावत्सदृशंज्ञानं यदितृणत्वेनपरिकल्पितस्यभवेत् पुनस्तदधिकृत्याधिक्यतारतम्यक्रमेण रमादित्वेन परिकल्पितपर्यंतंज्ञानाद्याधिक्यंयदिभवेत् यदिचैवमुत्प्रेक्षितरमापेक्षयासर्वेप्यधिकज्ञानादियुताःस्युः पुनरेतेषांतत्सदृशंज्ञानंतृणस्यैवभवेद्यदि तदवधीकृत्यरमांताःपुनर्यथाधिक्यक्रमोपेताःस्युः पुनश्चैवमितिबहुप्रकारोत्प्रेक्षायामप्येतैर्बहुभिरपिनभगवद्गुणांशोज्ञातव्यइति ॥ २३२–२३४ ॥ एवंद्रष्टृत्कर्षमभिधायज्ञानकरणोत्कर्षमाह ॥ अनंतैरिति ॥ इंद्रियाद्यैरित्या

एकस्मिंश्चक्षणस्यांशेप्यनंतानंतचिंतने । समर्थाश्चसमाःसर्वेप्यद्भुतप्रतिभायुताः ॥२३३ ॥

एतेषांसदृशंज्ञानंतृणस्यैवभवेद्यदि । तत्स्वीकृत्यरमांताश्चभवेयुस्तादृशाःपुनः ॥ २३४ ॥

सर्वेतेप्यव्ययज्ञानाभवेयुरजरामराः । अनंतैरिंद्रियाद्यैश्चयदियुक्ताःपृथक्पृथक् ॥ २३५ ॥

सर्वदाचिंतयंतोपिहींद्रियाद्यैःपृथक्पृथक् । पुनःपुनश्चिंतयंतःसर्वेतेमिलिताअपि ॥२३६॥

दिशब्देन ज्ञानकरणतयाकल्पितानामवयवकेशादीनामुत्प्रेक्षितविजातीयकरणानांवाग्रहणं । एवंद्रष्टृत्कर्षंकरणोत्कर्षंचाभिधाय भगवद्विचिंतनाप्रकारमाह ॥ पृथक्पृथक् ॥ सर्वदेति ॥ एकेनचिंतितमन्योनचिंतयति । किंतुतदन्यदेवेत्येवं यदिसर्वेद्रष्टारः पृथक्पृथक् एकेनेंद्रियेणालिंगांतरेणवाचिंचितमन्येनकरणेन नचिंतयंति । अपितुतदन्यदेवेतींद्रियाद्यैःपृथक्पृथक्सर्वदा चिंतयंतोपि । पुनःपुनश्चैवंविशकलिततयावा मिलित्वान्योन्यसाहाय्येनवा सर्वदाचिंतयंतः तथाप्रोक्तप्रकारेणसर्वैर्द्रष्टृभिः

सर्वैःकरणाद्यैःसर्वस्मिन्नपिकालेमिलित्वासंपादितंयावच्चिंतनं तावत्सर्वमेकस्मिन्नेवक्षणेएकस्यैवद्रष्टुरेकेनैवकरणेनयदिभवे द्यदि चैवमभूतोपमयोत्प्रेक्षिताःसर्वेपिद्रष्टारः उत्प्रेक्षितैरनंतानंतकरणैरुत्प्रेक्षितेषुविशिष्टयावत्कालापेक्षयाऽनंतानंतगुणितेषुका लेषुसर्वदाविचारैकनिरताःस्युः । तथापिपुनरेवंद्रष्टृकरणकालप्रकारादीनामाधिक्येनानंतविधोत्प्रेक्षायामपितद्विजातीयानंत प्रकारेणवा अभूतोत्प्रेक्षायामपि "विष्णोरेकगुणांशस्ये"त्यादिनोक्तप्रकारगुणैकदेशस्यपरिचिंतापि नसाकल्येनकर्तुंशक्यत

अनंतानंतकालेपितस्माद्प्यत्यनंतके । विष्णोरेकगुणांशस्यविभक्तस्यचकोटिधा ॥ २३७ ॥

पुनश्चानंतधातस्यपुनश्चापिह्यनंतधा । नैकांशलेशलेशंवाचिंतयेयुःप्रयत्नतः ॥ २३८ ॥

नैवंसामान्यतोविष्णोर्गुणलेशांशदर्शने । अपिशक्तारमाब्रह्ममुखाःसर्वेपियत्नतः ॥२३९॥

तथापिविष्णुमात्रंतेजानीयुस्तत्प्रसादतः।तच्चसम्यङ्जानंतिनिस्सीमत्वाद्धितस्यच ॥२४०॥

विप्रुण्मात्रेभवेत्सर्वपूर्तिःसर्वंनतद्भवेत् । एवंहरेर्गुणाःसर्वेपूर्णाःप्रत्येकशोपिहि ॥ २४१ ॥

इतिभावः ॥ २३५–२३८ ॥ नकेवलमेतावत् किंतुरमाब्रह्मपुरस्सराःसर्वेप्येवंसामान्याकारेणाभूतोपमयापितस्यैवैकदेशस्यसा कल्येनावगमनेमहाप्रयत्नेनापिनशक्ताएवेत्याह ॥ नैवमिति ॥ २३९ ॥ तर्हिंसर्वथापिनजानंतिकिमित्यतआह ॥ तथापीति ॥ अत्रापिविशेषमाह ॥ तच्चेति ॥ २४० ॥ तदुपपादयति ॥ विप्रुडिति ॥ यतइतिशेषः । अन्यथा अब्रह्मत्वंतदंशस्यस्यादिति

भावः । "अतोशेषगुणोन्नद्ध"मित्युक्तलक्षणाभावप्राप्तेरितिभावः । तर्हिकथंविप्रुट्त्वोक्तिरित्यतआह ॥ सर्वमिति ॥ तन्मात्रं सर्वं यावद्ब्रह्म नभवेदित्यर्थः । एतदुक्तंभवति । यद्यपिगुणैकदेशोपि यावद्ब्रह्मात्यंताभिन्नएव । तथापि भेदप्रतिनिधि विशेषावलंबनेन परमेश्वरस्याल्पोगुणो महान्गुणइत्यादिरुपपद्यते । अतएव "परिमाणाख्यगुणविषयेसमः । समःप्लुषिणा समोमशकेनेति । सर्वेष्वपिचरूपेषुब्रह्माद्यनंतांतबाहुकः । चेतनांतस्थमारभ्यसर्वगांतस्वरूपवानि"त्यादिकमल्पतापरंवचनं प्रवृत्तं । एतेन "यावद्बलेनन्यहनत्खरादिकान्नतावतैवन्यपतत्सराक्षसः । ततःप्रहस्यात्मबलैकदेशंप्रदर्शयन्बाणवरान्मुमो चे"ति निर्णयवचनंचसमंजसंभवति । तथाहि । किंपरमेश्वरःसर्षपोद्धरणादावस्मदादिभिःसर्षपोद्धरणाद्युपयुक्तंयावन्मा त्रंबलंप्रयुज्यते तावन्मात्रमेवप्रयोजयति उताधिकं । नद्वितीयः । अविषयेऽधिकबलप्रयोगेनाकुशलतापातात् । आद्ये पितावन्मात्रंबलंहरेरस्तिनवा । नचेद्विनियोगानुपपत्तिः । तस्माद्विशेषशक्त्यातावन्मात्रमपिबलमंगीकार्यं । तथाचैवंप्रकृतेपि खरादिहननेयावान्बलैकदेशःप्रयुक्तः तावन्मात्रमपिकुंभकर्णेप्यसुरजनव्यामोहनायज्ञानिनांस्वबलादिगुणेष्ववांतरानंतविशेष प्रदर्शनार्थंचस्वेच्छयैवविनियुज्य पश्चात्तद्धननोपयुक्ताधिकबलैकदेशंकार्याभिमुखीकृतवानितिसिध्यति । तथाचविप्रुण्मात्रं चयुज्यते । तस्मिन्विशेषशक्त्यानिकृष्टात्यल्पैकदेशेपिसमग्रपूर्तिरचिंत्यशक्तिबलादंगीकार्यैव । अन्यथा "अतोशेषगुणो न्नद्धंनिर्दोषंयावदेवहि । तावदेवेश्वरोनामे"त्याद्यनेकप्रमाणनिरूपिततल्लक्षणाभावेनतदंशस्याब्रह्मत्वापत्त्यांशांतरेप्येवमितिवि प्लवापातात् । तथाचातिविप्रुण्मात्रेभवेत्सर्वपूर्तिः । नहिखरकुंभकर्णादिवधोपयोगि तथासर्षपोद्धरणाद्युपयोग्यल्पबलादि

मात्रमेवयावद्भगवत्स्वरूपबलादिकमपि । तथासतिविशिष्टस्याल्पताप्रसंगात् । नचवाच्यंतर्ह्येकदेशसमग्रयोर्भेदःस्यादिति । अत्यंताभेदेपिकेवलाचिंत्यशक्तिनिर्वाह्यविशेषेणचैवंभावोररीकरणात् । तथाचतस्यभगवत्समग्रबलादिकमपेक्ष्यैकदेशत्वेपिव स्तुतोतिविजातीयत्वेनाशेषगुणोन्नद्धत्वेनचनिस्सीमत्वात् तच्चसम्यङ्नजानंतीत्युपपद्यतएवेति । यथोक्तमनुव्याख्याने "महागुणस्यचाल्पोपिगुणःस्यादितिचेद्भवेत् । तावत्त्वमेवनैवस्या"दिति । प्रकटितमेतत्सुधायां । एवमभूतोत्प्रेक्षयापिनयाव द्ब्रह्मस्वरूपंमहानंतज्ज्ञानैरमादिभिरपिज्ञातुंशक्यमितिवदन्नुपसंहरति ॥ एवमिति ॥ उक्तंचनृसिंहाचार्यैर्गुणमाणिक्यमालायां "सर्वतांतुगतोह्यंशःसर्वोनह्यणुतांव्रजेत् । एवंगुणेष्वि"ति ॥ २४१ ॥ प्रत्येकमवांतरानंतविशेषयुक्तत्वेनापिगुणानांपूर्तिमुपपा

प्रत्येकंतुगुणाःसर्वेप्यनंतानंतधामताः । यथानंदस्यमोदाद्याविज्ञानाद्याश्चसंविदः ॥ २४२ ॥

दयति ॥ प्रत्येकमिति ॥ आनंदस्येतिविशिष्टसुखाख्यगुणग्रहणं ॥ मोदाद्याइति ॥ मोदप्रमोदमुदानंदारामप्रियाद्या इत्यर्थः । "मोदोभोगनिमित्तकः । प्रमोदस्तद्विशेषोत्थोमुन्नामात्यल्पभोगतः"इत्यैतरेयभाष्ये । "सुखंस्वरूपभूतंयदानंदइ तिकथ्यत"इतिबृहद्भाष्ये । आरामः परदर्शनादिनिमित्तंसुखमितिगीताभाष्ये । परेयंप्रियनामकमितितैत्तिरीयभाष्ये । एवंमोदाद्यवांतरप्रभेदाअप्यनंताअवगंतव्याः ॥ विज्ञानाद्याइति ॥ विज्ञानज्ञानसंज्ञानप्रज्ञानाद्याइत्यैतरेयभाष्याद्युक्ताइ त्यर्थः । "ज्ञानवेदनयोःसामान्यविशेषतयाऽर्थांतरत्वा"दितितत्वप्रदीपिकायां । "ज्ञानंसामान्यतोज्ञेयंविज्ञानंतुविशेषत"इत्य

न्यत्र । उक्तंचसप्तमतात्पर्ये "प्रत्येकशोगुणानांतुनिस्सीमत्वमुदीर्यत" इति । ज्ञानानंदादयोगुणाःप्रत्येकमप्यनंताइतिनयचंद्रिकायां मप्यनंतगुणेनंतेगुणतइत्यत्र । गुणतोनंतइतिगुणानांप्रत्येकमनवधिकत्वमनंतावांतरविशेषवत्त्वंचाभिप्रेयत" इतिसुधायां । "यद्यनंतविशेषाश्चतज्ज्ञानादेर्निवारिताः । कथंतत्तद्विषयतासार्वज्ञार्थंविधीयत" इत्यनुव्याख्यानेतत्सुधायांचस्पष्टं । "असंख्यातविशेषत्वादिच्छायाअपिसर्वदे" तिचानुव्याख्याने । चिकीर्षासंजिहीर्षेत्यादिशब्दवाच्यानंतविशेषवत्त्वादीश्वरेच्छाया" इतिसन्न्यायरत्नावल्यां । तथाचभगवद्गतज्ञानानंदाद्यनंतगुणानांप्रत्येकमवांतरानंतप्रभेदवत्त्वंयुक्तमिति । अत्रकेचित् । ईश्वरस्यज्ञानानंदादिगुणव्यक्तिरेकैकैव । परंतु यथा एकैकस्मिन्घटादौपदार्थे एकैकएवभेदः । तत्रपटप्रतियोगिकत्वकुड्यप्रतियोगिकत्वादयोनंताविशेषास्तत्वनिर्णयटीकादावभिधीयंते तथा एकस्याएवज्ञानव्यक्तेर्घटविषयत्वपटविषयत्वादयोनंतावांतरविशेषाएवसंति नतुज्ञानावांतरव्यक्तिनानात्वं । एतदभिप्रायेणैवप्रागुदाहृतवचनान्यपियोज्यानि । स्पष्टंचानंतविशेषाश्चतज्ज्ञानादेरित्यादौप्रतीयते । ज्ञानव्यक्तिनानात्वांगीकारे "नारायणमतिःपरा । सूर्यप्रभावदखिलंभासयंतीनिरंतरे" त्यनुव्याख्यानविरोधात् । निरंतरेत्यस्यनिर्भेदेतिसुधायांव्याख्यातत्वादितिसंगिरंते । अपरेतु ज्ञानव्यक्तिनानात्वमाचक्षते । तथाहि । प्रागुदाहृतानि नयचंद्रिका सुधा सन्न्यायरत्नावल्यादिप्रमाणानि तावदुत्सर्गतोज्ञानादिव्यक्तिनानात्वमेवावगमयंति । नचैतेषामन्यथाकरणेबलवज्ज्ञापकंपश्यामः । यच्च "अनंतविशेषाश्चतज्ज्ञानादेर्निवारिताः । कथंतत्तद्विषयतासार्वज्ञार्थंविधीयते, नानंतावांतरविशेषवत्त्वमित्यादिकंवचनजातं तत्तु ज्ञानप्रभेदानपरस्परंभिन्नाः किंतुभेद

प्रतिनिधिविशेषबलेनैवनानात्वव्यवहारविषयाः यथाब्रह्मधर्मभूतज्ञानानंदादयःपरस्परमभिन्नाएव विशेषेणनानात्वव्यवहार भाजः तद्वदित्येतन्मात्राभिप्रायं । निरंतरा निर्भेदेतिसुधापि स्फुटमेवमभिप्रायाप्रतीयते । अन्यथा तत्रैवप्राक्मुक्तज्ञान निरूपणावसरे ज्ञानानांनित्यत्वेविषयनियमानुपपत्तिमाशंक्य तत्तद्योग्यतानुसारेणबहुलार्थविषयत्वमितिसमाधाय भगवज्ज्ञा नेपिनिर्भेदत्वे विषयनियमानुपपत्तिशंकापरिहाराय यदुक्तं अत्रविशेषएवनिर्वाहकः । अतएव एकेत्यनुक्त्वा निरंतरेत्युक्त मिति तद्विरोधःस्यात् । किंचैवमानंदादेरप्येकव्यक्तित्वमंगीकृत्यमोदप्रमोदादिनानात्ववचनं तत्तद्विषयव्यंग्यत्वादिरूपानं दादिगतधर्मनानात्वाभिप्रायमित्यपिवक्तव्यंस्यात् । अर्ध(च)जरतीयानुपपत्तेः । किंचेश्वरेगुणव्यक्तिरेकैव । ज्ञानानंदादिगु णनानात्वव्यवहारस्यार्थविषयीकारित्वोच्चता प्रयोजकत्वादिगुणगतधर्मनानात्वापेक्षयैवप्रवृत्तिरित्यापत्तेः । गुणानंत्यप्रतिपाद कप्रमाणवचनानांबहुत्वात्गुणव्यक्तिनानात्वमेवांगीक्रियतइतिचेत्तुल्यमितरत्रापि । "गुणाह्यगण्यास्तवतेप्यनंताःप्रत्येकशः । गुणतोनंत"इत्यादीनांज्ञानविज्ञानप्रज्ञानमोदप्रमोदप्रियादिनानात्वप्रतिपादकानामनेकेषांभावात् । निरंतरेत्यादिकंज्ञानव्य क्त्यैक्येप्रमाणंवर्ततइतिचेत्(तस्यान्यथाव्याख्याततत्वात्)परास्तत्वात् । अपिच "परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञान बलक्रियाचे"ति गुणादिधर्मव्यक्त्यैक्येपिप्रमाणंसमानं । अस्यभगवतः शक्तिः परा उत्तमा । साचस्वाभाविकी । सैकैवविवि धाश्रूयतेइतिजयतीर्थार्यैः एकामेवभगवतिशक्तिरूपधर्मव्यक्तिमंगीकृत्य ज्ञानादिगुणानांक्रियादिधर्माणांच तद्गतावांतरविशेष त्वस्यैवप्रतिपादनात् । अथजीवस्वरूपभूताज्ञानानंदादयोधर्माअत्यंताभिन्नाअपिविशेषशक्त्याभिन्नाएव यथानपरस्परार्थक्रि

याकारिणः नतथाब्रह्मस्वरूपभूताःज्ञानानंदादयः । अपितुपरस्परार्थक्रियाकारिणः । अतएवपरब्रह्मस्वरूपमखंडैकरसंकेवलमचिंत्यशक्तियोगात्तद्घटिताद्भुतविशेषबलात्सर्वप्रकारेणानंत्योपेतं । एतदभिप्रायेणैवपराऽस्यशक्तिर्विविधैवेतितद्गुणशक्तेरेकत्वमुच्यते । वस्तुतस्तुज्ञानानंदादिव्यक्तिनानात्वमेवेतिचेत् तदपि ज्ञानविज्ञानादीनामत्यन्ताभेदः परस्परार्थक्रियाकारित्वंच । केवलमचिंत्यशक्तिवशान्नानात्वमित्यभिप्रायंनिरंतरेत्यादिकमितिसमं । किंचज्ञानव्यक्त्यैक्ये इच्छामेधाधृतिसंकल्पादीनामपिपृथग्गुणत्वंनस्यात् । तेषांज्ञानप्रभेदत्वात् । तदुक्तमैतरेये "मेधाधृतिर्मतिर्मनीषाद्युतिःस्मृतिःसंकल्पःक्रतुरसुःकामोवश इतिसर्वाण्येतानिप्रज्ञानस्यनामधेयानिभवंती"ति । यद्यपि तत्र "भगवानेवप्रज्ञानादिशब्दप्रतिपाद्य"इत्यैतरेयभाष्यं । तथापिप्रातीतिकार्थमप्यमंगीकृत्येयमुक्तिः । "इच्छैवकामोस्तुतथापिनैतामृतेहिचित्त्वंघटकुड्यवत्स्यादि"तिनिर्णयेच । इच्छानानात्वविचारस्तूत्तरत्रभविष्यति । "निखिलागमावगमितैरमितैःसुखसंविदादिभिरनंतगुणै"रितिमध्वविजये गुणानांप्रत्येकमानंत्यमुक्तं । "प्रत्येकशोगुणानांतुनिस्सीमत्वमुदीर्यते । यदानंत्यंचगुणतस्तेचानंताहिसंख्यया । अतोनंतगुणोविष्णुर्गुणतोनंतएवचे"ति । यद्वा यथा अत्तृत्वाधिकरणसुधायां ननुसंहारकालेक्रिया व्यक्ता नवा नचेत्कथंव्यवहारोर्थक्रियावा । आद्येकथंसृष्टिव्यवहाराद्यभावः । मैवं । व्यक्तेरप्यवांतरानंतविशेषवत्त्वांगीकारादिति भगवतिशक्त्या(ख्यामेका)त्मनैकामेवक्रियामंगीकृत्य तद्व्यक्तिनानात्वेनक्रियानंत्यमभिप्रेतं । द्रव्यगुणान्यत्वविशिष्टस्यपृथग्विधैकत्वविवक्षया । तद्वदिहाप्यर्थविषयीकारित्वरूपैकत्वविवक्षया एकत्वव्यवहारः । अतएव द्रव्यान्यत्वविवक्षयापृथग्विधमत्यंताभेदमंगीकृत्य

गुणक्रियादिधर्माणां परास्यशक्तिरित्यत्रशक्तित्वेनैकत्वोक्तिः । यद्यपि "परास्यशक्तिर्विविधैवेति, तथा शक्तिशक्तिमतोश्चै वनविभेदोस्तिकश्चन । अभिन्नाअपिस्वेच्छादिभेदैरपिविभाष्यत" इतिद्वितीयाध्यायतृतीयपादभाष्यवचनेबहुविचार्यमस्ति । तथापिनेहविचार्यते ॥ २४२ ॥ प्रत्येकंतुगुणाइति ॥ ज्ञानस्य यथा अर्थविषयीकारित्वं तथोच्चतापादकत्वपर्वताद्युद्धरणादि प्रयोजकतादिरूप सुखबलादिलक्षणाक्रांतत्वात्सुखादेरपिज्ञानादीतरलक्षणोपेतत्वात्सर्वेगुणाःसर्वगुणात्मकाइत्यर्थः । यज्ज्ञा नगतमर्थविषयीकारित्वंतदानंदादिष्वप्यस्ति । यच्चानंदगतमुच्चताप्रापकत्वं तज्ज्ञानादीतरगुणेष्वप्यस्ति । एवंसर्वगुणानामपि स्वेतरसर्वगुणेषुयद्यदर्थक्रियाकारित्वंतद्धत्त्वादितिभावः । उक्तंचबृहद्भाष्ये "प्रत्येकंतुगुणांस्तांस्तुसदासर्वगुणात्मकान् । चिदा

प्रत्येकंतुगुणाःसर्वेसदासर्वगुणात्मकाः । गुणांतरविशेषाश्चयथारूपाणितेगुणाः ॥ २४३ ॥

नंदात्मकास्तस्यगुणाःसर्वगुणात्मकाः । सर्वेचातःसर्ववैलक्षण्यमेषांप्रकीर्तितं । क्रोधःक्षमात्मकोयस्यचिदानंदात्मकस्तथा । एवं सर्वगुणास्तस्यसर्वेभ्योपिविलक्षणाः" इत्यादिना । तानिसर्वाण्यन्योन्यस्वरूपाणीत्यादि गीताभाष्ये । ज्ञानवीर्योज्ञानबलोज्ञानानंद उदीर्यतइतिद्वितीयतात्पर्ये बलानंदस्वरूपवान् ज्ञानानंदस्वरूपवान् इत्यादि तैत्तिरीयभाष्ये । ननुसर्वस्यगुणजातस्यसर्वगुणात्म कत्वे ज्ञानानंदादिप्रतिनियतव्यवस्थानुपपत्तिः । सर्वेषामपिसर्वलक्षणोपेतत्वेनव्यावर्तकाभावात् । अतएवखंडब्रह्मवादा पत्तिश्चेतिचेत् मैवं । यथाप्रमाणंहिप्रमेयमंगीकार्यं । तथाचप्रतिनियतज्ञानानंदाद्यनंतगुणसद्भावेप्रमाणानिप्रसिद्धानि ।

सर्वस्यसर्वात्मकत्वेप्युदाहृतानि । अतःप्रामाणिकत्वादुभयमपिस्वीकार्यं । नहिप्रमितेविरोधशंकावकाशः । विरोधाविरोधयोःप्रमाणाधीनतयानिरूपयिष्यमाणत्वात् । भगवद्गुणानामलौकिकत्वेनलौकिकगुणानांदृष्टांतीकर्तुमयोग्यत्वाच्च । "गुणाः श्रुताःसुविरुद्धाश्चदेवे"इतिश्रुतेः । अचिंत्यशक्तिविशेषेणसर्वसमाधानस्यप्रमितत्वाच्चेति ॥ गुणांतरेति ॥ यथावासुदेवादिरूपाणि वासुदेववासुदेवः वासुदेवसंकर्षणः वासुदेवप्रद्युम्नः वासुदेवानिरुद्धः संकर्षणवासुदेवः संकर्षणसंकर्षणः इत्यादिरूपेणरूपांतरविशेषयुक्तानि तथाज्ञानानंदादयोभगवद्गुणाअपि ज्ञानज्ञानं ज्ञानानंदः ज्ञानबलं सुखसुखं सुखज्ञानं सुखबलमित्यादिरूपेणानंदबलादिगुणांतरविशेषयुक्ताइत्यर्थः । अत्रापि "ज्ञानवीर्योज्ञानबलोज्ञानानंदउदीर्यते । सदेहःसुखगंधश्च

समस्तगुणपूर्णाश्चक्रियारूपादिभिर्युताः । ज्ञानस्यज्ञानतादेवेज्ञानितास्वेनचात्मनः ॥ २४४ ॥

ज्ञानभाःसत्पराक्रमः । ज्ञानज्ञानःसुखसुख"इत्यादीन्येवमानानि । ज्ञानवीर्यइत्यादेःज्ञानात्मकवीर्यः ज्ञानात्मकबलवानित्यपितदर्थप्रतीतेः ॥२४३॥ नकेवलमेतावत्किंतुभगवतइवतज्ज्ञानादिगुणानांप्रत्येकंधर्मित्वं । तत्रतत्रचज्ञानानंदबलाद्यनंतानंतगुणाः संतीत्येवंतएवगुणागुणिनश्चेत्याह ॥ समस्तगुणपूर्णाश्चेति ॥ ज्ञानभाः ज्ञानज्ञानः सुखसुखः ज्ञानानंदबलानंदस्वरूपवानित्यादेर्ज्ञानपूर्णभाः ज्ञानोपेतज्ञानः सुखवत्सुखइत्याद्यर्थकत्वात् । अनुव्याख्यानेच "अमंदसदानंदस्यंद्यनंतगुणार्णव"इति । "आनंदस्यंदिनआनंदपूर्णानंतगुणा"इतिनयचंद्रिकायां । नित्यानंदस्त्राविगुणानंत्यमितिसन्न्यायरत्नावल्यां । "अतिभासितं घनगुणापघनै"रितिमध्वविजये घनगुणापघनैः प्रत्येकंज्ञानानंदादिगुणपरिपूर्णैः ज्ञानानंदाद्यनंतगुणैरितिवेदांगतीर्थीये ।

ननुज्ञानानंदादिगुणानामपिज्ञानादिगुणवत्त्वेतेषामपिपुनर्ज्ञानादिगुणवत्त्वमित्यनवस्थास्यात् । भवतुकोदोषइतिचेत् पूर्वज्ञानंयद्विषयं तस्यापरंज्ञानमपि किंतद्विषयं तदन्यविषयंवा । आद्येसर्वस्याप्येकविषयतयाभेदकासंभवेनज्ञानानंत्याभावात् । एकपदार्थविषयकानंतज्ञानव्यक्तिरीशसामर्थ्यादित्यंगीकारोपिव्यर्थः । ऐश्वर्याप्रयोजकत्वात् । नद्वितीयः । साक्षाद्ब्रह्मधर्मभूतज्ञानस्य द्वितीयज्ञानविषयाविषयकत्वं तथातज्ज्ञानधर्मभूतज्ञानस्यापिपूर्वज्ञानगोचराग्राहकत्वंचप्राप्तं । एवंचघटज्ञानस्यपटज्ञानंपटज्ञानस्यकुड्यज्ञानमित्यापत्त्याकस्यापिज्ञानस्यसार्वज्ञाभावेनैश्वर्यसंकोचप्राप्तेरित्यतआह ॥ ज्ञानस्यज्ञानतेति ॥

ज्ञानभुक्त्वंसुखस्यापिसुखित्वंसुखभोक्तृता । स्वेनैवैवंसमस्ताश्चस्वेनैवगुणिनोगुणाः ॥२४५॥

गुणानांगुणवत्त्वंतुतैरेवान्यैर्नतुक्वचित् । गुणानांयेगुणास्तेपिगुणपूर्णाःपुनस्तथा ॥ २४६ ॥

स्वपरगताखिलविशेषविषयकाखिलज्ञानव्यक्तेरीश्वरधर्मिणियथाज्ञानाख्यगुणरूपेणावस्थितिः तथास्वस्मिन्नपिस्वस्यैवगुणत्वमित्येकस्यैवज्ञानादेर्गुणस्यस्वेनैवगुणगुणिभावांगीकारान्नोक्तदोषः । तदुक्तंबृहद्भाष्ये "गुणभेदानामपिसंत्येवगुणाः । नचानवस्था । स्वनिर्वाहकत्वात् । गुणाश्चगुणिनःसर्वेस्वेनैवगुणिनोगुणा"इति । नचात्माश्रयःशंक्यः । लोकेपिजनेर्जनिमत्त्वस्यस्वेनैवाभ्युपगमात् । ब्रह्मवत्तद्धर्माणामपिसकलगुणगणपरिबृंहितत्वरूपमहामाहात्म्यलाभान्नवैयर्थ्यशंका । प्रमाणान्युक्तानि ॥ २४४–२४६ ॥ नकेवलंभगवतोगुणानामेवान्योन्यात्मकता । अपितुक्रियादिसर्वधर्माणामपिगुणादिसर्वधर्मात्मकत्वं

धर्म्यात्मकताच । तथाप्यचिंत्यैश्वर्यघटितविशेषेणनानाभावश्चयुज्यतइत्याह ॥ परस्परमिति ॥ "स्ववेत्तावेदनंचस्वंस्वेन वेद्यश्चकेशवः । परस्यवेत्ताविज्ञिश्चे"त्यादिचगीतातात्पर्ये । तदभिन्नागुणानित्यमित्यादिकंमूलवचनमेव ॥ २४७ ॥ नचै तदसंभावितं । अलौकिकत्वादित्याशयवानाह ॥ आनंदादीति ॥ २४८ ॥ कथंतर्हितत्रानंदादिशब्दव्यवहारः । नह्य तिविलक्षणयोरेकशब्दप्रतिपाद्यत्वंसंभवतीत्यतोयत्किंचित्साद्दश्यमपेक्ष्येत्यनुव्याख्यानवचनंपठति ॥ अन्यानंदादीति ॥

परस्परमभिन्नाश्चधर्माःसर्वेपितद्गताः । तदभिन्नागुणानित्यमपिसर्वेविशेषतः ॥ २४७ ॥
गुणत्वेनगुणित्वेनभोक्तृभोग्यतयास्थिताः । आनंदादिगुणाःसर्वेप्यन्यानंदविलक्षणाः ॥२४८॥
अन्यानंदादिसाद्दश्यमानुकूल्यादिनापरं । तदपेक्षयैवचैतेषुह्यानंदादिपदानितु ॥ २४९ ॥
सम्यक्तद्वाचकाःशब्दास्तत्स्वरूपाअलौकिकाः । अप्युक्तालौकिकैःशब्दैराधिक्येनैवचान्यतः ॥२५०॥

तथाचानुकूलवेदनीयत्वसाद्दश्येनानंदमुच्यतइतिभावः ॥ नापरमिति ॥ सावधिकत्वं गुणमात्रत्वं गुणांतरकार्याकारित्वं इत्यादिकंनेत्यर्थः । एकादशतात्पर्येच "आनंदोनेद्दशानंदइत्युक्तेर्लोकतःपरं । प्रतिभातिनचाभातियथावद्दर्शनंविने"ति ॥ २४९ ॥ वस्तुतस्तु(सम्यक्तत्प्रतिपादनेब्रह्मस्वरूपभूताएवशब्दाःशक्ताःनान्यइत्याह ॥) तेषामलौकिकत्वेनसाकल्येनतद्वाचकाः शब्दाअपिताद्दशब्रह्मस्वरूपभूतास्संतीत्याह ॥ सम्यगिति ॥ उक्तंचन्यायविवरणे "अलौकिकास्तस्यशब्दास्तथार्थाअलौकिको

ह्येषविष्णु"रिति । तथापिलोकानंदादिपरानंदसुखादिशब्दवाच्यताप्युपपद्यते । तादृशैश्वर्यादित्याह ॥ अपीति ॥ इयांस्तु विशेषः । वेदादिगतानंदादिपदजातस्यब्रह्मादीतरानंदादिपरत्वंमुख्यतया । भगवदानंदादौतुपरममुख्यवृत्तिः । तथापि तदेकदेशेपिसामान्यतः । नतुसकलविशेषतःस्पष्टतया । "यतोवाचोनिवर्तंतेअप्राप्यमनसासह । आनंदंब्रह्मणोविद्वान्"इतिहि श्रुतिः । "वेदोवदन्नपिहरिंनसम्यग्वक्तिकेशवं । नारोहयत्यनुभवमप्रसिद्धस्वरूपतः । तथाप्यनुभवारोहःप्रसन्नेकेशवेभवेत्" इतिचतुर्थतात्पर्ये ॥ २५० ॥ सर्वविलक्षणस्यानंदस्यलौकिकानंदेव्युत्पन्नानंदादिपदवाच्यत्वंकथमितिचेत्तदाचिंत्यशक्त्यैवेतिव

जगत्स्रष्ट्यादिकर्तारःसर्वभोगभुजोपिहि । महालक्ष्मीमुखांभोजमध्वास्वादनलालसाः ॥ २५१ ॥

सर्वांतःस्थाःसर्वदेशकालव्याप्तास्तथाऽव्ययाः । नित्यव्यक्तागुणाःसर्वेनिरपेक्षाश्चसर्वतः ॥ २५२ ॥

दामः । किंचब्रह्मधर्मिणोयज्जन्मादिकारणत्वादिकंलक्षणजातंतत्तदानंदादीनामपिप्रत्येकमस्ति अतोपिवैलक्षण्यमित्याह ॥ जगत्स्रष्ट्यादिकर्तारइति ॥ २५१ ॥ इतश्चमहावैलक्षण्यमाह ॥ नित्यव्यक्ताइति ॥ ननुकथंगुणानांनित्यव्यक्तता । घटोत्पत्त्यनंतरंघटोजनिष्यतीतिज्ञानस्यशक्तिः घटोजातइतिज्ञानस्यव्यक्तिरित्यवश्यमंगीकार्यं । नहिघटोत्पत्त्यनंतरमपिजनिष्यतीतिज्ञानस्यव्यक्ततयावस्थानमुपपद्यते । भ्रांतित्वप्रसंगात् । नचवाच्यं ज्ञानमात्रस्यशक्तिव्यक्ती तदितरगुणानांतु "नित्यव्यक्ताहरेर्गुणा"इतिबलवदुत्सर्गप्रमाणबलान्नित्यव्यक्तत्वमिति। विशिष्य "नित्यव्यक्ताहरेर्मति"रितिप्रमाणसद्भावात् । अतउक्तमयुक्तमि

तिचेत् मैवं । घटोजनिष्यतिजायतेजातइत्याद्याकारकंघटजन्यादिविषयकंविज्ञानमेकमेव । नतुजनिष्यतीत्येकंजायतइत्यपरं इत्यादिप्रकारेणज्ञाननानात्वं । येनपूर्वज्ञानस्यशक्तिरुत्तरज्ञानस्यव्यक्तिरितिशंकास्यात् । किंनामैकैकस्मिन्ज्ञानेजनिष्यतीत्येव माद्याकारावर्तंते । तेषामेवशक्तिव्यक्ती । उक्तंचेशावास्यभाष्ये "भक्तानांस्मरणंविष्णोर्नित्यज्ञप्तिस्वरूपतः । अनुग्रहोन्मुखत्व" मिति । अत्रानुग्रहोन्मुखत्वरूपाकारस्यैवहिव्यक्तिरुच्यते । ननु "तदैक्षत, सृज्यसृष्टावीक्षाबभूव, दृष्ट्वासचेतनगणा" नित्यादावाकारमपहायकेवलज्ञानमात्रएवकादाचित्कत्वव्यवहारदर्शनात्कथंनित्यव्यक्तत्वमितिचेदीश्वराचिंत्यशक्त्यागीताभा ष्येसुखविषयेसमाहितत्वात् । स्थाणुत्वेपितदैक्षतेत्याद्यविरुद्धं । अचिंत्यशक्तेरिति । नचेश्वरज्ञानवद्भूत्वाभावितेतिच । ईश्वरज्ञानंवृद्धिह्रासादिवर्जितंभूत्वैवकयाचिदचिंत्यशक्त्याभूतमितिव्यवहारालंबनमित्यर्थ"इतिप्रमेयदीपिकायां । गुणगता काराणां(शक्तिव्यक्त्यभ्युपगमेपिगुणानांतदनंगीकारा)गुणत्वाभावान्नोक्तप्रमाणविरोधइतिध्येयं । एवंसुखविषयेप्यचिंत्यशक्त्या जातत्वव्यवहारघटना । तच्चोक्तंतत्रैव "आगमिष्यत्सुखस्यापितच्चास्त्येवसदापितु । तथाप्यचिंत्यशक्तित्वाज्जातंसुखमितीव चे"तिच । एवंस्रक्ष्यइत्यादीच्छायामप्याकारएवशक्तिव्यक्तीद्रष्टव्ये । अत्रकेचित् इच्छा इच्छात्वेननित्यव्यक्ता । तत्रसि सृक्षात्वसंजिहीर्षात्वाद्याकाराणां शक्तिव्यक्ती । तथाहि । इच्छातावद्गुणत्वान्नित्यव्यक्तासिद्धा । तथाप्येकस्मिन्नेवविषयेसिसृक्षासं जिहीर्षादीनांभावोऽभावश्चक्वचित्क्वचिदस्ति । तथाच इच्छाव्यक्तिरेकैव । सेच्छा घटसृष्टेःपूर्वंसिसृक्षाकारा । सृष्ट्यनंतरंरिरि क्षिषाकारासंपद्यते । रक्षणानंतरंसंजिहीर्षाकाराभवति । संहारानंतरंतुनिराकारेच्छायाअनानुभविकत्वादसृजमरक्षिषमितिज्ञा

नमात्राकारावर्तते । उक्तंच "असंख्यातविशेषत्वादिच्छायाअपिसर्वदे"तिवैशेषिकपरीक्षानुव्याख्यानसुधायांसदाविद्यमाना याआपीश्वरेच्छायाःशक्तिव्यक्तिरूपावस्थितसिसृक्षात्वाद्यसंख्यातविशेषवत्त्वादितिमन्यंते । अन्येतु घटज्ञानपटज्ञानादिनाना त्ववत्सिसृक्षासंजिहीर्षादीच्छावांतरव्यक्तिविशेषनानात्वंमत्वा सिसृक्षादिरेवनित्यव्यक्ता । परंतुपश्चात्स्रक्ष्ये इदानींस्रक्ष्येइत्या दिसिसृक्षादिगताकाराणांशक्तिव्यक्ती । सृष्ट्यनंतरंसिसृक्षा असृजमितिज्ञानाकारासंपद्यते । रिरिक्षिषायाअप्यरक्षिषमिति ज्ञानरूपता । इच्छाज्ञानयोरनतिभेदस्योक्तत्वादितिसंगिरंते । तदुक्तंतत्वप्रदीपेवैशेषिकपरीक्षायां "स्वतएवकालेविशेषां गीकृतेश्चे"तिभाष्यव्याख्याने "एकैकस्याःस्वरूपभूतायाइच्छायास्तत्तत्कालेस्वाभाविकविशेषांगीकृतेः । भेदोपचारेसृष्टीच्छा

**विषयापेक्षि न ज्ञानंविषयैश्चविशेषितं । एवंहिनिरपेक्षाःस्युःसर्वेधर्माअपिस्फुटं ॥ २५३ ॥**

संहारेच्छा घटज्ञानं पटज्ञानमित्यादि मिथ्यास्या"दित्यादिना ॥ २५२ ॥ निरपेक्षत्वंप्रथमतात्पर्योदाहरणेनविवृणोति ॥ विष येति ॥ ननुज्ञानंविषयापेक्षि नेतिकथं । सर्वमपिज्ञानमयंघटःपटइत्याद्याकारकत्वेनविषयघटितमेवानुभूयते । नहिविषयवर्जि तंज्ञानंनामयुज्यते । उक्तंचतत्वोद्योते "विषयवर्जितःप्रकाशएवनभवतिघटवदि"ति । अतोज्ञानस्यविषयावर्जितत्वाव्यभिचा राद्विषयापेक्षि नज्ञानमितिव्याहतमित्यतउक्तं ॥ विषयैश्चविशेषितमिति ॥ अयंभावः । ननिर्विषयमीश्वरज्ञानमिति वदामोयेनोक्तदोषः । किंतुभगवज्ज्ञानंसमस्तवस्तुविषयविशेषितमपिनविषयापेक्षमिति । तथाहि । विषयसापेक्षत्वं सर्वे

णविषयभूतेनप्रंपंचेनविषयविषयिभावरूपसंबंधमात्रेण किंवाविषयजन्यतया । नाद्यः । सर्वप्रपंचविषयकत्वमात्रेणतदपेक्षत्वे सूर्यादिप्रकाशानामपिघटपटादिपदार्थप्रकाशकतया सकलपदार्थसंबंधवत्त्वेन तस्यापिसकलपदार्थसापेक्षतास्यात् । नहि जगदपेक्ष्य सौरप्रकाशप्रवृत्तिःसंभवति । तथाचप्रकाशस्यप्रकाश्यनिरपेक्षत्वादीश्वरज्ञानमपिविषयनिरपेक्षमिति । अपिच ब्रह्मस्वरूपसत्तायाअपिसकलदेशकालसंबंधघटितत्वेन देशादिसापेक्षतास्यात् । अत्रेदानीमीश्वरइति देशादिसंबंधितयाप्रतीयमानत्वात् । देशादिसापेक्षसत्तावत्त्वेपारतंत्र्यमेवभवेत् । नचैतद्युक्तं । तस्माद्देशादिघटितापिसत्ता नदेशादिसापेक्षा । तद्वद्विषयविशेषितमपिसर्वविषयकमपिज्ञानंनविषयसापेक्षमिति । अंगीकृत्यचेदमुक्तं । वस्तुतस्तुसर्वेणसंबद्धंसर्वगतमपिब्रह्मरूपं नदेशकालपदार्थसंबद्धं । असंगत्वश्रुतेः । "मत्स्थत्वेपियथापृथिव्यांस्थित्वास्थितानि नतथामयीत्याहे"त्यादिगीताभाष्येच शास्त्रेसर्वगंसनातनमितिदेशकालसंबंधोक्तिरसंगततयैवदेशादिगतत्वमात्राभिप्रायेणेतिबोध्यं । नापिद्वितीयः । ब्रह्मज्ञानस्यनित्यत्वेनाजन्यत्वात् । नित्यत्वेपिविषयव्यंग्यतयाविषयसापेक्षत्वंस्यादिति नवाच्यं । नित्यव्यक्ततायाःसमर्थितत्वात् । विषयव्यंग्यतानुपपत्तेः । ननुतर्ह्यस्मदादिज्ञानस्यापिनविषयसापेक्षत्वं । विषयविषयिभावसंबंधमात्रेणतदपेक्षतेत्यस्यनिरस्तत्वात् । नापिविषयजन्यत्वेन । "ज्ञानंप्रत्यर्थस्यकापिजनकत्वासंमते"रितितत्वोद्योतटीकायां ज्ञानस्यविषयजन्यत्वाभावस्योक्तत्वात् इतिचेन्न । विषयस्यसाक्षात्कारणत्वमेवतत्वोद्योतटीकायांनिवारितं । नतुविषयापेक्षितानिवारिता । करणसन्निकर्षनिष्पत्तौविषयस्य प्रयोजकत्वेनजन्यज्ञानस्यविषयापेक्षानियमात् । तच्चोक्तंतत्रैव "केवलंकरणसन्निकर्षनिष्पत्तावेव

तत्सत्तोपयुज्यत" इति । न्यायकल्पलतायांच "हेतुरित्युच्यमानेप्रमातृप्रमेययोरपिप्रसंगात्साधनग्रहणमि"ति विषयस्यज्ञानंप्रतिहेतुत्वंव्युत्पादितं । अतीतानागतविषयकयोगिज्ञानस्यापि योगजधर्मप्रत्यासत्तिसिद्धकदाचित्कत्वत्सत्त्वोपेतविषयसापेक्षत्वमेवांगीकरणीयं । एवमनुमितिस्मृत्यादावपिव्याप्तिसंस्कारादिप्रत्यासत्तिसिद्ध्यर्थं कादाचित्कविषयसापेक्षत्वजननमिति । ननु उत्पत्तौनित्यत्वेनभगवज्ज्ञानस्यविषयानपेक्षत्वेपि ज्ञप्तौतदपेक्षास्त्येव । विशिष्टज्ञानंप्रतिविशेषणज्ञानस्यकारणत्वेनविदितएवसर्वस्मिन्सकलपदार्थज्ञानवान्भगवानितिज्ञायते. नत्वविदितइतिचेत्सत्यं । अस्मदादीनांप्रतीतेर्भगवज्ज्ञानविषयीकरणाय भगवज्ज्ञानस्यविषयघटितत्वेनविषयसापेक्षत्वेपि नभगवत्प्रतीतिःस्वयमन्यसापेक्षा । स्वस्यार्थविषयीकरणेतद्विषयकस्वप्रतीतौवाविषयानपेक्षणात् । अन्यथाभगवत्स्वरूपसत्तापि देशकालप्रतीतिमपेक्ष्यैवास्मदादीनांप्रतीयतइति ज्ञप्तौदेशादिसापेक्षतयाऽन्यायत्तास्यात् । अस्माकंप्रतीतिरेवभगवत्सत्तांविषयीकर्तुंदेशादिसापेक्षा नभगवत्सत्ता स्वयमन्यसापेक्षेतिचेत् तुल्यमितरत्रापीति । तदुक्तंभक्तिपादे "अन्यापेक्षायदिस्याच्चसत्तैवंदेशकालगा । देशकालानपेक्षाहिनसत्ताकापिविद्यते" इत्यनुव्याख्यानसुधायां "ननुदेशकालगतेतिकोर्थः । देशकालसंबद्धेतिवा देशकालजन्येतिवा । नाद्यः । तावतापरापेक्षाऽसिद्धेः । नहिगगनंघटसंयुक्तमित्येतावतातदपेक्षं । नापिद्वितीयः । अनादिनित्यत्वादितिचेत् एवंतर्हिसार्वज्ञ्यादेरपिनान्यापेक्षिता । नहि सर्वेणसहविषयविषयिभावरूपेणसर्वापेक्षत्वं । सौरप्रकाशस्यापिघटापेक्षताप्रसंगात् । नापिसर्वेणजन्यतया । नित्यसिद्धत्वात् । ननूत्पत्तौसर्वज्ञत्वादेःसर्वापेक्षाऽभावेपि ज्ञप्तौसास्त्येव । सर्वस्मिन्विदितएवसर्वज्ञत्वा

दिर्ज्ञायते । नाविदितइतिचेदेवंतर्हिसत्तापिमाभूदुत्पत्तौपरापेक्षा । ज्ञप्तौतुभवत्येवेत्यादिना उक्तंन्यायमन्यत्राप्यतिदिशति ॥ एवंहीति ॥ २५३ ॥ युक्तिंसूचयन्निगमयति ॥ नैतदिति ॥ अन्यगताःसुखज्ञानादयःस्त्रक्चंदनवनितादिविषयसापेक्षाः नभगवद्गताइत्येतन्नाद्भुतं । यतःप्राकाश्यप्राकाम्यादिसिद्धियुक्तानामपिज्ञानानंदादिकमतिविलक्षणं । "यादृशानंदकामः स्यात्तादृशानंदसंभवः । विषयान्विनैवप्राकाम्य"मित्यादिप्रमाणप्रमितं । किमुसर्वस्वतंत्रस्यगुणगणपूर्णस्यभगवतोज्ञानादिक मित्याशयेनोपसंहरति ॥ अतइति ॥ २५४ ॥ २५५ ॥ अथभगवत्क्रियाणांपूर्वोक्तप्रकारेणाशेषजगदानंत्यापेक्षया तथा अभू

नैतच्चित्रंमहैश्वर्येस्वतंत्रेपरमात्मनि । अतोनिस्सीमनिर्दोषगुणसांद्रोरमापतिः ॥ २५४ ॥

महादयालवःसर्वेज्ञानमोक्षादिदायकाः । स्वस्वरूपैकविषयाःश्रीलक्ष्मीविषयाअपि ॥ २५५ ॥

अतीतानागतानंतनानाचित्रजगत्पराः । महानंताःक्रियाविष्णोःस्वस्वरूपाअलौकिकाः ॥२५६॥

तोपमयोत्प्रेक्षिताद्भुतानंत्यापेक्षयाप्यतिमहानंत्यमसंभावनापरिहारप्रदर्शनपूर्वकमाह ॥ महानंताइति ॥ नचैतदसंभावितं । निस्सीमानंतस्वरूपेष्वभिव्यक्तिविहाराभ्यवहारादीनांसर्वलोकातिविजातीयानामपिक्रियाणांसंभवात् । स्वापेक्षयाऽल्पाल्पतमे पिरमादिप्रपंचेप्रवर्तनाद्यनंतक्रियाणांप्रमितत्वादित्याशयेनाह ॥ नानाचित्रेति ॥ २५६ ॥ ननुक्रियाणांभगवदभेदोनयुज्यते । क्रियाणामनित्यत्वेननित्येश्वरतादात्म्यानुपपत्तेः । परमेश्वरस्यनित्यत्वंजन्मादिसूत्रसिद्धं । स्वयमनित्यस्यसकलकारणत्वानु

पपत्तेः । संप्रतिपन्नक्रियादृष्टांतेनक्रियात्वहेतुना ईश्वरक्रियायाअप्यनित्यतायाःसाधयितुंशक्यत्वात् । नित्यत्वेबाधकसद्भावाच्च । तथाहि । यदिसृष्टिसमयेसंहारक्रियाविद्येत तदातथैवश्रुत्यादावुपलभ्येत । घटादिपदार्थजातस्यजननविनाशौयुगपत्स्यातां । किंचक्रियाणांनित्यत्वेक्रियायाःसंयोगविभागजननेकारणांतरानपेक्षत्वेनतदुत्पत्तिसातत्यप्रसंगश्च । अतःकथं नित्यत्वमीश्वराभेदश्चेत्यतआह ॥ शक्तिव्यक्तीति ॥ अयमत्राशयः । "ज्ञानंनित्यंक्रियानित्याबलंशक्तिःपरात्मनः । क्रियाणांचननाशोस्ती"त्याद्यागमेनक्रियानित्यतायाःप्रमितत्वात् । क्रियात्वाद्यनुमानस्यकार्यतोपाधिग्रस्तत्वेनागमबाधितत्वेनच बाधित्वात् । नचबाधकसद्भावः । क्रियायानित्यत्वेपि कदाचिच्छक्त्यात्मकता कदाचिद्व्यक्त्यात्मकतेतिविशेषांगीकारात् ।

शक्तिव्यक्त्यात्मनानित्याविशेषेणक्रियामताः ॥ २८७ ॥

तथाचसृष्टिसमयेसंहारक्रियायद्यपिविद्यते । तथापिनव्यक्ता । व्यक्तिरूपेणैवव्यवहारालंबनं । अतःसृष्टिसमयेसंहारक्रियायाव्यक्त्यभावात्श्रुत्यादौतथाव्यवहाराभावोनदोषाय । यच्चजननविनाशयौगपद्यापादनं तदप्यनुपपन्नं । जननसमयेसंहारक्रियायाअव्यक्तत्वेनविनाशानुपपत्तेः । संयोगविभागसातत्यप्रसंजनंचातएवनयुक्तं । व्यक्तिरूपावस्थाविशेषएवतद्धेतुत्वादितिसंक्षेपः । विस्तरस्तुसुधायां । अत्रक्रियायाःशक्तिर्नाम क्रियाजनकंशरीरबलं । व्यक्तिस्तज्जन्यपरिस्पंदइत्येके । अन्येतुनिर्विषयपरिस्पंदःक्रियाशक्तिः । विषयलाभानंतरंफलपर्यवसायिसविषयकपरिस्पंदोव्यक्तिरितिमन्यंते । ततोऽतींद्रियमेवकिंचिन्मृदादीनांघटादिकारणत्वमभ्युपगमनीयं । तदेवशक्तिरितिशक्तिवादिभिरभ्युपेयतइत्यादिसुधोक्तरीत्याऽतींद्रि

योधर्मविशेषएवशक्तिरितिप्राज्ञाः । तादृशशक्तिविशेषस्यतद्व्यक्तेश्चनित्यत्वेक्रियायाःकिमायातमितिचेदित्थं । यथाज्ञानस्यार्थविषयीकरणप्रयोजकातींद्रियोधर्मविशेषएवशक्तिः साचज्ञानरूपैवेत्यनुभवसिद्धं । अतएवकश्चिज्ज्ञानी हेदेवदत्त तवैतज्ज्ञानेशक्तिरस्तिनवेतिपृष्टोवक्ति अहमतीवशक्तः मादृशस्यकथमेतज्ज्ञानाभावइति । तेनसाशक्तिरेवज्ञानमित्यवगम्यते । अतएवहिसुप्तोऽयं विद्वान् प्राज्ञइत्यादिलोकव्यवहारः । परंतुयदासाशक्तिर्व्यज्यते तदाऽर्थविषयीकरणरूपतया । एवंगुणांतरेपिद्रष्टव्यं । उक्तंचगीतातात्पर्ये "चेतनेशक्तिरूपेणगुणादेर्भावइष्यते । सुप्तोऽयंबलवान्विद्वानित्यादिव्यवहारतः । नचैवंशक्तिरूपेणजडेव्यवहृतिःक्वचिदि"ति । एवमग्न्यादेःस्फोटादिजनकत्वरूपाशक्तिरग्निस्वरूपैव काष्ठादिसहकारिसमवधानेव्यक्तिभावमापद्यते । तथाक्रियाघटितेप्यनुभवः ममेदानीमस्तिव्याख्यानशक्तिः परंतुग्रंथपर्यालोचनशिष्यसमवधानाद्यभावात्सा नव्यक्ता । तत्सद्भावेतुसाव्याख्यानरूपव्यक्तिंगमिष्यतीत्यनुभवस्यसाक्षिसिद्धत्वात् । तथाचप्रकृतेपि जगत्सर्जननवनीतभक्षणरावणहननादिलक्षणफलपर्यवसानप्रयोजकतारूपव्यक्तिविशेषएवशक्तिः । परिस्पंदात्मकतयाफलोपधानरूपतदवस्थाविशेषएवव्यक्तिः । सैव श्रुत्यादौकादाचित्कतया सृजति रक्षति हरतीत्यादिव्यवहारालंबनंभवति । तथाचोक्तरीत्याशक्तिव्यक्तिरूपावस्थाविशेषयोर्नित्यत्वेन तदतिरिक्तक्रियाऽभावादुक्तंसर्वमुपपद्यतइति । तथैवेश्वरेजगदुत्पत्तिविनाशादिकार्यनिष्पत्तिहेतुभूतोधर्मविशेषएवशक्तिः । सैवक्रिया । तदुक्तंसुधायां "क्रियैवशक्तिर्नक्रियातिरिक्ताशक्तिरस्तीति । तत्तत्कार्यजननशक्तिरेवक्रिये"त्यादिना । अत्रकेचोदयंति । व्यक्तायाःसर्जनक्रियायाःसंहारसमयेकिमुपरतिरस्तिनवा । नेतिपक्षे

संहारसमयेपिसृष्टिव्यवहारप्रसंगः । आद्येव्यक्तिनाशापत्तिः । उपरतेर्विनाशस्वरूपत्वात् । एवंशक्तेरपिव्यक्तिसमयेअनुपरतौ
क्रियाव्यवहाराभावःस्यात् । शक्तिदशायामव्यवहारस्योक्तत्वात् । उपरतौतुशक्तिनाशएवेतिकथंशक्तिव्यक्त्यात्मनापिनित्यत्व
मिति । मैवं । व्यक्तेरप्युपरतिःशक्तित्वापत्तिरेव । एवंशक्तेर्व्यक्तिरेवोपरतिरिति तयोरन्योन्योपरमरूपतांगीकारात् । अनि
त्यत्वेनप्रमितेऽर्थेउपरतिर्विनाशः प्रमाणैर्नित्यतानिर्णयेतुशक्त्याद्यात्मकतारूपाकारांतरापत्तिरेव । सर्वव्यवस्थायाःप्रमाणाधी
नत्वात् । एतेनैतदपिपरिहृतं । लोके नेतिप्रतीतेरभावविषयकत्वेन शक्तिव्यक्त्योर्नित्यत्वेनतत्प्रतियोग्यभावानुपपत्तेः कथं
शक्तितादशायांव्यक्तिर्नेतिबुद्धिः व्यक्तिदशायांच नशक्तिरितिप्रतीतिरिति । शक्तिव्यक्त्योरेवान्योन्योपरमरूपतया नेतिज्ञान
विषयत्वात् । अभावस्यापिभावोपरमरूपताव्यतिरेकेण नेतिप्रतीतिविषयत्वव्यवस्थापकाभावादिति । ननुव्यक्तेर्याशक्ति
रूपोपरतिः तस्याःकदाचिदनुपरतत्वे सर्वदाव्यक्त्यभावापत्त्याव्यवहाराद्यभावादेवोपरत्यंगीकारे नित्यत्वेननाशासंभवादु
क्तरीत्याव्यक्त्यात्मकतयैवसेतिवक्तव्यं । तस्याव्यक्तेःपुनःशक्तिरेवोपरतिः । एवंपुनरुक्तरीत्याऽन्योन्योपरमरूपशक्तिव्यक्तिप
रंपरयाऽनवस्थेतिचेन्मैवं । याक्रियाशक्तिःप्राक्समर्थिता यस्याश्चव्यक्त्यासकलनिर्वाहइत्युच्यते साशक्तिरेवस्वव्यक्तेःपरि
स्पंदाख्यायाव्यवहारालंबनायाउपरमरूपा शक्तिः नत्वन्या । तदुपरतिरूपाप्युक्तातद्व्यक्तिरेव । एवंद्वयोःशक्तिव्यक्त्योर
न्योन्योपरमरूपतयापरंपराऽभावेनानवस्थाभावात् । उक्तरूपव्यक्तेरपिशक्त्यात्मनानित्यत्वेनतस्याअपिकादाचित्कत्वलाभा
यव्यक्तेर्वक्तव्यत्वात्तस्याअप्युक्तरीत्याव्यक्तिपरंपरयाऽनवस्थास्यादितिचेदत्रवक्तव्यं । घटोजायतेकिल । तत्रकिंघटकर्मकजनि

र्नित्या उतानित्येति । आद्येघटानंत्यप्रसंगः । नह्येकस्मिन्नुत्पन्नेनिर्विषयाक्रियास्तीत्युपपद्यते । अनित्यत्वेजनेरपिजनिर्वक्तव्येति जनिपरंपरयाऽनवस्थास्यात् । घटजनिरेवजनेर्जनिर्नपुनर्जनिरन्येतिचेत्समंप्रकृतेपि । क्रियाव्यक्तिरेवव्यक्तेरपिव्यक्तिर्नान्येतिसंभवात् । ननुचशक्तिव्यक्त्योःपरस्परभेदेनित्यत्वाद्यनुपपत्तिः । अभेदेऽन्यतरमात्रावशेषेणानिवृत्तःसदाव्यवहारादिप्रसंगइतिचेन्न । अभेदेपिविशेषबलेनभिन्नवदेवसकलकार्यनिर्वाहकविशेषस्यस्वनिर्वाहकतयानक्षुद्रशंकावकाशः । जनेर्जनिवदेवेति । एतेनयस्याःक्रियायाःशक्तिव्यक्तीउच्येतेसाकिंरूपा । शक्तिपरिस्पंदात्मकतामपहायनिरूपणानुपपत्तेरितिमंदाशंकानिरस्ता । नहिवयंशक्तिव्यक्तिरूपधर्मद्वयवतीधर्मिभूताकाचनक्रियास्तीतिब्रूमः । तथासतिप्रकारचिंतावकाशः । किंतुकुंडलादि कार्यं तत्कारणंचस्वर्णमित्युक्तौ यथाकार्यत्वकारणत्वरूपद्विविधाकारोपेतमन्यत्सुवर्णनामनास्ति । प्रकारनिरूपणानुपपत्तेः । तथाशक्तिव्यक्त्योरेवक्रियात्वमितिनतृतीयशंका । इयांस्तुविशेषः । स्वर्णेकार्यकारणयोर्भेदाभेदौ । प्रकृतेतु अत्यंताभेदेपिविशेषेणशक्तिव्यक्तित्वापत्तिरिति । तर्हिक्रियायाव्यक्तिःक्रियाशक्तिरितिव्यवहारस्यकागतिरितिचेदित्थं । क्रियायाव्यक्तिरित्यस्यशक्तेर्व्यक्तिरित्यर्थः । तथाचैकैवक्रियाशक्तिरितिव्यक्तिरितिद्विविधासतीकादाचित्कव्यवहारादिनिर्वाहिकानित्याचभवतीतिसर्वमनवद्यं । नन्वेकैवक्रियाकथंविरुद्धोभयाकारेतिचेद्विशेषबलेनोभयरूपतायायुक्तत्वात् । नन्वेवं(सर्वत्राप्येवं)भावांगीकारेणस

१८ स. र. कलदोषपरिहारादिसंभवेनेतरत्रक्वचिदनित्यता क्रियाणांकुतोंगीक्रियतइतिचेत्सत्यं । यदिसर्वत्रनित्यतायांप्रमाणमस्ति तदास्यादेव । नचैवं । किंतुप्रत्युततदनित्यतायामेवप्रत्यक्षादिकमबाधितमस्ति । अतःकल्पकाभावाद्बाधकसद्भावाच्च । नचैवं

कल्प्यते । ईश्वरमुक्तक्रियानित्यतायाःप्रमितत्वात्तद्बलादेतत्सर्वमुपपद्यते । प्रक्रियायाअपिप्रमाणप्रमितत्वात् । तदुक्तंगीतातात्पर्ये "स्वरूपेणैवनित्यासाविशेषात्मतयाभवेत् । विशेषतःस्वरूपेणनित्यश्चस्याद्विशेषतः । स्वनिर्वाहकतायस्मान्नानवस्थाततोभवेदि"ति । अनुव्याख्यानेच "विष्णोःक्रियायाश्चकश्चिदभेदस्तैरपिध्रुवं । कादाचित्कत्वमप्यासांविशेषेणैवयुज्यत"इति । एकादशतात्पर्येच "क्रियादेरपिनित्यत्वंव्यक्त्यव्यक्तिविशेषणं । भावाभावविशेषेणव्यवहारश्चतादृशः । विशेषस्यविशिष्टस्याप्यभेदस्तद्वदेवतु । सर्वंचाचिंत्यशक्तित्वाद्युज्यतेपरमेश्वर"इति । "क्रियायांचननाशोस्तितच्छक्तेःपूर्वकालतः ।

अप्यन्योन्यंविशेषौतौशक्तिव्यक्त्याख्यकौमतौ । स्वनिर्वाहकतायुक्तावन्योन्यंपरमात्मकौ ॥२५८॥

नित्यव्यक्ताःक्रियाःकाश्चिन्नित्यविक्रांतिपूर्विकाः । सर्वाःसर्वगुणैःपूर्णाःसर्वरूपैश्चसंयुताः ॥

विशेषएवोपरतिःक्रियायास्समुदीरिता । विशेषस्यविशेषोन्योनचैवास्तिकथंचन । स्वस्यापितुविशेषःसस्वयमेवभविष्यति । यथाजनेर्जनिर्नान्यातस्यावस्तुजनिर्जनिः । तथापितुजनित्वात्सासत्त्वंवस्तुनआनयेत् । एवमेवविशेषोसौविशेषांतरवर्जितः । करोतिनकरोतीतिव्यवहारविशेषकृत् । व्यक्तिभावंगतायांतुकरोतीतिस्वरूपिणी । शक्तिरूपस्थितासैवक्रियाशक्तिरितीर्यते । साचव्यक्तिस्तुजनिवत्क्रियायारूपमेवच । तथापितुविशेषेणस्वरूपेणविशेषिणी । जनेर्जनिवदेवासौज्ञातव्याव्यक्तिरेकतः" इत्यादिबृहद्भाष्ये ॥ २५७ ॥ भगवत्क्रियामात्रस्यनैवंशक्तिव्यक्तिरूपेणनित्यत्वं । ज्ञानादिवन्नित्यव्यक्तानांनित्यविक्रांत्यादीनां

भावादित्याशयेनाह ॥ नित्यव्यक्ताःक्रियाःकाश्चिदिति ॥ उपासनाप्रकरणेएतदुपपादयिष्यते ॥ २५८ ॥ २५९ ॥ अथ रूपानंत्यमुपपादयति ॥ अनंतानंतेति ॥ २६० ॥ अवतारकृत्यंसूचयति ॥ जगतइति ॥ उपलक्षणमेतत् "तस्मात्सर्वावताराश्चसर्वजीवेषुसंस्थिताः । प्रादुर्भावाःसर्वगुणैःपूर्णाएवसदास्थिताः"इत्यैतरेयभाष्योक्तसर्वजीवनियामकत्वादिकंचज्ञेयं ॥ पृथगिति ॥ जगत्सृष्ट्यादावव्यापृतानीत्यर्थः । उक्तंचप्रथमतात्पर्ये "पालनानुग्रहज(ना)यान्गौणेंडेसंस्थितोहरिः । करो

ता(श्च)स्तत्सर्वात्मकाःप्रोक्ताःक्रियावन्मात्रकास्तथा। अप्यनंतविशेषाश्चयुज्यंतेऽ(चिंत्य)नंतशक्तितः ॥२५९॥
अनंतानंतरूपाणिरमाद्येषुस्थितानिच । समस्तजडसंस्थान्यप्यवताराणिसर्वशः ॥ २६० ॥
जगतःसृष्टिसंहारपालनाद्यर्थकानिच । पृथक्चविद्यमानानिनानावस्थाप्रदानिच ॥ २६१ ॥
तानिचास्यसुदिव्यानिसुगंधीनिशुभानिच । दिव्यानंतमहाचित्रलक्षणान्यखिलानिच ॥२६२॥

त्यसौबहिःस्थेननकरोतीवनिर्गुण"इति । यद्यपिसर्वाण्यपिरूपाणिप्रत्येकंजगत्सृष्ट्यादिव्यापारोपेतानि । "सर्वेसर्वगुणात्मानः सर्वकर्तारएवचे"त्युक्तेः । तथाप्यचिंत्यशक्तिघटितविशेषेणकानिचिद्रूपाणि सृष्ट्यादिव्यापारवंति कानिचिन्नेतिव्यपदेशः। तच्चोक्तं "सर्वत्रसर्वकृच्चापिविशेषादेवकेवलं। करोतिनकरोती"त्यादि ॥ २६१ ॥ तानिचास्येति प्रमाणवचनं। नकेवलंभगवतोद्वात्रिंशल्लक्षणान्येव । अपितु अतिविलक्षणान्यनंतानिलक्षणानिसंति । द्वात्रिंशल्लक्षणोक्तिस्तु शास्त्रेविशिष्य

तेषामेवलक्षणाद्यभिधानात् रमादावन्येषामभावाच्च । "कोहितंवेदितुंशक्तोनारायणमनामय"मित्याद्युक्तमितिभावेनाह ॥ दिव्येति ॥ २६२ ॥ एवं नहरौपंचविधान्येववर्णानीत्याह ॥ शुक्लरक्तादीति ॥ "नानावर्णोहरिश्चैक"इतिबृहद्भाष्ये । "सोनंतवीर्योबहुवर्णःसुवर्ण"इत्यादिचगीताभाष्ये ॥ गुणसांद्राकृतीनीत्यत्रगुणात्मकशिरःपाण्यादिमत्त्वं गुणपूर्णानीत्यत्रगुणवत्त्वमितिस्फुटोभेदः ॥ २६३ ॥ पृथक्पृथगनंतानीति ॥ "तानिचैकैकरूपाण्यनंतानी"तिगीताभाष्ये, विश्वरूपाध्यायभा

शुक्लरक्ताद्यसंख्येयवर्णानिसुमहांतिच । ज्ञानानंदाद्यसंख्येयगुणसांद्राकृतीनिच ॥

परस्परमभिन्नानिस्वतंत्राणिसमानिच ॥ २६३ ॥ पृथक्पृथगनंतानिपृथक्पूर्णतमानिच ।

रमाद्यैरप्यचिंत्यानिसंतिविष्णौजगत्प्रभौ ॥२६४॥ रामकृष्णव्यासहंसकपिलाद्याःपृथक्पृथक् ।

रामकृष्णव्यासमुखैरनंतानंतरूपकैः ॥ २६५ ॥ रामरामोरामकृष्णोरामव्यासइतिस्मवै ।

ष्यतैत्तिरीयभाष्यादौविशदमेतत् ॥ २६४ ॥ तदेतदुपपादयति ॥ रामेत्यादिना ॥ तदुक्तं तानिसर्वाण्यपिसर्वात्मकानीति । दृष्टंचजांबवताकृष्णस्यरामात्मकत्वं । नात्र "स्वेनैवगुणिनोगुणा"इतिवद्रामकृष्णादीनांरामकृष्णादिरूपांतरवत्त्वं । किंतु निरवधिकानंतरूपपरंपरैवांगीक्रियते । तत्रैवात्रबाधकप्रमाणयुक्त्योरभावात् प्रत्युतोक्तप्रमाणानां "रामःपुरस्तात्परतोपि रामः, सएवसर्वत्रचदृश्यमानोविदिक्षुदिक्षुप्रजघानसर्वश"इत्यादिप्रमाणानांचभावात् एतादृशानंतपरंपरायांमहैश्वर्यरूपत्वेन

एकघटविषयकानेकज्ञानांगीकारइवात्रवैयर्थ्याभावाच्चेतिभावेनाह ॥ संपूर्णाइति ॥ २६५ ॥ २६६ ॥ रीत्यंतरेणापिरूपाधिक्यंदर्शयति ॥ एवमिति ॥ इदमत्राकूतं । भगवतोरामरूपाण्येवानंतानीत्येकंरामरूपमनंतात्मकं । तत्रचैकैकस्यैवरामरूपस्य रामरामो रामकृष्णः रामव्यासः इत्यनंतानिरूपाणि । पुनस्तस्यैवरामरामरूपादेरामरामरामः रामरामकृष्णः रामरामव्यासः तथा रामकृष्णरामः रामव्यासरामः रामव्यासकृष्ण इत्येवंप्रकारेण तथापुनःसर्वस्यरामप्रभेदरूपजातस्यसर्वरूपत्वपरंपरया एवंरूपांतराणांसर्वेषामपिप्रत्येकंप्रत्येकमुक्तप्रकारेण यावंतिरूपाणि तावंतिसर्वाण्यप्येकस्यरामप्रभेदस्यवर्तंते । किंचैवंरामरामरामकृष्ण

कृष्णरामःकृष्णकृष्णइत्येवंतैश्चसंयुताः॥ संपूर्णास्तेपुनश्चैवंपुनश्चैवंपुनःपुनः ॥२६६॥
एवंद्विगुणरूपेषुक्रियारूपेषुचैवहि । रूपाधिक्यंचविज्ञेयंमिलितेषुपुनःपुनः ॥

रामव्यासादिरूपाणां तत्प्रभेदानामप्यनंतानंतरूपाणांयानिपुनरुक्तरीत्यारूपांतराणि तानिसर्वाण्यपि रामप्रभेदानि । एवंकृष्णादिरूपांतरेष्वपि कृष्णकृष्णकृष्णराम इत्यादिपूर्वोक्तसकलप्रकारेणापिरूपाधिक्यंज्ञेयं । किंचैवंरामप्रभेदत्वेनयावंतिरूपाण्युक्तदिशासामान्यतोऽवगतानि यावंतिचैवंकृष्णव्यासाद्यनंतानंतरूपावांतरप्रभेदत्वेनोक्तरीत्यासामान्यतोज्ञातानि सर्वाण्यपिपुनःसर्वेष्वित्येवंपुनःपुनरानंत्याधिक्येगुणिते यावंति तानिचैवंप्रत्येकमेकैकस्येत्येवंपुनःपुनश्चरूपाधिक्यंज्ञेयं । अपिचैवंप्रत्येकमनंतगुणक्रियादिधर्माणां केशाद्यवयवानांचानंतरूपात्मकत्वाज्ज्ञानरामज्ञानकृष्णज्ञानरामरामादिः ज्ञानज्ञान

कार्यः । इत्यादिप्रकारकविविधानंतरूपव्यवस्था कथमुपपद्यते । सर्वस्यसर्वसंस्थानाकारवर्णादिमत्त्वेन भेदकाभावादि त्यतःप्रमाणवचनेनैवपरिहारंलेशतोदर्शयति ॥ केवलेति ॥ युक्तिविरोधेपिकेवलमचिंत्यशक्त्यैव सर्वसमाधानोपपत्तिः । "यावत्प्रमाणप्रमितमपियुक्त्याविरुद्धमिवप्रतीयते । तत्राचिंत्यशक्तिःकल्पनीये"ति सुधारीत्यान्यायसिद्धत्वाच्च । "यत्तुयुक्त्या

अणोरणीयान्युगपन्महीयान्महतोपिच । गुरुर्लघुर्दूरमंतिव्यक्तोऽव्यक्तस्तथैवच ॥ २७४ ॥
अग्राह्यश्चतथाग्राह्यश्चिंत्याचिंत्यादिरूपकः । अस्थूलोप्यनणुश्चैवस्थूलोऽणुश्चैवसर्वतः ॥२७५॥
अवर्णःसर्वतःप्रोक्तःश्यामोरक्तस्तथैवच । ऐश्वर्याद्भगवान्विष्णुर्विरुद्धार्थोभिधीयते ॥२७६॥
नचागमैकविज्ञेयेशंक्यायुक्तिविरुद्धता । तथापिदोषाःपरमेनैवाहार्याःकथंचन ॥ २७७ ॥
कुतोदोषाःसर्वगुणपूर्णस्यार्कतमोयथा । गुणाविरुद्धाअपितुसमाहार्याश्चसर्वतः ॥ २७८ ॥
यदधीनागुणाश्चैवदोषाअपिहिसर्वशः । गुणास्तस्यकथंनस्युःस्युर्दोषाश्चकथंपुनः ॥ २७९ ॥

विरुध्येततदीशकृतमेवही"तिचोक्तं । आदिशब्देनसर्वव्यवस्थासंग्रहः ॥ २७३ ॥ अचिंत्यशक्तिप्रसंगाद्विरुद्धधर्मानाह ॥ अणोरित्यादिना ॥ नचैतदसंभावितमित्याह ॥ ऐश्वर्येति ॥ २७४–२७६ ॥ नापियुक्तिविरोधइत्याह ॥ नचेति ॥ अतिप्रसंगंपराचष्टे ॥ तथापीति ॥ २७७ ॥ तत्रयुक्तिमाह ॥ कुतइति ॥ २७८ ॥ अत्रप्रमाणंसूचयति ॥ गुणाइति ॥

॥ २७९ ॥ विरुद्धोभयसमावेशादेरन्यत्रदोषत्वात्कथमीश्वरेतदंगीकारइत्यतआह ॥ अन्यत्रेति ॥ "अनंताव्ययशक्तित्वात्तदन्यत्रविरोधिनः । संतिसर्वगुणास्तत्रनचतत्रविरोधिन"इति, "येदोषाइतरत्रापितेगुणाःपरमेमताः । नदोषःपरमेकश्चिद्गुणाएवनिरंतरा"इतिच । एतदुक्तंभवति । भगवतोयुगपदणुत्वमहत्त्वादिविरुद्धोभयसमावेशाभाववंवदन्प्रष्टव्यः । किमन्यत्रादर्शनेनासंभावितत्वात्तदभावः उत नायमल्पानल्पपरिमाणाद्युपेतः द्रव्यत्वात् नायंपरममहत्परिमाणाद्युपेतः अन्यपरिमाणाद्युपेतत्वात् पटादिवदित्यादियुक्तिविरुद्धत्वात् । अथवा यदीश्वरोयुगपदणुत्वमहत्त्वादिविरुद्धधर्मवान्स्यात् तर्हि दुःखी सुखीचस्यादविशेषादित्याद्यतिप्रसंगदुष्टत्वात् किंवा प्रामाणिकत्वात् । नाद्यः । अघटितघटकाचिंत्याद्भुतशक्तिसंपन्नेऽसं

अन्यत्रदोषाअपिहिगुणाएवजनार्दने । बहुभुक्त्वंयथादोषोनृषुनैवहरौक्वचित् ॥ २८० ॥

भावनानुपपत्तेः । नद्वितीयः । ईश्वरस्ययुक्त्यगोचरत्वेनतदनवकाशात् । नापितृतीयः । अविशेषमाश्रित्यह्यतिप्रसंगः । निर्दोषानंतसद्गुणत्वेहरेः सकलश्रुत्यादीनांमहातात्पर्यस्यप्रमितत्वेन दुःखाद्यंगीकारेतद्विरोधेनाविशेषानुपपत्तेः युगपदणुत्वमहत्त्वाद्यंगीकारेमहातात्पर्यविरोधाभावात् । भगवतिदुःखादिसद्भावेमानाभावादत्रतुतद्भावाच्च । दुःखादेः "निरनिष्टोनिरवद्यः वीतशोक"इत्याद्यागमेन स्वतंत्रत्वयुक्त्याचबाधितत्वाच्च । किंचविरुद्धपरिमाणादिसद्भावस्य "अणोरणीयान्महतोमहीयान् गुणाःश्रुताःसुविरुद्धाश्च, यस्मिन्विरुद्धगतयोप्यनिशंपतंती" त्याद्यनेकश्रुतिस्मृतिसिद्धत्वेनप्रसंगस्यविपर्ययेपर्यवसानंचनघटते ।

नचैवंसति प्राणादीनामप्येकस्मिन्नेवरूपे युगपदणुत्वमहत्त्वादिकंस्यात् । तत्रापि "अणुर्वायंमुख्यप्राणइति, प्राणएवाधस्तात्प्राणएवोपरिष्टात्, इतिचाणुत्वमहत्त्वयोःप्रमाणसद्भावादितिवाच्यं । तेषामचिंत्यशक्त्यभावेनविरोधसमाधायकाभावादणुश्चेत्यादिसूत्रेष्वन्यथाव्यवस्थाभिधानात् । "अचिंत्याःशक्तयस्तासा"मितिप्रमाणात्प्रमाणादीनामप्यस्त्यचिंत्यशक्तिरितिचेत् तस्याअपीशनियतत्वेन ईशोयत्रप्रयोजयति तत्रैवतेषामचिंत्यशक्तिःप्रयोजिका नतुसर्वत्र ईशाचिंत्यशक्तिवद्विश्वतोमुखीतिनदोषः । नापिचतुर्थः । प्रमाणानामुदाहृतत्वात् । अनुभाष्येच "मानवत्त्वाद्विरोधःकोनामानंक्वचिदिष्यते । अविरोधोविरोधश्चमानेनैवहिगम्यते । अतउक्तंसमस्तंचवासुदेवेतुयुज्यते" इति । तदेतत्सर्वं विश्वरूपाध्यायप्रमेयदीपिका

अवताराःसुपूर्णाश्चतदंशांशाश्चतादृशाः । सुपूर्णोह्येवमेवांशीसंश्लेषेप्येवमेवहि ॥ २८१ ॥

विष्णोरनंतरूपेष्वप्येकांशस्याप्यनंतकाः । तदेकांशांशकस्यापियावद्ब्रह्मवदेवहि ॥२८२॥

यां पाशुपताधिकरणीयसुधायांच स्पष्टं ॥ २८० ॥ प्रकृतानांरूपाणांपूर्तिमुपपादयति ॥ अवताराइति ॥ रूपमात्रोपलक्षणमेतत् ॥ तदंशांशाइति ॥ तेषां वासुदेवादिरूपाणां येवासुदेववासुदेवादयोंशाः तेषांचोक्तरीत्यायेपुनःपुनरंशाः तेसर्वेपिप्राथमिकवासुदेवाद्यंशसदृशाः । साक्षादंशेयादृशीपूर्तिः तादृश्येवतदंशांशेष्वितियावत् ॥ सुपूर्णइति ॥ अंशी मूलरूपीएकैकरूपवदेवपूर्णः सर्वरूपाणामेकीकरणेपिपूर्वप्रकारिकैवपूर्तिः एतादृशानंतानंतरूपाणांमूलरूपेसंश्लेषेसत्यपिपूर्ववदेवद्रव्यपूर्तिःनरूपांतरसंश्लेषप्रयुक्तंद्रव्याधिक्यमित्यर्थः ॥ २८१ ॥ उक्तंविवृणोति ॥ विष्णोरिति ॥ भगवतोह्यनंतानंतरूपाणि।

तत्रैकैकरूपाण्यप्यनंतानंतानि । तत्रचपृथक्पृथगेकैकरूपप्रभेदानिचानंतानंतानीत्येवंखलूपपादितंपुरस्तात् । एवंच "कदाचि दीशःसकलावतारानेकंविधायाहिपतौहिशेते" इत्याद्युक्तरीत्यासर्वरूपाणामेकसंस्थानदशापन्नेनारायणशून्यादिशब्दाभिधेयेमू लरूपेयावतीद्रव्यपूर्तिस्तावतीच "अतोशेषगुणोन्नद्धंनिर्दोषंयावदेवहि । तावदेवेश्वरोनामे" त्युक्ताशेषगुणरूपक्रियाद्यात्मकेवि शिष्टब्रह्मणि पूर्तिः सासर्वाप्युक्तसर्वरूपेषुपृथक्पृथगस्ति । नहि साक्षान्मूलरूपस्य प्रथमावताररूपाणांपुनस्तदंशादीनांवा पूर्तौविशेषोस्ति । भगवदितरत्रतु मूलरूपंयावद्द्रव्योपेतं तस्यैवांशविभागेसतिनतावत्त्वं । द्रव्यगतांशस्यविश्लिष्टतयाऽन्य त्रावस्थानेनतावत्त्वानुपपत्तेः । तत्रापिपुनरंशादिविभागक्रमेणद्रव्यन्यूनता । पुनस्तदंशानांसंश्लेषेणैकसंस्थानत्वेद्रव्याधिक्यं भवति । नैवंविष्णोः । किंतुप्रत्येकमपिसमग्रद्रव्यमितिभावः । ननु "सीतायायानिचैवासन्नाकृतेस्तानिसर्वशः । भूष णानिद्विधाभूत्वातान्येवासंस्तथैवचेति, एकंचमसंचतुरःकुरुतेत्याहे" त्यादौजडानामपिभूषणचमसादीनामनेकधाविश्लेषेपि पल परिमाणादिसाम्यप्रतीतेः कथंचेतनेषुजगन्नियामकेष्वंशविश्लेषेणन्यूनतेतिचेन्न । भावानवबोधात् । नहिवयंरमाब्रह्मादी नामंशविभागेपलपरिमाणादिव्यत्यासंब्रूमः । "समाचसर्वरूपेष्वि" ति सर्वत्ररमारूपेषुसर्वगुणैःसाम्यस्यैवसमर्थितत्वात् । ब्रह्म वाय्वोरप्येवमेवोपपादितं । केवलंमानुषावतारे "इच्छाव्यक्तिःप्रायशोमारुतस्य, तदन्येषांकेषुचिद्गुणेषुसाम्यंकेषुचि(द्वैषम्ये) द्विशेषेपि "आदानतोव्यक्तिमायांत्युरूणांतदन्येषांव्यक्तताकारणेने" तिचोक्तं । तथाचसर्वेषामपिचेतन्येपलपरिमाणादौ न व्यत्यासः । किंतुद्रव्यएवव्यत्ययः । वज्रमणिलोहपिंडमृत्पिंडतूलपिंडादीनांपरिमाणसाम्येपिद्रव्यपूर्तिभावाभावयोरनुभव

सिद्धत्वात् आर्द्रमृत्पिंडवस्त्रपिंडादीनांपलपरिमाणसाम्येपिद्रव्यांशव्यत्यासस्यानुभवसिद्धत्वाच्च । तथाचैतादृशद्रव्यांशव्यत्यासस्य सीताभूषणचमसादावपिसद्भावान्नोक्तशंकावकाशः । नचतत्रद्रव्यपूर्तिज्ञापकमस्ति । सीताद्युक्त्यादिसामर्थ्यवर्णनंत्वन्यासाध्यपलपरिमाणादिसाम्यापादकत्वमेव । प्रत्युत सीताभूषणादिष्वंशविश्लेषादिना यावतीद्रव्यन्यूनता तावती देवेषु । तत्राप्युत्तरोत्तरंद्रव्यपूर्तिरधिका । द्रव्यांशन्यूनतातुक्रमेणाल्पा । परमेश्वरेतुसर्वत्रापिसमग्रपूर्तिः । सर्वथानन्यूनतेति । कुतएवंविशेषइतिचेत् यतोन्यत्रभीमार्जुनादीनांवाय्विंद्राद्येकदेशत्वं वाय्विंद्रादीनामेकदेशित्वमित्येकदेशैकदेशिभावः । पुनःसर्वसंश्लेषेसमग्रत्वमित्यस्तिव्यवस्था प्रमाणसिद्धा । नचैवंपरेब्रह्मणि । किंनाम समस्तंचतद्रूपजातं पृथक्पृ

पूर्तिर्यावद्ब्रह्मणोपितावत्पूर्तिर्नचान्यथा । यतःपृथक्समस्तंचसमग्रंब्रह्मनिश्चयात् ॥ २८३ ॥

थक् समग्रंब्रह्मैव । तदुक्तं । "पूर्णमदःपूर्णमिदंपूर्णात्पूर्णमुदच्यते । पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यते । अवतारे महाविष्णोःसर्वेपूर्णाःप्रकीर्तिताः । पूर्णंचतत्परंरूपंपूर्णात्पूर्णसमुद्गताः । परावरत्वंतेषांतुव्यक्तिमात्रंविशेषतः । नदेशकालसामर्थ्यैःपारावर्यंकथंचन । पूर्णरूपस्यपूर्णस्यपूर्णंतदवतारगं । रूपंतदात्मन्यादायपूर्णमेवावशिष्यते"इतिबृहद्भाष्ये । "तस्य सर्वावतारेषुनविशेषोस्तिकश्चने"तिप्रथमतात्पर्ये । आनंदमालायांच "मत्स्यादिरूपीहरिःकूर्मादिरूपेत्रुमूलरूपेचसमः । मूलरूपीचमत्स्यादिरूपेषुसमइत्येवंवेदितव्यइति । ऐतरेयभाष्यादौचस्पष्टमेतत् । तथाचोक्तप्रमाणजातेनसर्वरूपाणामपि समग्र

ब्रह्मात्मकतायाःप्रमितत्वात्तदुक्तरीत्याभगवतिद्रव्यपूर्तिरंगीकार्येति ॥ २८३ ॥ ननुसर्वरूपाणामपिसमग्रब्रह्मत्वेमत्स्यकूर्मादिरू पभेदप्रतीतेर्भ्रांतित्वंस्यात् । नचविशेषबलेनतदुपपत्तिः । घटस्ययावद्द्रव्यभाविधर्मैःसविशेषाभेदेपि समग्रघटस्यसमग्रघटेन निर्विशेषाभेदस्यैवप्रमितत्वेन तद्वदिहापिसमग्रस्यब्रह्मणःसमग्रेणब्रह्मणाविशेषस्यासंभावितत्वादित्यतआह ॥ पूर्वइति ॥ अत्यंताभेदेषूक्तरीत्याविशेषघटनायामपि अचिंत्यैश्वर्यबलेनैवसर्वस्मिन्रूपजातेपृथक्समग्रेसत्यपि तत्रविशेषोघटतएव । यथा पूर्वकालइत्यत्रपूर्वत्वंह्यवच्छेदकं । तत्रपूर्वत्वंच पूर्वकालातिरिक्तंनिरूपयितुंनशक्यं । पूर्वादिशब्दानांकालविशेषएवगृहीतसंगति कत्वात्गत्यंतराभावाच्चावच्छेद्यश्चपूर्वकालएव । नहिवर्तमानभविष्यत्कालयोःपूर्वत्वमवच्छेदकमितियुक्तं । अवच्छेद्यावच्छे

पूर्वःकालोह्यवच्छेद्योह्यवच्छेदकएवच । समग्रेऽपिचसर्वस्मिन्विशेषस्तुतथाभवेत् ॥

दकभावश्चभेदसापेक्षः । नचासौयुज्यते । नापिविशेषस्तत्प्रतिनिधिः । तस्यतन्मात्रत्वात् । अतोरूपरूप्यादिविलक्षण तयाप्रतीतेपिसमग्रेपूर्वकाले अवच्छेद्यावच्छेदकभावघटकोविशेषईशाचिंत्यशक्तिवशादंगीकार्योऽनुभवसिद्धश्च । तद्वदिहापि समग्रमेवब्रह्ममहैश्वर्यघटितविशेषेणानंतानंतधाभवति । यथोक्तं "पूर्ववद्वे"तिसूत्रभाष्ये । "यथा एकएवकालःपूर्वइत्य वच्छेद्योऽवच्छेदकश्चभवती"ति । सूक्ष्ममतीनांदर्शनार्थमेषदृष्टांतः । "कालवद्वायथाकालःस्वावच्छेदकतांव्रजे"दिति । आनंदमालायांच "यद्यप्येकस्यैवरूपस्ययोगशक्त्याबहुभावसंभवादेकमेवरूपमित्यभिप्रेयत"इति । दशमतात्पर्येच "एकरू

पोपिबहुरूपइवेयते अचिंत्यैश्वर्यरूपत्वादि"ति ॥ २८४ ॥ उक्तमर्थपिंडीकृत्याह ॥ अखंडेति ॥ तस्माल्लोकवद्विशेषानुपपत्ते र्निर्विशेषतया अखंडैकरसं। तथाप्यत्यंतविभिन्नानंतविविधप्रपंचव दनंतानंतगुणरूपक्रियाजातिविशिष्टावयवादिविविध विचित्रातिविजातीयप्रकारोपेतमित्येतदाश्चर्यतममितिभावः ॥ २८५ ॥ उक्तांपूर्तिमवयवेष्वप्यतिदिशति ॥ परिपूर्णइति ॥ ननु "महागुणस्यचाल्पोपिगुणःस्यादितिचेद्भवेत् । तावत्त्वमेवनैवस्यात्"इत्यनुव्याख्यानेभगवतोमहागुणेअंशाल्पतायाअप्यंगीकारात् तद्वदिहापिभगवद्द्रव्येअल्पोपिद्रव्यांशोंगीकार्यएव । अविशेषात् । तथाचकथमुच्यते सर्वांशस्यापिसमग्रत्वमेव

अभेदेप्यविशेषेपिह्यचिंत्यैश्वर्ययोगतः ॥ २८४ ॥ अखंडैकरसंतस्मात्सर्वानंत्ययुतंसदा ।

भिन्नवद्विविधंब्रह्मचित्रमेतन्महाद्भुतं ॥ २८५ ॥ परिपूर्णोहिभगवानेकैकावयवेष्वपि ।

नैकदेशैकदेशिभावइतिचेदस्त्यत्रविशेषः । यतोभगवद्गुणेष्वेकदेशानंगीकारे तृणोद्धरणादौपर्वतोद्धरणाद्युपयोगिबलादिविनियोजनापत्त्याऽकुशलत्वादिदोषप्रसक्तिः । तथासर्वानुभवसिद्धत्वादतस्तत्रैकदेशांगीकरणंयुक्तं । नचैवंद्रव्यांशे । प्रत्युत एकैकांशेपिसमग्रब्रह्मत्वमैश्वर्यद्योतकमेव । तथाह्युक्तमनुव्याख्याने "यथैवकृष्णकेशस्यकृष्णस्यब्रह्मताऽखिले"ति केशाख्यावयवस्यैवाखिलब्रह्मत्वं । अतोयदैश्वर्यविरोधि नतदंगीक्रियते । यत्तदविरोधि प्रत्युत ऐश्वर्यानुगुणं तदेवांगीकार्यं । अत एवभगवद्गुणानामेकदेशमंगीकृत्यापि तस्यैवैकदेशस्याचिंत्यशक्त्यासमग्रपूर्तिरपि "विप्रुण्मात्रेभवेत्सर्वपूर्ति"रिति साधिता ।

एतदभिप्रायेणैव “पूर्ववद्वे”ति भक्तिपादीयसूत्रे आनंदादिगुणानामपिकालदृष्टांतेनैक्यंसमर्थितं । भगवतिविशेषस्यलोकविशेषविलक्षणत्वात् । यद्यपितत्र “प्रकाशवत्कालवद्वायथांगेशयनादिकं । ब्रह्मणश्चैवमुक्तानामानंदोऽभिन्नएवत्वि”ति मुक्तानंदस्यापिकालोदृष्टांततयोच्यते । तथापितत्रविशेषस्याविवक्षया ऐक्यमात्रोपपादनायतदुक्तिरितिध्येयं । तत्रसविशेषाभेदस्यैवनिर्णीतत्वेनकालवत्तन्मात्रत्वाभावादित्यलं ॥ २८६ ॥ उक्तांपूर्तिमुपपादयति ॥ एवमिति ॥ तदन्येषामिति ॥ अत एवहिवाय्वादेरित्थमेवनिहितमिति सर्वरूपाणामेकप्रकारत्वं देहेचांशव्याप्तौइतरदेवतावैलक्षण्येनसम्यगेवावस्थानमुपपादितं

आकेशादानखाग्राच्चपूर्णपूर्णतरोहरिः ॥ २८६ ॥ एवंसुपरिपूर्णोऽयंभगवानेकएवहि ।
तत्प्रसादात्तदन्येषांकिंचित्पूर्तिःक्रमाद्भवेत् ॥२८७॥ अनेकरूपैर्भगवान्नानावयवरूपकैः ।
एकरूपत्वमासःसन्मोदतेपरमेश्वरः ॥२८८॥ विष्णोरनेकरूपेभ्यएकैकंव्यज्यतेऽप्यहो ।

पुरस्तात् ॥ २८७ ॥ हरेःसर्वलोकविलक्षणत्वेननतत्रविरोधगंधावकाशइत्याशयवान्वैलक्षण्यद्योतनायमहिमानमाह ॥ अनेकरूपैरिति ॥ विश्वरूपाध्यायेस्पष्टमेतत् । “शिरोनारायणःपक्षोदक्षिणःसव्यएवच । प्रद्युम्नश्चानिरुद्धश्चे”त्यादिच ॥२८८॥ विष्णोरनेकरूपेभ्यइति ॥ तथाहि “उद्धबर्हात्मनःकेशावितिभागवते, यथैवकृष्णकेशस्यकृष्णस्येत्यनुव्याख्याने, मत्केशौवसुधातले । अवतीर्ययदोर्वंश”इतिविष्णुपुराणेच, कृष्णस्यकेशाद्व्यक्तिरुच्यते । “अतीतेंद्राएवतेविष्णुपष्ठाः, पूर्वेंद्रोसौयज्ञनामारमेशः ।

सवैकृष्ण"इतिनिर्णयेयज्ञाद्विभक्तत्वमुच्यते। "उपेंद्रइतिविख्यातोवामनत्वाच्चवामनः। तृतीयेऽस्मिन्भवेऽहंवैतेनैववपुषानघे। जातोभूय"इतिदशमेवामनाद्विश्लेषोभिधीयते। "हरिर्नारायणोस्म्यहमिति, नरनारायणावेतौपुराणावृषिसत्तमौ। ताविमावभिजानीहिहृषीकेशधनंजया"वितिचधर्मपुत्रनारायणांशत्वमुच्यते। भागवतेचनारायणांशत्वंबहुशोभिधीयते। कृष्णस्यबलभद्रप्रद्युम्नानिरुद्धादिरूपत्रयस्यचवासुदेवादिचतूरूपत्वंतत्रतत्र। तथाकृष्णस्यदशावतारप्रविष्टत्वाद्दशावतारव्यूहस्य "पंचात्मकःसभगवान्द्विषडात्मकोभूत्पंचद्वयी"तिमूलरूपादेवविभागोभिधीयते। विश्वरूपाध्यायभाष्येच "आदिकालएवविभक्त्युक्तेरित्युक्तं। तथाचनिर्णयेनकृष्णस्यमूलरूप्ययमित्युपासनाऽयोगः। एवंरामस्यापिवासुदेवावतारत्वं "सहस्रनेत्रावरजंविष्ठ"मितिवामनांशमित्याद्यव्यवस्थेत्यतआह॥

अन्यादृशोहरिस्तस्मान्नाशंक्यात्रविरुद्धता॥ २८९॥

विष्णोरिति॥ एकस्यैवकृष्णसंस्थानस्यनानेकरूपेभ्योव्यक्तिरसंभावितेत्याह॥ अन्यादृशइति॥ ऐतरेयभाष्ये "तेविंदन्मनसा। अविंदन्तेअतिहित"मितिऋग्द्वयव्याख्यानपरे "भरद्वाजोवसिष्ठश्चध्यात्वाविंदन्परात्पर"मित्यारभ्य "तस्मादेवचतुर्मूर्तेःस्तुतिसंतोषिताद्धरेः। आजहारभरद्वाजोरूपंनारायणाभिधं। तद्बृहन्नामकंविष्णोश्चातुरात्म्यात्समुद्धृतमिति, तस्मादेवचतुर्मूर्तेःसूर्यप्राप्यत्वहेतुतः। सूर्यनाम्नोहरिंधर्मनामानंतंनृसिंहक"मित्यादिना नारायणनृसिंहयोःप्रत्येकंसंकर्षणप्रद्युम्ननारायणानिरुद्धेभ्यश्चतुर्भ्योभिव्यक्तिरभिधीयते। तदेतद्धरेरचिंत्यशक्त्यायुज्यते। नहि

युक्त्यगोचरेयुक्तिःसंभवति । नापिलोकविलक्षणेलोकदृष्टांतेनविरोधः । किंतुयथाप्रमाणंप्रत्येतव्यं । प्रमाणानितुसंतिबहु शइतिनकश्चित्क्षुद्रोपद्रवः । अतोहरेरेकैकंरूपमप्यनेकेभ्योरूपेभ्यएकसंस्थानतयैवव्यज्यतइतिसिद्धं ॥ २८९ ॥ प्रकारांतरेणभगवन्माहात्म्यंनिरूपयितुंगीतावाक्यंपठति ॥ सर्वतइति ॥ "सर्वतःपाणिपादादिर्यतःपाण्यादिशक्तिमान् । केशादिष्वपिसर्वत्रकृष्णकेशोहियादवः । अणोरणुतरैरूपैःपाणिपादादिसंस्थितैः । सर्वत्रसंस्थितत्वाद्वासर्वतःपाणिपादवान्"इत्यादि

सर्वतःपाणिपादंतत्सर्वतोक्षिशिरोमुखं । सर्वतःश्रुतिमल्लोकेसर्वमावृत्यतिष्ठ
ति ॥२९०॥ रमाब्रह्मप्रकृत्याद्यंचेतनाचेतनात्मकं। सर्वमीशा(श्रि)र्पितंसोपिस
दासर्वत्रसंस्थितः। तथापिस्पर्शवैधुर्यान्नैतत्तत्रनसोत्रच ॥ २९१ ॥ नरकेपिवस
न्नीशोनासौदुःखभुगुच्यते । निर्लेपोनिर्विकारश्चसदासर्वत्रसन्नपि ॥ २९२ ॥

गीतातात्पर्यादस्यार्थोज्ञेयः ॥ २९० ॥ "मयाततमिदंसर्वंजगदव्यक्तमूर्तिना । मत्स्थानिसर्वभूतानिनचाहंतेष्ववस्थितः । नचमत्स्थानिभूतानी"त्यादिगीतोक्तप्रमेयमाह ॥ रमेति ॥ स्पर्शवैधुर्यादिति ॥ भगवतःसर्वत्रस्थितत्वेपि भगवतिसर्वस्यावस्थानेपि नतत्संबंधोभगवतः । अस्पर्शेनहिसर्वत्रावस्थानादिकं । असंगत्वात् । नान्योन्यधर्मसंक्रांतिरितियावत् । एतच्चतद्भाष्येस्पष्टं ॥ २९१ ॥ तत्रैवमानांतरंदर्शयति ॥ नरकइति ॥ फलितमाह ॥ निर्लेपइति ॥ २९२ ॥ तत्तद्गत

स्यतत्तद्गुणवत्त्वंयुत्क्त्यासूचयति ॥ तत्रतत्रेति ॥ शब्दानांचमहायोगवृत्त्यागुणाभिधायकत्वादितिभावः ॥ तत्तदाकारसंयुक्तइति ॥ "तत्तदाकारसंयुक्तान्सृज्यान्स्रष्टारमेवचे"त्युक्तेः ॥ २९३ ॥ सर्वेषामतिशयविशेषवत्त्वंभगवत्संनिधिविशेषवत्त्वादित्याह ॥ यद्यदिति ॥ विभूतिरूपस्येति ॥ "एषांविष्णुस्वरूपाणांसंनिधेरन्यवस्तुषु । विशिष्टत्वंस्वजातेःस्याद्विभूत्याख्यानितानित्वि"ति विभूतिशब्दार्थउक्तोगीतातात्पर्ये ॥ २९४ ॥ जाग्रत्स्वप्नेत्यादिना "संध्येसृष्टिराहहि, देहयोगाद्वा

तत्रतत्रस्थितस्तत्तच्छब्दैर्वाच्यःसमुख्यतः । तत्तदाकारसंयुक्तःसौंदर्याद्यविरोधतः ॥२९३॥
यद्यद्विभूतिमत्सत्वंश्रीमदूर्जितमेववा । विष्णोर्विभूतिरूपस्यज्ञेयंसांनिध्यमत्रहि ॥२९४॥
जाग्रत्स्वप्नसुषुप्त्यादिसर्वावस्थाप्रवर्तकः । तत्तिरोधानकर्ताचस्वतएवप्रबोधकः ॥ २९५ ॥
स्वयंसर्वत्रसंस्थःसन्स्वपूजांविदधातिच । सर्वकर्माणिकुरुतेसर्वत्रासक्तएवसन् ॥ २९६ ॥

सोपि, तदभावोनाडीषुतच्छ्रुतेरात्मनिहि, अतःप्रबोधोस्मात्, सएवचकर्मानुस्मृतिशब्दविधिभ्यः"इत्याद्यधिकरणतात्पर्यवर्ण्यते ॥२९५॥ एवंसर्वत्रस्थित्वास्वप्नाद्यवस्थाप्रवर्तनंचस्वपूजार्थमेवेत्याह ॥ स्वयमिति ॥ स्वपूजामिति ॥ "दक्षिणाक्षिस्थितोविश्वोभुङ्क्तेऽर्थान्जाग्रदास्थितान् । कंठसंस्थस्तथास्वाप्नान्जीवानंदंचसुप्तिग"इतिजाग्रदादिगतशुभभोक्तृत्वेनपूज्यत्वं । "निषुसीदगणपतेगणेषु, असतामधमाचारोहरिद्दष्ट्यात्मपूजन"मित्यादिषुचसर्वत्रस्वस्यैवपूज्यत्वंमुख्यतःपूजकत्वंचोक्तमिति । यद्य

पितत्रतत्रवक्तव्यंबह्वस्ति । तथापिविस्तरभयान्नोच्यते ॥ २९६ ॥ "नकृतेत्वत्क्रियते"इत्युक्तंविवृणोति ॥ भगवदिति ॥ "यथादारुमयींयोषां"इत्यादिप्रमाणप्रदर्शनं दारुयोषावदिति ॥ २९७ ॥ विष्टभ्येत्यनेन "विष्टभ्याहमिदंकृत्स्नमेकांशेन स्थितोजगदि"तिगीतांगृह्णाति ॥ २९८ ॥ सर्वांतरइत्यनेन "अंतर्बहिश्चतत्सर्व"मित्यादिश्रुतिरुक्ता ॥ गोप्तेति ॥ "प्रकृ

भगवत्क्रियानुसारेणकरोतिविकरोतिच । चित्प्रकृत्यादिकंसर्वंदारुयोषावदेवहि ॥२९७॥
यथैषापुरुषेछायाएतस्मिन्नेतदाततं । विष्टभ्यसइदंकृत्स्नमेकांशेनस्थितोजगत् ॥ २९८ ॥
सर्वांतरःसर्वबहिर्गोप्तासर्वस्यचैकराट् । चिच्चेत्यमेतदखिलमंशांशप्रतिबिंबितं ॥ २९९ ॥
द्रव्यंकर्मचकालश्चस्वभावोजीवएवच । कर्तृत्वंकरणत्वंच(स्व)कृतिःप्रकृतिरेवच ॥
यत्प्रसादादिमेसंतिनसंतियदुपेक्षया ॥३००॥ नित्यानित्यात्मकंचैवभावाभावात्मकंतथा ।
पुण्यपापादिकंचैवचेतनाचेतनंतथा । सर्वंनारायणादेवसत्ताद्यंलभतेंजसा ॥ ३०१ ॥

तैतावत्त्वंहिप्रतिषेधतिततोब्रवीतिचभूय"इतिसूत्रमुक्तं । सर्वस्यभगवदधीनत्वं तत्प्रतिबिंबत्वयुक्तिसिद्धमित्याह ॥ चिदिति ॥ विस्तृतंचैतज्जीवप्रकरणे ॥ २९९ ॥ तत्रैवप्रमाणं ॥ द्रव्यमिति ॥ कर्तृत्वंकरणत्वमितिसर्वकारकोपलक्षणं ॥ ३०० ॥ नित्यानित्येति ॥ "तत्रतत्रस्थितोविष्णुर्नित्यंरक्षतिनित्यदा । अनित्यदैवानित्यंचनित्यानित्येततस्ततः । भावाभावनियंताहितदेकः

पुरुषोत्तम"इति गीतातात्पर्ये । "सयथाकरोतिपुरुषंतथैवायंभविष्यति । साधुर्भवतिसाधुंचेत्करोतिपुरुषोत्तमः । पापोभवतिपापंचेत्सकरोतिजनार्दनः । तत्प्रेरितेनपुण्येनपुण्योभवतिमानवः । तत्प्रेरितेनपापेनतथापापःपुमान्भवे"दितिबृहद्भाष्ये ॥ ३०१ ॥ शशशृंगादिकमिति ॥ असतोऽभावत्वस्यव्युत्पादितत्वात् "भावाभावनियंतेत्ये"तदत्रप्रमाणं ॥ ३०२ ॥ सर्वस्यतदधीनत्वमुपसंहरति ॥ एवमिति ॥ ३०३ ॥ स्वातंत्र्यमुपपादयति ॥ सर्वदेशइति ॥ कालादिसृष्टिमपेक्ष्यसर्वदेशइत्युक्तं । नन्वीश्वरस्यतत्तत्सृष्टौस्वतंत्राधिष्ठानोपादानादिबहुसाधनसापेक्षत्वा त्कथमपेक्ष्यस्याधिष्ठानादेस्तदधीनत्वमित्यतो

शशशृंगादिकंसर्वमसद्भूयादितीच्छया । असज्जातंतथेशस्यसच्चसत्स्यादितीच्छया ॥३०२॥
एवमीशवशंसर्वंनहीशःकस्यचिद्वशे ॥ ३०३ ॥ सर्वदेशेसर्वकालेसर्वस्यजगतोहरिः ॥
सृष्टिस्थित्यादिकंसर्वमपांगलवमात्रतः । करोतिनोपादानादिव्यपेक्षास्यतुविद्यते ॥ ३०४ ॥

गुणत्रयमहदादिसमस्तावरणसहितांडकोश तद्गतचतुर्दशभुवनगिरितरुसरित्सागरादिपदार्थानां समस्तजीवजातशरीरेंद्रियज्ञानकर्मादिकानांमहाकार्याणां घटपटकुड्याद्यवांतरकार्याणांचस्रष्टृत्वेपिभगवतोऽनधिष्ठानभूतकालदेशाद्यपेक्षावा प्रधानमहदाद्युपादानाद्यपेक्षावा तत्तज्जीवनिर्वर्त्यकार्येष्वप्यांतरस्यज्ञानेच्छादेर्बाह्यस्यमृद्दंडचक्रसलिलादेरपेक्षावाविद्यते । ईश्वरत्वात्स्वतंत्रत्वात् । किंनामस्वसामर्थ्येनैवसर्वसृष्ट्यादिकर्तेश्वरः । अतोनसर्वस्यतदधीनत्वाभावइतिभावेनाह ॥ अपांगेति ॥ ३०४ ॥

लोकेसर्वस्यस्वतंत्रबहुसाधनसापेक्षत्वेनभगवतस्तदभावोनयुक्तइत्यतआह ॥ परतंत्रइति ॥ परमात्मस्वातंत्र्यस्यानंतप्रमाण प्रमितत्वेन सृष्ट्यादावितरापेक्षांगीकारेतद्व्याघातात् । अपिचाधिष्ठानोपादानादेःसाधनत्वंयदधीनं सएवस्वकर्तृकक्रियायां तद्विनानसमर्थइतिनहियुक्तं । तथात्वेप्रेक्षावतास्वसामर्थ्यानापादकस्यवस्तुनःसाधनत्वप्रदानानुपपत्तेः । नच तर्हिनियमेन सर्वसृष्टौप्रधानकालकर्मजीवज्ञानेच्छाप्रयत्नमृत्पिंडादिस्वीकारानुपपत्तिरितिवाच्यं । स्वाधीनसत्तासाधनत्वादिकस्यापि सृष्ट्या द्यर्थमैश्वर्येणलीलयैवस्वीकारोपपत्तेरिति । एतादृशलीलातुस्वभावइतिनकश्चिद्दोषः । उक्तंसुधायां "शक्तस्यापीश्वरस्यत

सर्वत्रसर्वकृच्चापिनचसर्वमपेक्षते । परतंत्रोह्यपेक्षेतस्वतंत्रःकिमपेक्षते ॥ ३०५ ॥

साधनानांसाधनत्वंयतःकिंतस्यसाधनैः । तथापिसाधनैःसृष्टिर्महैश्वर्यप्रकाशिका ॥ ३०६ ॥

न्नियमानुसरणेइच्छाकुतइतिचेत् किंकारणंपृच्छसि उतज्ञापकं । आद्येस्वभावोयमितिवदामः । द्वितीयेतुश्रुतिप्रसिद्धेरि तीति । तदेतदुक्तंचंद्रिकायां "स्वतंत्रसाधनापेक्षालोकेऽशक्तिनिबंधना । ईश्वरस्यत्वसामर्थ्यंनकुत्रापीश्वरत्वतः । द्रव्य स्यकर्मकालादेःश्रूयतेचेशतंत्रता । स्वाधीनसाधनादानंत्वीशस्यनविरुध्यते । प्रमितत्वाच्चलीलात्वादीशत्वाघातकत्वतः । लीलयादंडमालंब्यगच्छन्किंपंगुतांव्रजेत्"इति ॥ ३०५ ॥ ३०६ ॥ ननुतथापिनब्रह्मकर्तृकासृष्टिरुपपद्यते । तथाहि । सृष्ट्या दावीश्वरस्यप्रयोजनमस्ति नवा । आद्येयत्प्रयोजनार्थंसृष्ट्यादि तदूनत्वादपूर्णता । अपूर्णस्येशत्वानुपपत्तेरसृष्टिः । नद्वितीयः ।

प्रयोजनानुद्देशप्रवृत्त्यनुपपत्तेः । नचाग्नेरूर्ध्वज्वलनादाविवस्वभावादेवप्रवृत्तिः । चेतनस्यप्रयोजनोद्देशमंतराप्रवृत्त्यदर्शनात् । मत्तस्यनृत्तगानादौप्रयोजनाभावेपिप्रवृत्तिर्दृश्यतइतिचेत् प्रेक्षावच्चेतनत्वस्यैवहेतुत्वेनविवक्षितत्वात् । नचप्रेक्षावत्त्वेपिदययाप्रवृत्तिर्दृश्यतइतिवाच्यं । दयायाश्चसुकृतादिप्रयोजनसापेक्षत्वेन ईश्वरेदयासाध्यफलाभावात् । आप्तकामत्वान्नतस्यप्रयोजनोद्देशइतिचेत् अतएवनप्रवृत्तिरितिवदामः । प्रयोजनमनुद्दिश्येतिन्यायात् । अतउभयथापिनसृष्ट्यादिकर्तृत्वंविष्णोर्युक्तमित्यतो "नप्रयोजनवत्त्वा"दित्यधिकरणतात्पर्यमाह ॥ नप्रयोजनवत्त्वेनेति ॥ अयमाशयः । नप्रयोजनो

नप्रयोजनवत्त्वेनजगत्सृष्ट्यादिकंहरेः । किंतुकेवललीलैवलीलास्वाभाविकीचसा ॥ ३०७ ॥

सुखोद्रेकादनायासात्कृपयाचप्रवर्तते । सृष्ट्यादौनस्वभावादौफलंकिंचिदपेक्ष्यते ॥ ३०८ ॥

द्देशेनसृष्ट्यादिराप्तकामत्वात् । किंनाम केवललीलयैव लीलापिनोद्देश्या । निर्दोषत्वेनालस्याद्यभावात् । अपितुस्वाभाविकी । प्रेक्षापूर्वकत्वान्नाग्निज्वलनमत्तादिप्रवृत्तिवत् । तथाच स्वाभाविकेनिमेषचलने गानव्याख्यानादिकालीनशिरोहस्तादिचलनादावपिप्रेक्षावत्त्वेनसंमतानांनप्रयोजनोद्देशोदृष्टइष्टोवा । तदुक्तंचंद्रिकायां "अस्वभावप्रवृत्तौतुप्राज्ञोप्याकांक्षतेफलं । स्वाभाविकानिमेषाद्यानह्युद्दिष्टप्रयोजना"इति । तद्वद्धरेरपिप्रेक्षावतःस्वभावादेवप्रयोजनानुद्देशेनैवसृष्ट्यादिलीलाप्रवृत्तिरुपपद्यते । किंच आनंदोद्रेकेणप्रवृत्तिरिति "तद्धेतुव्यपदेशाच्चे"त्यादौसमर्थितं । तादृशप्रवृत्तौनफलापेक्षा ।

अतएव सुखदुःखोद्रेकनिमित्तकहसितरोदनादिप्रवृत्तौकारणमेवपृच्छति । नप्रयोजनं । अपिचातिप्रयत्नसाध्येष्वेवफलापेक्षा । नत्वनायाससाध्यस्वांगुल्यग्रचालनादौ । अतएवांगुल्यग्रचालनादौप्रयोजनाप्रश्नः । प्रश्नेपितूष्णीमेवेतिसमाधानं । ईश्वरस्यसृष्ट्यादिकंत्वनायाससाध्यं । "इच्छामात्रंप्रभोःसृष्टि"रित्यादेः । अपिचास्तिपरप्रयोजनं । स्वस्यतुदययाप्रवृत्तिः । नच दयासाध्यप्रयोजनाभावान्नदयेतिवाच्यं । निरुपाधिकदयास्वभावेप्रयोजनानपेक्षणात् । उक्तंचचंद्रिकायां "वत्सादिरिववत्सादौदययैवप्रवर्तते"इति । तथाचनकाप्यनुपपत्तिरिति ॥ ३०७ ॥ ३०८ ॥ ननुयदुक्तंपरप्रयोजनायसृष्टिरिति तदयुक्तं । तथासतिवैषम्यनैर्घृण्यापातात् । तथाहि । ईश्वरःकांश्चित्सुखयन्कांश्चिद्दुःखयन् नसर्वत्रसमः । अपितुविषमः ।

उच्चावचजगत्सृष्टौनवैषम्यादिकंहरेः । अनादियोग्यताकर्मसापेक्षोहिकरोत्यजः ॥ ३०९ ॥

तथा निरयेपतितानतिबाधविह्वलानाक्रंदतोऽनन्यनाथाननुज्जिहीर्षुर्निर्घृणश्चस्यात् । धर्मादिनिरपेक्षतयासुखादिदानेचधर्मादेःसुखादिसाधनताबोधकवेदस्याप्रामाण्यंचभवेत् । नच शुभाशुभतत्तत्कर्माणिनिरीक्ष्यतदानुकूल्येनफलंददाति नविपर्ययेणेत्यतोनोक्तदोषइतिवाच्यं । यदपेक्षयाऽसौफलंददाति तस्यापिकर्मणः "एषह्येवसाधुकर्मकारयती"त्यादिश्रुत्या ईश्वरकारितत्वात् । ननु तस्यापिसाधुकर्मादेस्तादृशंपूर्वकर्मकारणं तस्यापिपूर्वकर्मेत्यनादिकर्मसंतानसापेक्षतयावैषम्यादिदोषपरिहारइतिचेन्न । सर्वस्यापिकर्मसमुदायस्येशाधीनत्वानभ्युपगमेनतस्येशत्वानुपपत्तेः । अनादिकर्मस्वभावसत्तादेरारंभणाधिकरणन्यायेनेश्वरा

धीनत्वात्तादृशविषमयोग्यत्वादिनियामकतयापिवैषम्यादिदोषतादवस्थ्यमित्यतो "वैषम्यनैर्घृण्ये"त्यधिकरणतात्पर्यमाह ॥ उच्चावचेति ॥ अत्रोक्तंचंद्रिकायां "एवमीश्वरस्यवैषम्यादिदोषमापादयन्प्रष्टव्यः । कथंवैषम्यनैर्घृण्ययोर्दोषत्वं । किंधर्मा धर्मादिकमनपेक्ष्येश्वरस्यसुखदुःखप्रदत्वे धर्मादेःसुखादिहेतुत्वप्रतिपादकवेदाप्रामाण्यापादकतया किंवा तत्सापेक्षत्वेनवेदा प्रामाण्याभावेपि कर्मादेरीश्वराधीनत्वेनतदपेक्षाप्यनपेक्षैवेतीश्वरस्यैव तौ । नाद्यः । कर्माद्यपेक्षांगीकारात् । नद्वितीयः । तत्रापिकिंजीवानामिवप्रत्यवायहेतुतयातौदोषौ किंवा "समोऽहंसर्वभूतेष्वि"ति शास्त्राप्रामाण्यापादकतया । अथवा सर्वसमत्वरूपसद्गुणविरोधित्वेननीचतापादकतया । नाद्यः । ईश्वरस्यविधिनिषेधातीतत्वेनप्रत्यवायाभावात् । नद्वितीयः । अनादिसिद्धयोग्यतानुसारित्वस्यैवतत्रसमशब्दार्थत्वात् । तदुक्तंसप्तमतात्पर्ये "सेवांयोग्यातिरेकेणस्वानामपिनदास्यति । अपराधातिरेकेणनान्यस्यातःसमोहरिः । यस्ययत्रयथावृत्तिर्विहितावर्तनंतथा । ज्ञानस्यापिसमत्वंतद्विषमत्वमतोन्यथे"ति । अतएवयमस्यसमवर्तित्वप्रसिद्धिः । चंद्रिकाश्लोकश्च "नहिमातृकलत्रादौगुरुशिष्यादिकेपिच । विशिष्टपुल्कसादौचसम धीःसमउच्यते"इति । तृतीयेपि तत्रतत्रविविधविषमतत्तत्स्वभावकरणाद्वैषम्यं । किंवाऽनादिसिद्धतत्तत्स्वभावो लंघनात् । यद्वा अनादिसिद्धतत्तत्स्वभावस्यान्यथाकरणेशक्तत्वेपि तदकरणात् । अथवा अनादितत्तद्विषमस्वभाव नियमनात् । नाद्यः । चेतनस्वभावस्यानादित्वेनकरणाभावात् । नद्वितीयः । ईश्वरस्यतत्तत्स्वभावानुसारेणैवफल प्रदत्वेनतदुल्लंघनाभावात् । नापितृतीयः । तस्यवैषम्यावैषम्यानापादकत्वात् । श्लोकश्च "स्वभावमन्यथाकर्तुंयःशक्तो

प्यनुवर्तते । नासौलोकेपिविषमोनवानिर्घृणउच्यते । समर्थोपिहिहंसादीन्काकीकर्तुंहियोमुनिः । नकाकीकुरुतेऽयंकिं लोकेविषमउच्यत"इति । नापिचतुर्थः । स्वभावनियामकत्वस्य निरतिशयस्वातंत्र्यरूपमहागुणापादकत्वेननीचताना पादकत्वात् । नचदययास्वभावस्याप्यन्यथाकरणं । तादृशदयायागुणत्वाभावेनेश्वरेऽनपेक्षितत्वादिति । नहीश्वरोदया लुत्वाद्दुःखंसुखमधर्मंधर्ममित्यादिकुर्यात् । खिद्यतेचलौकिकदयालुवत्प्राणिनांदुःखदर्शनेन । उक्तंहितात्पर्ये "विषमत्वंतु दोषायशुभाशुभविपर्यये । शुभाशुभनियंतृत्वंनदोषोगुणएवस"इति । "नविष्णोर्विषमत्वंतुयोग्यतापेक्षयाक्वचित् । योग्य

योग्यतादेस्तन्नियत्यानैवाशंक्यंपुनश्चतत् । योग्यताद्यनुसारित्वमेवसाम्यंनचान्यथा ॥३१०॥

यद्यप्येतज्जगत्सर्वंसूक्ष्मकालेप्यनंतधा । प्रवर्ततेतथाप्येतत्कर्तुर्विष्णोर्नहिश्रमः ॥

तायास्तन्नियत्याविषमत्वंक्वचिद्भवे"दिति । अनुव्याख्याने "वैषम्यंनिर्घृणत्वंचवेदाप्रामाण्यकारणं । नांगीकार्यमतोन्यत्तु नवैषम्यादिनामक"मिति ॥ ३०९ ॥ ३१० ॥ ननुगुणदोषयोरन्यत्रसामानाधिकरण्यनियमात् । गुणित्वादीश्वरेदोषित्वंच स्यादित्यतः "सर्वधर्मोपपत्तेश्चे"तिसूत्रतात्पर्यंवदन् प्रतिक्षणमनंतवैलक्षण्योपेतानंतजगत्सृष्ट्यादिकर्तुरीश्वरस्यनदोषलेशशंका वकाशोस्ति । ब्रह्मादिचिंत्याचिंत्यलोकविरुद्धाविरुद्धनिखिलगुणगणपरिपूर्णतया "गुणाःश्रुताः" इत्यादिनिखिलनिगमात्रगम्य त्वादित्यभिप्रेत्याह ॥ यद्यपीति ॥ "क्षणादयःक्षणिकास्तद्विशेषाःइत्यादिनिर्णये, प्रतिक्षणवैचित्र्यंचेतिभाष्ये, सुधायांचव्युत्पा

दितरीत्याध्येयं" । प्रपंचितंचैतत्प्रागेवेति ॥३११॥ कैमुत्यन्यायेनाप्युक्तार्थंसाधयन्नभूतोपमयादोषाभावंगुणपूर्तिंचदर्शयति ॥ अतीतेति ॥ एकत्र एकदा एकदेशेचेत्यर्थः । अतीतानागतवर्तमानाशेषजगदेकबुद्ध्युपारूढंकृत्वा तदपेक्षयाप्यनंतानंतम प्येकीकृत्य पुनस्तदपेक्षयाप्यनंतानंतमित्यादिप्रकारेणोहितंजगत्परमाण्वनंतांशैकदेशेसंबंधराहित्येनैवपृथक्पृथक्स्थापयित्वा परमाणुकालानंतांशैकदेशांशकालेबहुकालावस्थायिपदार्थवदेवक्रमेणसृष्ट्यादिकंकर्तुमपांगलवमात्रेणसमर्थइत्यर्थः ॥ ३१२ ॥

नमोहोनचाचिंतावाउदारगुणवारिधेः ॥ ३११ ॥ अतीतानागतंसर्वंजगदेकत्रसंगतं ।
यदिस्याच्चमहानंतंततोपिचपुनःपुनः ॥ ३१२ ॥ सूक्ष्मसूक्ष्मतमेकालेदेशेसूक्ष्मतमेपिच ।
पृथक्पृथक्क्रमात्स्रष्टुंसंस्थापयितुमंजसा । स्वशक्त्येकांशलेशस्याप्यंशांशेनप्रभुःस्वयं ॥३१३॥
ब्रह्मापिनविजानातिसम्यक्तद्धिश्वकर्तृतां । किमन्येदेवमुन्याद्याःकुतोवामानुषोत्तमाः ।
यच्चात्ययुक्तंस्मर्तुंवाशक्तःकर्तुमतःपरः ॥ ३१४ ॥ अनंतानंतरूपाणिकृत्वापृथगनंतशः ।

॥ ३१३ ॥ तदेतदपि "पाकशासनविक्रम"इतिवत्तत्प्रत्यायनार्थमेव । वस्तुतस्तुसृष्ट्यादिकर्तृत्वादिमाहात्म्यंसुरवरनिकरैरपि नमनसासमधिगंतुंशक्यते । रमादिभिरपिकर्तुंस्मर्तुमशक्यं । युक्त्यगोचरस्वपराखिलविषयकमहाकार्यकर्तृत्वादित्याशयेनाह ॥ ब्रह्मापीति ॥ यच्चेति ॥ उक्तंच "शक्यानिनैवमनसापिहितानिकर्तुंब्रह्मेशशेषपुरुहूतमुखैरशेषैः"इति ॥३१४॥ नताद्धिचित्रंभग

वतीत्याह ॥ अनंतेति ॥ अनंतदेशकालाधिकव्याप्त्यादिमंति वाहनभूषणस्रक्चंदनवनिताद्यात्मकानि विविधान्यनंतानंता
निरूपाणिकृत्वा स्वयमेवपितृपुत्रपितृव्यभ्रातृव्यभ्रातृसखिसंबंधिदुहितृभगिन्यादिनानाभावेनालौकिकनानाविधविचित्रविनो
देनत्वरयैवयथोपजोषमतिसूक्ष्मतमकालमात्रएवकुर्वतोऽचिंत्यशक्तेर्भगवतःसूक्ष्मकालेस्वापेक्षयात्यल्पतमजगन्नियमनशक्तिर्नह्या
श्चर्यतमेतिभावः ॥ ३१५ ॥ ३१६ ॥ एतेनान्यदपिलब्धमित्याह ॥ सूक्ष्मेति ॥ अयमाशयः । सहस्रयोजनादिपरिमितप
दार्थस्य तावत्परिमितदेशएवावस्थितिः नत्वेकयोजनादिमात्रपरिमिताल्पदेशे। नापिकोटियोजनादिपरिमिताधिकदेशे । कुत

**कर्माणिकुर्वतश्चापिचित्रक्रीड्यचपरस्परं ॥ ३१५ ॥ सूक्ष्मसूक्ष्मतमेकालेप्युपसंहरतोहरेः ।**
**चित्रंस्वापेक्षयात्यल्पजगन्नियमनंनहि ॥ ३१६ ॥ सूक्ष्मकालातिगोह्येवंमहांश्चैवस्वसत्तया ।**

एतत् । देशस्यस्वसमपरिमाणमात्रवत्पदार्थाधारत्वंहिस्वभावः । नीचाधिकपरिमाणवत्पदार्थानाधारत्वंच । तथाचाल्पा
दिदेशोयत्पदार्थाव्यवधायकः यत्पदार्थोदेशादिव्यवधानेस्वयमशक्तस्तादृशस्यैववस्तुनोल्पस्यमहादेशे महतोवाऽल्पदेशेऽव
स्थानंनयुज्यते । नतुदेशादिस्वरूपसत्तास्वभावादिकंयदधीनं यश्चसर्वत्राप्रतिबद्धशक्तिमानीश्वरः तस्यनयुज्यतइतियुक्तं ।
किंनाम देशस्याव्यवधायकत्वादीश्वरःस्वशक्त्यैवाणुप्रदेशेमहापदार्थान्पृथक्पृथगवस्थापयितुं महाप्रदेशेप्यणुपदार्थंसर्वसंयो
गेनावस्थापयितुंसमर्थएव । स्वाधीनशक्त्यादिमद्वस्तु नहिस्वस्यैवप्रतिबंधकमितियुक्तं । दृष्टाहिपार्थदिग्विजयार्जितामहांतो

रत्नपर्वताः । विश्वकर्मकृतत्वात्तुपुरस्याल्पेपिचस्थले । अंतर्गतास्तेगिरयः, किमुतपरमेश्वरोमहतोप्यतिमहीयसारूपेणात्यल्प देशेवर्ततइति । यत्रयत्रप्रमितंवैकुंठादौद्वादशकोटियोजनादिपरिमितेप्रतिकल्पंमुच्यमानानामनंतानामवस्थानादिकंतत्रत ज्ज्ञेयं । नान्यत्र । परंतुसर्वत्रैताद्दशसामर्थ्यमस्तीत्येव । एवंसूक्ष्मदेशमतिक्रम्यवर्तते । एवंकालस्वरूपसत्तादेस्तत्तत्पदार्थ सत्तानिर्वाहकत्वादितत्स्वभावस्यापिभगवदधीनतया कालस्यापिभगवत्प्रवृत्त्यव्यवधायकत्वेन सहस्रवर्षावस्थायितयातावत्स त्ताकपदार्थमप्येकाब्दमात्रेवस्थापयितुमेकाब्दमात्रसत्ताकंतावत्सत्तयैवसहस्रसंवत्सरेष्ववस्थापयितुंचशक्तः । तथास्वयमपिब्र ह्मकल्पदिनकल्पत्रयोदशसहस्रसंवत्सरषड्डुत्तरशतसंवत्सरादिकालेव्यक्ततयाविद्यमानानि पुरुषवराहरामकृष्णादिरूपाणिक्षणा

एवंदेशातिगःसम्यक्क्षेमहिम्निप्रतिष्ठितः ॥ ३१७ ॥

नंतांशेष्वंशांशमात्रकालेकालानपेक्षस्वरूपभूतसत्तयैवसम्यग्वर्तयतीतिसूक्ष्मकालातिगः । "सर्वतःप्रकृतिःसूक्ष्मे"तिन्यायेनापि कालदेशसूक्ष्मातिगत्वंध्येयं । यद्यपिभगवतोदेशपरिच्छेदएवविद्यते नकालपरिच्छेदः । "तथापिदेशतस्तस्यपरिच्छेदो पिविद्यते । गुणतःकालतश्चैवपरिच्छेदोनकुत्रचिदि"ति तृतीयतात्पर्योक्तेः । तथापिजनप्रत्यक्षगोचरतारूपव्यक्तेःकादाचि त्कत्वमभिप्रेत्यविवक्षाविशेषेणस्वल्पकालावस्थानमुक्तं । नतुकालापरिच्छेदाभिप्रायेण । तथात्वेऽनित्यतापत्तेः । देशपरिच्छेदे अण्वादिपरिमाणवत्त्वंस्यादितिचेत् भवतु । अणुपरिमाणत्वादेरनित्यतावद्दोषत्वाभावात् । "परिच्छेदस्तथाव्याप्तिरेकरूपे पियुज्यत"इत्युक्तेःकेवलपरिच्छेदानंगीकाराच्च । इयांस्तुविशेषः । यद्यपिदेशसार्वत्रिकत्वंदेशगतं । कालनित्यत्वंकालगतं ।

तथापिनतयोःस्वाधारत्वंमुख्यं । किंतुतद्गतंस्वाधारत्वमीशाधीनमेव । मुख्याधारस्त्वीशएव । तयोरीशस्तुस्वयमनन्याधारः । "सभगवःकस्मिन्प्रतिष्ठितइतिस्वेमहिम्नी"तिछंदोगश्रुतेः । ईशोदेशश्चकालश्चस्वगताएवसर्वदा । नचैवंतस्यनित्यानित्यत्वाभ्युपगमोयुज्यतइति । महादेशातिगत्वंतु महादेशेप्यल्पपरिमाणेनावस्थितिः । महतामपिरत्नपर्वतानामिंद्रप्रस्थाल्पदेशावस्थानमिव निरवधिकमहानंतानंतपरिमाणवतोभगवतोऽनंताव्याकृताकाशे तदेकदेशांशप्रदेशैकदेशे "यावान्वाअयमाकाशस्तावानेवहृदयाकाश"इत्युक्तरीत्याहृदयदहरादौचावस्थितिः । किंच देशस्यदेशस्थत्वं परममहत्परिमाणोपेतत्वंयथा तद्वदीशस्य देशातिक्रांतपरिमाणवत्त्वंच परममहत्परिमाणवद्देशापेक्षयानंतानंताधिकातिपरममहत्परिमाणवतिस्वस्मिन्नवस्थितत्वं । भगवत्परिमाणमध्येदेशादिपरिमाणमव्याकृताकाशमध्येपरमाण्वनंतांशवत् । एतच्चबुद्ध्यारोहार्थमुक्तं । ततोप्यतिवैलक्षण्यंद्रष्टव्यं । अव्याकृतादधिकपरिमाणं ब्रह्म कुत्रास्तीतिचेत् देशोपिकुत्रेतिपृच्छामः । स्वस्मिन्नितिचेत् ईशोपिस्वस्मिन्नितिवदामः । "तदाधारौचतद्गता"वित्यनुव्याख्यानेकुत्रतत्रेत्यादयःशब्दाःदेशएवगृहीतसंगतिकादेशमेवबोधयंति नेशमितिचेत् न । लौकिकव्युत्पत्त्याऽलौकिकपरमेश्वरतिरस्कारस्यान्याय्यत्वात् । वस्तुतस्तुसर्वेपिशब्दाःप्रवृत्तिनिमित्तपुरस्कारेणहरावेववर्तंते । अन्यत्रतु समाकर्षाधिकरणन्यायेनभगवदधिष्ठानतया तदधीनाल्पप्रवृत्तिनिमित्तेनचशब्दानांप्रवृत्तिरितिशास्त्रेनिर्णीतत्वेन कुत्रेत्यादयःशब्दाःमुख्यार्थंभगवंतममुख्यार्थंदेशादिकंचबोधयंति । यत्रत्वमुख्यार्थस्यनावकाशस्तत्रकेवलेश्वरमेवप्रत्याययंतीत्यंगीकर्तव्यं । तथाचनोक्तदोषइति । एवंमहाकालातिगत्वंचाल्पकालेमहासत्तावतोवस्थितिरित्यादि । अपिच

कालस्यकालगत्वंनाम यथानित्यसत्तावत्त्वं एवमीशस्यकालातिक्रांतत्वं परममहासत्तावत्कालापेक्षयानंतानंताधिकातिपरम महत्कालिकजातीयपरिमाणोपेतानन्याधीनस्वरूपसत्तोपेतत्वं । भगवत्स्वरूपसत्तामध्येपरममहत्परिमाणोपेतयावत्कालस्वरूप सत्ताक्षणानंतांशभूतकालसत्तैवाल्पा । उक्तरीत्याऽतिवैलक्षण्यंचध्येयं । कालाधिकसत्तावानीश्वरःकदास्तीतिपृष्टे किमु त्तरमितिचेत् कालोपिकदेतिपृच्छामः । स्वस्मिन्निितिचेत्समःसमाधिः । "स्वेमहिम्नी"तिश्रुतेरेवमप्यर्थकत्वात् । अन्यत्पूर्व वद्द्रष्टव्यं ॥ ३१७ ॥ नन्वेवंदेशकालापेक्षयायदीशस्याधिकमहत्त्वं तर्हिदेशादिमहत्त्वंपरिमितंप्राप्तमित्यतआह ॥ तथापीति ॥

तथापिचिंताविगतंमहत्त्वंदेशकालयोः ॥३१८॥ पूर्णस्तत्रहिसर्वत्रक्रीडतेरमयासह । देशकालादिकंसर्वंनतस्य व्यवधायकं॥३१९॥ अन्यभावाभावकालेदेशेचपरमोहरिः। विद्यमानाविद्यमानशक्तिमानात्मयोगतः॥३२०॥

चित्तादिगतं इयत्ताविषयज्ञानगोचरं । यथारमायाअनंतानंतगुणत्वे परमेश्वरस्यततोधिकगुणत्वं नरमागुणानंत्यविरोधि । किंत्वानंत्यएवव्यत्यासः । तथा भगवतोदेशकालातिक्रांतत्वं नदेशकालपरममहत्त्वविरोधि । किंतुसावधिकपरममहत्त्वं देशादेः । निरवधिकपरममहत्त्वंहरेरितिभावः ॥ ३१८ ॥ प्रसंगाद्देशकालभोक्तृत्वमाह ॥ पूर्णइति ॥ अणुमध्यममहत्परिमा णाद्यनंतरूपोपि नानाजीवजडाद्यंतर्गतोपि सर्वदासर्वत्रसर्वप्रकारेणपूर्णःसन्क्रीडतइत्यर्थः । तदुपपादयति ॥ देशेति ॥ तत्रयुक्तिमाह ॥ नेति ॥ ३१९ ॥ देशकालाद्यव्यवधानेनलब्धमहिमानमुपपादयति ॥ अन्येति ॥ एतदर्थस्त्वस्मदाचार्य

कृतद्वितीयतात्पर्यव्याख्यानादवगंतव्यः ॥ ३२० ॥ भगवन्महिमांतरमाह ॥ सर्वतइति ॥ नन्वपर्यवसितिश्चाणौ इत्युक्तन्यायेनबुद्ध्यापरमाण्वंशविभागेसतिपरमाण्वंशानामप्यणुत्वपर्यवसानाभावेनावधीकर्तुमशक्यत्वात्कथंरमायाःसर्वतःसूक्ष्मत्वं हरेःसर्वतोपिसूक्ष्मतमत्वमितिचेत्सत्यं । मेरुसिद्धार्थयोरप्यपर्यवसितांशत्वेपि मेरुंदशधाविभज्यपुनस्तदंशंदशधापुनस्तदंशंदशधेत्येवंविभागेसति तथासर्षपमपिदशधाकृत्वापुनस्तदंशंदशधाकृत्वापुनस्तदंशंचदशधेतिविभागे मेरुसर्षपांशानामपर्यवसानेसमानेपि मेर्वंशाणुत्वापेक्षयासिद्धार्थाण्वंशानामत्यणुत्वमस्ति । कुतएतदितिचेत् वस्तुतोमेरोस्सिद्धार्थात्महाद्रव्यत्वात् उभयोर्विभागेमेर्वंशानांसिद्धार्थांशापेक्षयामहत्त्वापर्यवसानात् । तथाप्रकृतेपि परमाण्वंशांशस्य महालक्ष्म्यणुरूपापेक्षयाऽति

सर्वतःप्रकृतिःसूक्ष्माप्रकृतेःपरमेश्वरः। आसीनोदूरंव्रजतिशयानोयातिसर्वतः ॥ ३२१ ॥

महत्त्वात् रमाणुरूपस्यस्वभावतएवातिसूक्ष्मद्रव्यत्वात्सर्वतःसूक्ष्मत्वं । भगवतस्ततोप्यतिसूक्ष्मत्वमितिबुद्ध्याविभज्यावधीकर्तुंशक्यतइति । एतच्चप्रत्यायनार्थमुक्तं । वस्तुतस्तु अव्याकृताकाशादिपरममहत्पदार्थापेक्षयाऽपर्यवसितपरमाण्वंशानांयादृशमणुत्वं नतावन्मात्रं तदपेक्षयाऽत्यंताणुभूतरमारूपस्य । नापि तादृशरमाणुरूपापेक्षयाभगवद्गुणरूपस्य परमाण्वंशरमाणुरूपयोर्यादृशोव्यत्यासोनतादृशः । किंतुबुध्यनारूढंशब्दागोचरंरमादीनामपिमनोवाचामगोचरमत्यंताणुत्वमितिध्येयं । महतोमहीयसएतादृशाणुत्वमचिंत्यशक्तिनिर्वाह्यमितिभावः । विरुद्धधर्मांतरेकाठकवाक्यंपठति ॥ आसीनइति ॥ "अचिं

त्यशक्तितश्चैवसर्वगत्वाच्चतत्परं । द्रवतोत्येतिसंतिष्ठत्"इतीशावास्यभाष्येणैतदुपपादनीयं ॥ ३२१ ॥ शृणोतीत्यादिकं सर्पघूकादौविशकलिततयादृष्टं । "अचक्षुःश्रोत्रंतदपाणिपाद"मित्यादिप्रमाणप्रमितमितिभावः । अचक्षुःश्रोत्रमित्यस्यार्थ स्त्वाथर्वणखंडार्थादस्मत्कृतादवगंतव्यः । तथाहि । अचक्षुरित्यादेःप्राकृतचक्षुरादिरहितइत्यर्थः । रूपमात्रग्राहकंचक्षुः । शब्दमात्रग्राहकंश्रोत्रं। तत्रचक्षूरूपमिवशब्दस्पर्शादिकमपिगृह्णातीतिरूपादिमात्रग्राहकत्वाभावादचक्षुरित्यादिरप्यर्थः ॥३२२॥ सर्वैंद्रियैरिति ॥ प्रत्येकंसर्वेंद्रियैरपियावदिंद्रियकार्याणिक्रियंते । लोकवैलक्षण्यान्नक्रियंतेचेत्यर्थः । एवंहस्तपादांगुल्याद्यव

शृणोतिचक्षुषादेवःश्रोत्रेणचविचक्षते । अपाणिरपिचादत्तेह्यपादोव्रजतिद्रुतं ॥३२२॥

एवंसर्वेंद्रियैःसर्वंकरोतिनकरोतिच । दूराद्दूरतरश्चायमंतिकादंतिकश्चसः ॥

गुरोर्गुरुतरश्चैवलघीयांश्चलघोरपि ॥३२३॥ अनंतरूपावयवरोमकूपेंद्रियादिभिः ।

यवैरपिचक्षुरादिकार्याणिक्रियंतइत्यर्थः ॥ दूरादिति ॥ "दूराद्दूरंयत्तुतदेवांतिकमंतिका"दितिद्वादशस्तुतौव्यक्तमेतत् । व्याप्ति मपेक्ष्यैव अंगुष्ठादिपरिमितस्यैवस्वबिंबादिरूपस्याचिंत्यशक्तिवशेनकोट्यादियोजनात्परदेशाद्यतिक्रम्यस्वेमहिम्न्यवस्थितव्यासरू पेणापिविद्यमानत्वाद्वा दूराद्दूरतरत्वं । स्वांतःस्थितसूक्ष्मदेशाद्यपेक्षयाऽतिसूक्ष्मतमस्वस्वरूपएवावस्थितरूपस्यातिसान्निध्येनाव स्थितेर्वा नानाधिष्ठानगतानांव्यापकानांचरूपाणांसर्वेषांसमस्तजगदंतर्गतत्वाद्वांऽतिकादंतिकत्वंज्ञेयं । गुरोरित्यादिकंस्पष्टं ॥ ३२३ ॥ पृथक्सर्वत्रचस्थितइति । रमानंतरूपगुणादिषु मुक्तामुक्तादिसमस्तजीवेषु देशकालवर्णप्रकृतिमहदादितत्वेषु ब्रह्मां

डांतर्गतभुवनेषु तत्रापिगिरितरुसरित्समुद्रघटपटादिपदार्थ(जाते)मात्रेषुच प्रत्येकंभगवदनंतरूपाणि तदवयवास्तदेकदेशभूतरोमकूपादयः चक्षुरादींद्रियाणिविजातीयानि सर्वेचगुणाःक्रियाःजातिवैशिष्ट्यादयोधर्माः तथासर्वविजातीयारमाद्यवबुद्धास्तदविदिताश्चानंतानंताव्याप्यनियामकतयाभोक्तृत्वादिनायथोपजोषंसर्वदावर्तंतइत्यर्थः ॥ ३२४ ॥ पृथक्सर्वाश्रयइत्युक्तंलेशतउपपादयति ॥ स्वयमेकमिति ॥ रमाब्रह्मादिकं मुक्तामुक्तादिसकलचेतनजातमव्याकृतप्रकृत्यादिकं सकलमपिजगद्रोमकूपेष्वनंतेषुतत्सामर्थ्यात्प्रत्येकमाश्रितंवर्तते । भगवद्रोमकूपाःसर्वेस्वसामर्थ्येनैकमेवजगत्प्रत्येकंस्वांतर्निवेश्यवर्ततइतियावत् ॥ ३२५ ॥

गुणैरपिक्रियाभिश्चधर्मैःसर्वैरपिस्फुटं । पृथक्सर्वाश्रयश्चैवपृथक्सर्वत्रचस्थितः ॥३२४॥

स्वयमेकंचबहुवत्प्रत्येकंरोमकूपगं । रमाब्रह्मादिकंदेशकालवर्णांडपूर्वकं ॥ ३२५ ॥

एवंहिसर्वदादेवसर्वसर्वत्रचस्थितं । चित्रंचित्तातिदूरंतच्चित्प्रकृत्यादिनामपि ॥ ३२६॥

एवमेवातीतानागतंसर्वजगदपिभगवत्सामर्थ्यादेवभगवतोनंतरूपावयवरोमकूपेंद्रियगुणादिषुसर्वत्रप्रत्येकंवर्ततइत्याह ॥ एवमिति ॥ उक्तंचतृतीयतात्पर्ये "शरीराणांबहुत्वेन अतीतानागतैस्तथा । अस्यैवदेवकायेषुप्रतिप्रतिचदर्शनात् । विष्णुसामर्थ्यतोंडानांबहुत्वंनान्यथाभवे"दिति । अस्यार्थः । भगवच्छरीराणांबहुत्वेननिमित्तेनास्यैकस्यैवब्रह्मांडस्य तेषुबहुशरीरेषु विष्णुसामर्थ्यतोऽवस्थितस्यप्रत्येकंज्ञानिनांदर्शनान्निमित्तादंडानांबहुत्वमुच्यतेशास्त्रे । अन्यथानभवेत् अंडानामेवस्वतोबहुत्वंन

भवेत् । अतीतानागतैरंडैर्वाबहुत्वंभवेत् । अतीतानागतानिबहून्यंडानिभगवद्बहुशरीरेपुप्रत्येकंस्थितानीतियावत् । कालव्यवधानाभावात्तत्कालीनमप्यंडादिकंसर्वदाभगवच्छरीरादिपुस्थितमितियावत् । "एकमंडंबहुत्वेनप्रत्येकंरोमकूपगं । ब्रह्माऽपश्यत्तथात्मानंहरेस्तेषुपृथक्पृथ"गितिचोक्तेः । बहुत्वेनेत्यस्याश्रयरोमकूपानांबहुत्वेनेतिवा एकमेवबहुवदितिवार्थः । आत्मानंस्वात्मानंचतेषुरोमकूपेषुपृथगपश्यदिति । स्थानिनएकत्वेपि स्थाननानात्वादिकंपूर्वोक्तं देशकालातिक्रांतत्वमित्यादिकमुक्तं विजातीयविरुद्धानंतमाहात्म्यंच रमादीनांमनोवागगोचरं । तत्रमादृशानांमूकतैवेत्याशयवानाह ॥ चित्रमिति

विरुद्धतमरूपस्यमाहात्म्यंसर्वमद्भुतं । पुनराश्चर्यरूपंचपुनरप्यतिकौतुकं ॥ ३२७ ॥
एवंविधमहानंतमहामाहात्म्यपूर्वकः । स्वस्त्रीरूपेषुदिव्येषुमहाश्चर्यतमेषुच ॥ ३२८ ॥

॥ ३२६ ॥ नकेवलमणुत्वमहत्त्वविरुद्धधर्मजातमात्रमद्भुतं किंनामानंदादीनामपिभगवद्धर्माणांसर्वलोकातिविलक्षणत्वस्यप्रागुपपादितमार्गेणसिद्धत्वाद्युक्त्याद्यसहत्वाच्च सर्वेप्याश्चर्यतमाइतिसादरमाह ॥ विरुद्धेति ॥ ३२७ ॥ इतःपरंभगवद्भोगप्रकारंनिरूपयिष्यन्स्वरूपभूतस्त्रीभोगप्रकारमाह ॥ एवंविधेति ॥ यथाब्रह्मादयःस्वरूपेणनियतपुंस्त्वाः यथावामहालक्ष्म्यादयोनियतस्त्रीत्वाः नतथाभगवान्नियतपुंस्त्वस्त्रीत्वमात्रवान् । किंतुस्वरूपतएवानादितोपिपुंचेतनःस्त्रीचेतनश्च । "नैनंवाचास्त्रियंब्रुवन्, नैनमस्त्रीपुमान्ब्रुवन्, पुमांसंनब्रुवन्नेनंवदन्वदतिकश्चने"त्यादिश्रुतेः ॥ स्त्रीस्वरूपाणि पुमाकाराणीत्यादि ॥

भगवतोयानिरूपाणिस्त्रीरूपाणि तान्येवस्त्रीत्वाविरोधेनैवाचिंत्यशक्त्यापुंरूपाणिभूत्वा तेषुपुंस्त्रीसंस्थानतापन्नरूपांतरेषु वस्तुतःपुरुषाकाररूपांतरेषु रमंते । तथा पुंरूपाण्यपितदविरोधेनस्त्रीरूपाणिभूत्वा स्वात्मसुपुंरूपांतरगतस्त्रीसंस्थानेषुचवस्तुतःस्त्रीरूपेषुरमंते । एकदैवैकस्मिन्नेवसंस्थानेस्त्रीपुरुषोभयाकारेणभोगोभवति । स्वभावतःपुंरूपाणिस्त्रीरूपाणिचान्योन्यंरमंते । तान्येतानिस्त्रीपुंरूपाणि लोकस्त्रीपुरुषेषु बृहतीसहस्रस्वरव्यंजनेषुपुरुषायुःशतसंवत्सराहोरात्रिषुचशरीरगतद्वासप्ततिनाडीसहस्रेषु

दिव्यालंकारसन्माल्यविचित्रांबरधारिषु । महासौंदर्ययुक्तेषुनिर्दोषेषुचसर्वदा ॥ ३२९ ॥
रमतेस्त्रीस्वरूपाणिपुंरूपाणिविधायच । पुमाकाराणिरूपाणिस्त्रीरूपाणिविधायच ॥ ३३० ॥
बृहत्युक्थार्णसूर्यद्युपृथिव्यादिषुसंस्थितः । पुंरूपःप्रमदारूपःस्वरूपेरमतेस्वयं ॥ पुंरेतस्सुस्थितःस्त्रीणां
लोहितेषुचसंस्थितः ॥ ३३१ ॥ यस्मिन्स्वात्मनियुक्तःसरमतेस्त्रीपुमात्मना ।
मुनिगंधर्वपित्राद्यैर्नैतत्प्राप्यंकथंचन ॥ ३३२ ॥

दक्षिणायनोत्तरायणसूर्यरश्मिषु पुंशुक्लस्त्रीलोहितेषु तथाद्युपृथिव्यादिनानाधिष्ठानेषुच नानाविधानि महिदासनारायणादिरूपाणिभूत्वा परस्परंक्रीडंतइतिभावः । तदेतत् "पुंरूपोभगवान्विष्णूरेतसिस्थोद्युमत्प्रभुः"इत्यारभ्य ऐतरेयभाष्येसम्यङ्निरूपितं ॥ ३२८-३३१ ॥ अपिच "सएवार्धनारीनरात्मकोरमते"इत्यैतरेयभाष्यवाक्यंपठति ॥ यस्मिन्निति ॥ अपिचार्ध

नारीनरात्मनारमणप्रकारमाह ॥ अर्धेति ॥ यद्यप्यर्धनारीरूपेक्षीरनीरवदन्योन्यानुप्रवेशेनावस्थानमेव । तथापिवामभागे स्त्रीसंस्थानांशस्य दक्षभागेपुंसंस्थानांशस्यच विशेषव्यक्तिविवक्षया तस्यवामस्थितानिचस्त्रीरूपाणि पुंरूपाण्यास्थितान्यस्यद क्षिणेइति विशिष्योक्तिरितिज्ञेयं ॥ ३३२–३३५ ॥ तद्वैभवमाह ॥ सर्वइति ॥ देवेष्वप्यर्धनारीत्वमुक्तरीत्याघटनीयं । अत

प्राप्नुवंतिसुराःसर्वेतद्रूपंजाज्वलत्सदा । अर्धनारीपुमाकारंतस्यवामस्थितानिच ॥ ३३३ ॥
स्त्रीरूपाणिचसर्वाणिविष्णोरत्यद्भुतानिच । विष्णोर्यानिचपुंरूपाण्यास्थितान्यस्यदक्षिणे ॥३३४॥
तान्यस्यैवतुरूपाणियुज्यंतेऽत्रपरस्परं । एषनारायणोदेवोह्यर्धनारीपुमात्मकः ॥ ३३५ ॥
सर्वेदेवाःसभार्याश्चतंप्राप्यपुरुषोत्तमं । एकीभावंस्वभार्याभिरर्धनारीपुमात्मना ॥ ३३६ ॥
प्राप्यैवोपासतेनित्यंमुक्ताःसंसारसागरात् । मोदंतेचरमंतेचविभागंस्वेच्छयाऽऽप्नुयुः ॥३३७॥
बहुधाचभवंत्येतेस्त्रीपुमात्मपृथक्त्वतः । प्रसादाद्वासुदेवस्यभागैःस्त्रीपुंस्वरूपिणः ॥ ३३८ ॥
यद्यप्येवंमहापूर्णानंदसांद्राकृतिर्हरिः । तथापिसर्वलोकोचमहाशृंगारसागरां ॥

एवैकीभावंस्वभार्याभिरित्युक्तिः । भागैःस्त्रीपुंस्वरूपिणइतिच ॥ ३३६–३३८ ॥ रमाभोगमुपपादयति ॥ यद्यपीति ॥ एवं स्वरमणतया इतरनिरपेक्षत्वेपीतिभावः । तत्रापितद्गतस्वस्त्रीरूपस्यैवस्वरतिदातृत्वं स्वाधीनतयारमायारतिदातृत्वानुपपत्तेः ।

परंतुतस्यैरतिदानार्थमेवकेवलंकृपयातस्यांरमणमित्याशयेनैतरेयभाष्यवाक्यंपठति ॥ रमयेति ॥ किंच आनंदोद्रेकेणैवहरे रमायांरमणप्रवृत्तिः । नह्येवंविधप्रवृत्तेरानंदसाधनत्वंयुज्यते । अतोनरमायारतिदातृत्वमितिभावेनाह ॥ पूर्णेति ॥ हरेःस्व स्त्रीरूपेरमणस्यतदानंदस्यचानादितोपिप्रयोजनाभावापन्नत्वात्तस्यचरमणस्यानंदोद्रेकनिमित्तकत्वेपिभगवच्छक्तिवशेनैवस्वानं दप्रयोजकतायाअपिभावेननचोद्यांतरावकाशः। ननुरमाभोगेनहरे रत्यभावेव्यर्थःसभोगइतिचेन्न। केवलंकृपयालीलयाऽऽनंदो

चिदानंदघनांदिव्यकांतिमद्भूषणोज्वलां । अनंतानंतरूपेणसेवमानांविचित्रधा ॥

महालक्ष्मींरमयतेलीलयाकृपयाहरिः । रमयारममाणोपितत्स्थैनैवस्त्रियात्मना ॥

रमतेनान्यतःक्वापिरतिर्विष्णोःपरात्मनः ॥ ३३९ ॥ रमायारमणंतस्माद्रमायारतिपात्रता ।

नैवास्यारतिदातृत्वंविष्णोर्नह्यन्यतोरतिः ॥ ३४० ॥ एवंस्त्रीरूपकेवायौमहाशृंगारसागरे ।

दिव्यरत्नोज्वलचित्रभूषणेपरमोज्वले ॥३४१॥ समस्तगुणसंपूर्णसर्वदोषविवर्जिते ।

द्रेकेणचेत्युक्तत्वात् । "आगमिष्यत्सुखंचापितच्चास्त्येवतदापितु । तथाप्यचिंत्यशक्तित्वाज्जातंसुखमितीवचे"तिगीताभाष्योक्त न्यायेनसुखप्राप्तेरंगीकाराच्च । तत्प्राप्तिश्चस्वतएव । नतुरमाधीनतयेत्यविरोधः ॥३३९॥३४०॥ "भूमोपासनयोग्यस्तुसाक्षादे वचतुर्मुखः । सतद्विद्याबलेनैवविष्णुनारतिमाप्नुयात् । तेनैवक्रीडतेनित्यंस्त्रीरूपोमिथुनीभवे"दिति छांदोग्यभाष्यानुसारेणस्त्री

रूपमुख्यप्राणभोगमाह ॥ एवमिति ॥३४१॥३४२॥ रमांतत्रसंनिवेश्येति ॥ तदुक्तंनिर्णये "ऋतेरमांजातुममांगसंगयोग्यांगना नैवसुरालयेपी"ति । रमामित्यस्यरमावेशमित्यर्थः । यद्यपिमुक्तौविरिंचस्य "मुक्तामाला विमुक्तद्रुहिणगणतनुर्नित्यमुक्तस्यकंठे" इत्युक्तन्यायेनमुक्तामालादिवत्स्वरूपचैतन्यस्यैवयोषिदाकारेणागंतुकविकारविशेषरूपपरिणामप्राप्तिस्तादृशतात्कालिकावांतर योग्यताचांगीक्रियते । तथापीश्वरवन्नस्त्रीपुमात्मकोभयविधचेतनत्वं । स्वरूपेउभयात्मकतानभ्युपगमात् । किंतुमुक्तौकौस्तु भादिरूपत्वेपिपुरुषाकारतानैयत्यवत्स्तनकेशाद्युपेतस्त्र्याकार( त्वस्यकेवलकामरूपतांगीकारात् )ताव्यक्तिरनादिनियतेतिननिय

क्रुपयापरमानंदःक्रीडतेऽतिमुदाहरिः ॥ ३४२ ॥ स्वस्त्रीरूपंरमांतत्रसंनिवेश्यमहापुमान् ।
रमतेजांबवत्याद्यास्वेवंज्ञेयं(मुमुक्षु)बुभूषुभिः ॥३४३॥ भुंक्तेस्वरूपभूतांस्तुविविधान्विषयान्शुभान् ।
भक्ष्यभोज्यफलक्षीरस्रक्चंदनमुखानपि ॥३४४॥ अनंतेंद्रियसंभोग्यानतर्क्यांश्चरमादिभिः ।

तपुंचेतनत्वविरोधइति । विवरिष्यतेचैतन्मुक्तिप्रकरणे । लीलयास्त्र्याकारकाचिद्देहस्वीकारइत्येके ॥३४३॥ इदानींस्वरूपभूत विषयानुभवप्रकारमाह ॥ भुंक्तइत्यादिना ॥ अनंतेंद्रियसंभोग्यानित्यस्यायमभिप्रायः । यथालोकेपरस्परविलक्षणरूप रसादिविषयानुभवसाधनानि पंच बाह्येंद्रियाणिवर्तंते । तथा चक्षुरादिपंचेंद्रियविषयातिरिक्तानि प्रसिद्धान्नफलस्रक्चंदनगान वनितादिविषयेभ्योत्यंतविजातीयानि अलौकिकशब्दवाच्यानि रमादिसकलमनोवागगोचराण्यप्यनंतानंतानि परस्परसजातीय

विजातीयानिच एकैकजातीयत्वेपिरसजातीयेष्वेव विशदस्थिरतीक्ष्णनिर्ह्रादादिवैलक्षण्यवदवांतरानंतवैलक्षण्योपेतानिभोग्यानिवर्तंते । ततस्तदनुभवसाधनभूतेंद्रियाणिचोक्तरीत्याविविधविजातीयान्यनंतानंतानिसंतीति ॥ ३४४ ॥ ३४५ ॥ गंधाद्याकृतिरित्यादिशब्देनविजातीयेंद्रियभोग्यग्रहणं । यद्यपिभगवान्सर्वेंद्रियभोग्यशब्दस्पर्शरूपरसाद्यात्मकशिरःपाण्याद्याकृतिः । तथापिफलपुष्पादिरिवरसगंधादिमान् देवदत्तइवतद्भोक्ताचभवतीत्यर्थः । अतएवरसादीनामेवपरब्रह्मत्वात्तेरसाद्योपितान् रसादीन्गंधादींश्चरमामुक्तामुक्तजडगतान्रसगंधादींश्चभुंजतइत्याह ॥ स्वान्यभोक्तारएवेति ॥ पृथक्पृथगनंताइत्येतदुपपा

अलौकिकमहाश्चर्यरसगंधादिसंयुतान् ॥ ३४५ ॥ शब्दरूपरसस्पर्शगंधाद्याकृतिरीश्वरः ।
तद्वांस्तदत्तितेसर्वेस्वान्यभोक्तारएवहि । पृथक्पृथगनंतास्तेविजातीयाश्चसर्वतः ॥ ३४६ ॥
गुणक्रियादिकान्धर्मान्सर्वानात्मानमेवच । स्वयमेवहरिर्भुंक्तेसर्वःसर्वविलक्षणान् ॥३४७॥
भोज्यंभोक्ताचभोगश्चभोजकश्चैकएवतु । अतोह्येकोभोज्यभोक्तृभोगादिव्यवहारभाक् ॥३४८॥

दितप्रायं ॥ ३४६ ॥ नकेवलंस्वरूपभूतविषयभोगोभगवतः स्वगतगुणक्रियादिभोगःस्वद्रव्यभोगश्चेत्याह ॥ गुणेति ॥ ज्ञानबलादिगुणभोगोनामाऽहमेतादृशज्ञानबलादिमान्सुंदरइत्यादिप्रकारेणज्ञानादिगुणाननुभूयहर्षप्राप्तिरित्यादिविलक्षणप्रकारश्चोह्यः । स्वात्मभोगोप्युक्तरीत्याध्येयः ॥ सर्वइति ॥ गुणरूपक्रियारसादीनांएकैकएवसर्वात्मकःसन्सर्वान्भुंक्तइत्यर्थः ॥३४७॥ तदेतत्पिंडीकृत्याह ॥ भोज्यमिति ॥ भगवतोरसाद्यात्मकत्वं तद्भोक्तृत्वंचएकत्रसर्वगंधइत्यादिनाचिदानंदात्मकसर्वगंधादि

रूपत्वमुच्यते । अन्यत्रतद्भोक्तृत्वमिति "सर्वगंधादिरूपश्चभोक्ताचैषांसदैवही"तिछांदोग्यभाष्येभिहितं ॥ ३४८ ॥ लक्ष्मीस्व रूपभूतविषयाद्यनुभवंलेशतोदर्शयति ॥ महालक्ष्मीति ॥ अनंतरसेत्यादि ॥ लोकेषड्रसाएव । रसास्वरूपेतुलवणाम्लमधु रादिवद्विजातीयानंतरसगंधादयःसंति । तत्राप्यविद्यमानास्ततोप्यतिविजातीयाभगवतीतिध्येयं । रमादिगतसुखभोगोनाम यथारमादीनांस्वस्वरूपेअनेनसुखेनाहंसुखीत्येवमुच्चतालाभः । एवंरमादिगतसुखेनैवपरमात्मन्यपिसाक्षादेवोच्चतालाभः ।

महालक्ष्मीस्वरूपांश्चफलस्रक्कंदनादिकान् । अनंतरससद्गंधस्पर्शशब्दादिकानपि ॥ ३४९ ॥
अनंतेंद्रियसंभोग्यानचिंत्यांश्चसुरेश्वरैः । विलासमंदहासादीन्नृत्तगीतादिकानपि ॥ ३५० ॥
गुणांश्चसज्ज्ञानसुखान्सर्वसृष्ट्यादिकर्तृतां । हरिर्भुंक्तेतथामुक्तविरिंचादिस्वरूपकान् ॥३५१॥
अनंतकौतुकोपेतान्विविधान्विषयांस्तथा । तद्गतान्सुखसज्ज्ञानभक्त्यादीनखिलान्गुणान् ॥३५२॥

"नीचोच्चतैवदुःखादेर्भोगइत्यभिधीयते"इत्युक्तेः । नचैवंरमादिगतसुखानुसंधानेपरब्रह्मणस्तदैक्यंस्यादितिवाच्यं । अन्यगततयै वानुसंधानात् शक्तिविशेषाच्चेतिकेचिदाहुः । वस्तुतस्तुपरमेश्वरोरमादिगतगंधरसादिविषयजातमनुभवति । तत्रयथागंधाद्यनुभ वेनास्मदादाविवतेनसुखलाभस्तेनैवोच्चता तथारमाब्रह्मादिजगद्गतानंदोपिपरमेश्वरस्यविषयतुल्यएव । तेनचस्वस्वरूपसुखला भः । ततश्चोच्चतेत्येवंविषयतयैवभोग्यत्वमानंदस्य । "नीचोच्चतैवे"त्यादितुस्वधर्मभूतानंदानुभवपरं । दृश्यतेलोकेपुत्रादिसुखज्ञा

नेनस्वस्मिन्नपिमोदः । तद्वदीशेपि । सर्वजीवगतजडचेतनात्मकानंदानुभोगःअन्यादृशश्चजगद्गतविषयानुभवसमानयोगक्षेमइति चद्रष्टव्यं ॥३४९–३५२॥ जडविषयानुभवमुपपादयति ॥ तथेति ॥ सारान् तत्तद्वस्तुगतान् । रसादीनतिशयितान्शुभधर्मान् । इतरैर्मनुष्यादिभिर्भगवदर्चकैः ॥३५३॥ रसान्विशदयति ॥ रसेति ॥ नहरेर्लौकिकपुरुषस्येवतटस्थतयारसाद्यादानमपितुरसाद्यभिमानिदेहादौ तदभिमतरसादौ रसादिमत्यबादौचसर्वत्रव्याप्य तदंतर्गतत्वेनतत्तत्स्वभावसत्तादिनियामकत्वेनावस्थितस्य भोगइत्याह ॥ रसादीति ॥ तदुक्तंगीताभाष्ये "रसादीनांरसादित्वेस्वभावत्वेतथैवच । सारत्वेसर्वधर्मेषुविशेषेणापिकारणं ।

तथाखिलजडस्थांश्चसारानत्त्यखिलेश्वरः । साराभिमानिभिर्देवैरर्पितानितरैस्तथा ॥ ३५३ ॥

रसरूपस्पर्शगंधमुखान्शुभतमान्गुणान् । रसादिमानिनांदेहेससर्वत्रव्यवस्थितः ॥ ३५४ ॥

स्वमात्रभोग्यसारांश्चक्रमाल्लक्ष्म्यादिभोग्यकान् । पृथक्पृथग्विधान्सारविशेषान्सर्ववस्तुगान् ॥ ३५५ ॥

सारभोक्ताचसर्वत्रयतोतोजगदीश्वर" इति ॥ ३५४ ॥ तत्तत्सारभोगेविशेषमाह ॥ स्वमात्रेति ॥ अत्रायंनिष्कर्षः । तत्रतत्र कदलीफलादावेकस्मिन्नेववर्ततेऽनेकेरसविशेषाः केवलभगवद्भोग्याः रमाभोग्याः ब्रह्मादिभोग्याः अपरोक्षिभोग्याः तदितर मंदजनभोग्याइति । उक्तंचगीताभाष्ये "स्थूलानशनोक्तेःआहचसूक्ष्माशनंप्रविविक्ताहारतरइवैवभवत्यस्माच्छरीरादात्मनइत्यादिना । स्थूलस्यजीवभोग्यस्याभोगोक्तेः सूक्ष्मभोगस्यचांगीकारादितिभावः । "सूक्ष्माशनेप्रमितेभवेदियंव्यवस्था तदेवकुत

इत्यतआह ॥ आहृत्वेति ॥ गंधादिषुयोजीवेंद्रियागोचरःसारभागस्तस्यभोग"इत्यादिप्रमेयदीपिकायां। ऋग्भाष्येच "तथाचजी वेंद्रियागोचरःकेवलेश्वरैकगोचरोरसगंधादिगतःसारविशेषोस्तीतिज्ञायते। यद्यपिब्रह्मादयःसर्वज्ञत्वात्तमपिरसविशेषमपरोक्षतो जानंत्येव। तथापिनानुभवंति। भगवदेकयोग्यत्वेनस्वायोग्यत्वात्। तादृशेचदेवानांप्रवृत्त्यभावात्। तदुक्तंनिर्णये "अरींद्रधा रिणः। योग्येकर्मण्यायतंश्चापराधीस्यामित्यंजःपश्यमानोमहात्मे"ति। नच जानंतिनानुभवंतीतिविरुद्धमितिवाच्यं। वस्तुतोब्र ह्मादियोग्यजीवराशेःपरमास्तिकस्यभगवत्पूजार्थमाहृतपुष्पगंधादौ मातृदुहित्रादिसौंदर्यदर्शनेतदालिंगनादौ राजादिभिःसह गंतॄणांविचित्रवाद्यादिशब्दादौचापरोक्षानुभवेसत्यपि तद्भोगाभावस्यप्रमितत्वात्। अतस्तद्विषयकश्चित्तवृत्तिविशेषएवभोगइति

चिदानंदघनैःस्वीयैरिंद्रियैर्भुंक्तईश्वरः। स्थूलंभोग्यंचभगवान्भुंक्तेदृष्ट्यादिनाप्रभुः ॥ ३९६ ॥

वक्तव्यं। तथाचब्रह्मादीनांभगवदेकभोग्यसूक्ष्मसारापरोक्षेसत्यपिनतद्भोगइति। एवंब्रह्मादिभोग्यसारेष्ववांतरविशेषः "शुद्धभा गवतानांतुस्वभावापेक्षयैवतु। स्वादुत्वादिविजानीया"दितिगीतातात्पर्यपर्यालोचनया तथोदाहृतऋग्भाष्यानुसारेणच "सुपर्ण शेषरुद्राणांसर्वात्तृत्वंविशेषतः। प्रायेणात्तृत्वमिंद्रादे"रित्यस्यैवमप्यर्थकत्वाच्चनिश्चीयते। एवमपरोक्षानपरोक्षिणोःरसज्ञानविशेष श्च"शुद्धभागवताना"मिति वाक्यबलेन "कणपिण्याकफलीकरणकुल्माषस्थालिपुरीषादीनमृतवदारोचयती"त्यादिनापंचमस्कं धेअपरोक्षज्ञानिनोमनुष्यस्यापिभरतस्यचरमशरीरत्वेनभ्रांतिलेशशून्यस्यकणपिण्याकादीनाममृतवदारोचनप्रतिपादनान्यथा नुपपत्त्याचज्ञायते। तथाचसंत्येवोक्तविधाःसारविशेषाः। तत्रतावद्भगवान्स्वमात्रभोग्यसारान्रमाब्रह्माद्युत्तमभोग्यांश्चसारान्

भुङ्क्ते। यद्यपितत्तत्पदार्थांतर्गततत्तदाकारकस्वरूपभूतरसादेरेवमुख्यतयाभोगः। एवंतत्तद्गतरमास्वरूपरसादेरपितदनंतरंभोगः। तथाप्यैश्वर्यवशात्भक्तजनेष्वनुग्रहायजडपदार्थभोगोपियुज्यते। ननुकथंब्रह्मादिभोग्यसारभोक्तृत्वंहरेरुपपद्यते। "स्थूलान शनोक्ते"रितिजीवभोग्यभोगाभावाभिधानादितिचेन्न। तत्रस्थूलशब्देनास्मदादिमंदजनभोग्यसारस्यैवविवक्षितत्वात्। "जीव भोग्यस्यभोक्तेशोजीवस्तद्भोगभुङ्क्त्वि"ति जीवभोग्यसारभोगस्य स्थूलानशनस्यापि प्रमितत्वेनोभयान्यथानुपपत्त्योत्तमजी वभोग्यात्तृत्वमस्मदादिमंदजनभोग्यानशनंचेत्येवंवक्तव्यत्वात्। वस्तुतोब्रह्मादिभोग्यस्यापिसूक्ष्मत्वाच्च। नन्वबादिभोगानुबद्धो बाह्यभिन्नतद्धर्मभूतरसादिभोगोभगवतोवर्तते किंविशिष्याभिधीयतेरसादेर्भोगइतिचेत्सत्यं। अस्तिह्यबादिसकलपदार्थभो गोभगवतः। "अत्ताचराचरग्रहणा"दित्याद्युक्तेः। तथापि "रसोहमप्सुकौंतेयप्रभाऽस्मिशशिसूर्ययोः"इत्याद्युक्तन्यायेनाबा दिपदार्थेषुतद्धर्मेष्वस्वादिषुचरसादयोतिशयिताः। तथानुभवात् उक्तप्रमाणात् अबादिश्रैष्ठ्यस्यापिरसाद्यधीनत्वाच्च। अतो रसादीनामतिशयितस्वभावत्वेनभगवतोप्यबादिभोगादतिशयेनरसादेर्भोगः। अतोविशिष्योक्तिर्युज्यतएव। तदुक्तंगीता भाष्ये "अबादिभोगोपिततएव। तथाप्यबादिस्वभावानांरसादीनांस्वभावत्वेसारत्वेचसएवनियामकः। नत्वबादिनियमानु बद्धोरसादिस्तत्सारत्वादिश्चेति भोगश्चविशेषतोरसादे"रिति। अबादिभोगादतिशयेनरसादेर्भोगइतिप्रमेयदीपिकायां। ननुरसा दीनामबादिस्वभावत्वेनरसादिभोगमपहायकोयमबादेर्भोगोनामेतिचेत् सत्यं। तथापिसविशेषाभेदांगीकारेणावांतरवैलक्षण्ये नपार्थक्योपपत्तेः। स्नानादिनातृष्णानिवृत्त्यादीनांचसंभवात्। वस्तुतस्तुतद्भोगप्रकारोनास्माभिर्मंदजनैरुत्प्रेक्षितुंशक्यतइति।

एवंब्रह्मादयःस्वस्वनीचभोग्यसाराननुभुंजते । नन्वेवंभगवतोस्मदादिभोग्यंभोक्तृत्वाभावेऽस्मद्भोग्यस्येशाभुक्ततयातदनर्पित भोजनमस्मदादेःस्यात् । सूत्रोक्तंसर्वात्तृत्वंचायुक्तंस्यात् । नचसूत्रेशुभसर्वभोक्तृत्वंविवक्षितं । स्थूलंत्वशुभमितिवाच्यं । "अवतारेषुस्थूलमपिभुङ्क्ते" इतिप्रमेयदीपिकायामवतारेस्थूलभोगोक्तेःस्थूलस्याशुभत्वेभगवद्भोग्यत्वासंभवात् । "नाशुभंसहरिःपिबे" दितिवचनात् । तथाचकथंस्थूलाभोगइति । अत्रोच्यते । रसभोगोह्यनेकविधः । "अदनाघ्राणदृष्ट्याख्यभोगत्रयविभागत" इत्याद्युक्तेः । तथाचजिह्वेंद्रियगोचरेष्वेवकदलीफलादिषु केषांचित्सूक्ष्मसाराणामदनादिसर्वप्रकारकभोगः । तेषामेवकदलीपनसफलादीनांसुरससुगंधमार्दवसुरूपादियुक्तत्वात् । केषांचित्तुस्थूलानामाघ्राणदर्शनस्पर्शनादिरूपोभोगः । अतिस्थूलानांशुभानांदर्शनाद्यन्यतरेणैव । लोकेचराजादिर्नानाविधफलादीनुपादाय तेष्वतिसमीचीनपदार्थान्स्वयंगृहीत्वा तदन्यान्किंचित्समीचीनान्स्वभार्यादिभ्योदत्वा तदतिरिक्तानमात्यादिभ्योददाति । तेसर्वेपदार्थाः राज्ञास्वीकृताः दृष्ट्यादिनाभुक्ताश्चेतिहि प्रसिद्धिः । तथाहरिरप्यतिसूक्ष्मसूक्ष्मतमादिरसान्स्वयंगृहीत्वाइतरान्क्रमेणरमादिभ्योददातीति । इयांस्तुविशेषः । स्वभार्यादिभुक्तान्राजादिर्नभुङ्क्तेकिंतुपश्यत्येवद्रष्टव्यं । भगवांस्तुकेवलमस्मदादिभोग्यंस्थूलमेवरसनेंद्रियेण नात्ति । किंतु दृष्ट्यादिना स्वीकरोति । तद्गतसूक्ष्मसारानत्त्येव । एवंचैकेंद्रियेणभोग्यमिंद्रियांतरेणभुङ्क्तेइत्येतावताभगवदभुक्तत्वंनतस्यभवतीतिनानर्पितभुक्त्यापत्तिः । भगवन्महिमातिशयोप्येवंसतिज्ञापितःस्यात् केवलंजिह्वागोचरस्यापिरसस्यचक्षुरादिनाविषयीकरणमिति । एवंघ्राणादीतरेंद्रियभोग्यपदार्थेष्वपिसारभेदेननानाप्रकारकभोगोज्ञातव्यः । ननुस्थूलस्याशुभत्वेऽवतारेष्वपिभोजनानुपपत्तिः ।

शुभत्वे किमितिमूलरूपैर्नभुङ्क्तेइतिचेत्स्वेच्छयैवेतितावद्वदामः । अवतारेषुस्वेच्छयापरसेवादिलीलादर्शनात् तद्वल्लीलयैवस्थूलस्यापिभोगः । अनवतारेषुतुस्थूलस्यसूक्ष्मसारसदृशशुभत्वाभावेनभोगाभावः । अस्तिह्यनवताराणांकेवलंदिव्यदृष्टिगोचराणां स्थूलेंद्रियागम्यत्वेपिअवतारेषुस्थूलदृष्टिगोचरता । एवमत्रापि । अपिच यत्रसारादिमत्पदार्थानांचर्वणादिनाविनाऽश्यभोगस्तत्रस्थूलस्यापिभोगः । यत्रस्वशक्त्यापदार्थावस्थानेसत्यपिसारमात्रस्वीकारस्तत्रनस्थूलस्य । अवतारेष्वस्त्येवचर्वणादिकमितियुज्यतेस्थूलभोगः । अयमपिविशेषईशशक्तिकॢप्त्यैवेतिसर्वमनवद्यं ॥ ३५५ ॥ ३५६ ॥ अंतर्यामिरूपेषुविशेषमाह ॥ सर्वैरिति ॥ सुरासुरनरपशुपक्षिमृगसरीसृपादिभिर्यद्यत्स्वयोग्यमन्नादिकमदनाघ्राणदर्शनश्रवणादिभिरनुभूयते तत्तद्भोग्यान्नादिकंतत्तत्सुरा

सर्वैर्यद्भुज्यतेचान्नंतत्रतत्रस्थितोविभुः । तत्तद्भुङ्क्तेस्थूलमपिस्वकीयैरिंद्रियैःसदा ॥ ३५७ ॥

सुरनरादिभोक्तृषुस्थितस्तत्तदिंद्रियानुप्रविष्टैःस्वकीयैरिंद्रियैर्भुङ्क्तइत्यर्थः । यथोक्तं "श्रोत्रंचक्षुःस्पर्शनंचरसनंघ्राणमेवच । अधिष्ठायमनश्चायंविषयानुपसेवते" इति । इंद्रियद्वारासोपिभुङ्क्ते । "तद्यइमेवीणायांगायंतिएतंतेगायंति" इतिचश्रुतिरितिगीताभाष्ये । "भुरितैरिंद्रियैःस्वकैरि"तिच । अत्रस्थूलमितिजाग्रद्भोग्यपदार्थस्यनाममात्रं । "विश्वोहिस्थूलभुक्, स्थूलंतर्पयतेविश्व"मित्यादौमांडूकेजाग्रत्पदार्थेषुस्थूलनामव्यवहारात् । वस्तुतस्तु अंतर्यामिस्वरूपेणापिसूक्ष्मसारभोगएव । प्रमेयदीपादाववतारमात्रएवस्थूलभोगोक्तेरितिकेचिन्मन्यंते । गुरवस्तु अवतारेष्विवांतर्यामिरूपेष्वपिस्थूलभोगएव । "विश्वोहिस्थूलभुगि"त्यादिषुस्थू

लप्रदर्शनात् । नचसंज्ञामात्रत्वेकल्पकंकिमपिप्रमाणमस्ति । प्रमेयदीपिकातूपलक्षणाभिप्रायेणेतिसावकाशा । स्पष्टंमंडूकभाष्ये "स्थूलान्भोगानिंद्रियैःसशुभान्भुंक्तेनचाशुभान् । विश्वंस्थूलंसमुद्दिष्टंसर्वगम्यत्वहेतुत" इति । वैश्वानरशब्दव्याख्यानावसरे स्थूलस्यविश्वशब्दवाच्यत्वंसर्वगम्यत्वेननिमित्तेनेत्युक्तं । गम्यंचात्रज्ञेयं । भोग्यमितियावत् । तथाचस्थूलंनामास्मदादिसर्वभोग्यमेवप्राप्तमिति नसंज्ञामात्रं । अतएवावतारेष्विवांतर्यामिरूपेष्वपिस्थूलभोगएव । चर्वणादिनापदार्थविनाशेनभोगस्यसमत्वादितिसंगिरंते ॥ ३५७ ॥ नकेवलंजीवांतस्तच्छरीरांतश्चस्थित्वातादिंद्रियानुप्रविष्टैःस्वेंद्रियैर्भुंक्तइत्येव । अपितुपृथक्पृथग्रूपेणचक्षुरादिषुस्थित्वातत्तद्भोग्यभुगित्याह ॥ सर्वेंद्रियेष्विति ॥ "भुंक्तेहरिःशुभान्भोगानिंद्रियेषुव्यवस्थित" इत्यादिगीताता

सर्वेंद्रियेषुचस्थित्वासर्वभोगंकरोतिच । शुभमेवात्तिभगवान्नाशुभंतुकदाचन ॥ ३५८ ॥

दक्षिणाक्षिस्थितोविष्णुर्भुंक्तेऽर्थान्जाग्रदास्थितान् । कंठदेशस्थितःस्वाप्नान्जीवानंदंचसुप्तिगः ॥ ३५९ ॥

त्पर्याद्युक्तेः । तानिचरूपाणिभगवदिंद्रियात्मकानिभवंति । तच्चोक्तमैतरेयभाष्ये "विष्णोर्वाग्भार्गवोरामोघ्राणोस्यनरकेसरी । चक्षुस्तुकपिलोविष्णु" रित्यादौ । ननुतर्ह्यशुभभोगस्याप्यापत्तिः । इंद्रियाणामशुभस्यापिग्राहकत्वादित्यतआह ॥ शुभमिति ॥ "सर्वत्रसारभुग्देवोनासारंसकदाचन । शुभंपिबत्यसौनित्य" मित्यादेः । ननुदुर्गंधादिकंभगवाननुभवति नवा । नेतिपक्षेसार्वज्ञ्याभावः । आद्येकथंभोगाभावः । उच्यते । अनुभूयमानाअपिगंधादयोनफलहेतवइत्यभिप्रायः । सुगंधस्तुसुखहेतुरित्युपपादितमितिप्रमेयदीपिकायां ॥ ३५८ ॥ रूपविशेषस्यमांडूकभाष्येप्रसिद्धिमाह ॥ दक्षिणाक्षीति ॥ विश्वतैजसप्राज्ञनामकरूपै

रितिग्राह्यं ॥ ३५९ ॥ मुक्तेषुस्थितरूपैर्भोगमाह ॥ मुक्तेति ॥ चिदचिदात्मकानिति ॥ मुक्तदेवाःस्वयंफलपुष्पाद्यात्मनास्व भोग्याःस्वोत्तमभोग्याश्च । "तेहिदेवाःस्वयंभोग्याःस्वयंभोक्तारएवचे"त्याद्युक्तेः । प्रपंचयिष्यतेचैतन्मुक्तिप्रकरणे । "शुद्धसत्वात्मकवस्तुभोगश्चतेषांशुद्धसत्वमेवास्ती"तितृतीयतात्पर्ये ॥ ३६० ॥ ननुभगवतोऽनंतरूपत्वेपिद्रव्यपूर्तिन्यायेनैकरूपत्वमेव । रूपाणामितरदेवेष्विवसर्वथाविशेषाभावात् । तथाचकथं विश्वःस्थूलभुक् तैजसःप्रविविक्तभुक् जिह्वास्थोरसभोक्ता घ्राणस्थोगंधभोक्ता नरस्थोऽन्नादिभोक्ता सुरस्थोऽमृतभोक्ता पशुस्थस्तृणादिभोक्ता वसंतादौपुष्पादिभोक्ता वर्षादौवृष्ट्यादिभो

मुक्तसंस्थोहरिर्भुंक्ते भोगांश्चिदचिदात्मकान् ॥ ३६० ॥ एकरूपोपिसर्वत्र
सर्वभोक्तापिसर्वदा । केवलैश्वर्ययोगेनविशेषःकथ्यतेहरौ ॥ ३६१ ॥

क्तेत्याद्यवस्थाधिष्ठानदेशकालादिभेदेनरूपाणांपृथक्पृथग्भोगोघटते । "नस्थानतोपी"त्यादिविरोधादित्यतआह ॥ एकरूपोपीति ॥ सत्यमेतत् । तथाप्यचिंत्यशक्त्यातद्घटितविशेषेणसर्वमुपपद्यतइतिभावः । उक्तंचतृतीयतात्पर्ये । "सर्वंसर्वत्रभोक्तापिविशेषादेकभोक्तृवत् । स्थितोहरिरचिंत्यात्मानिजैश्वर्यादजोविभु"रिति । "एकंरूपंहरेर्नित्यमचिंत्यैश्वर्ययोगतः । बहुसंख्यागोचरंचविशेषादेवकेवलं । एकोपिनिर्विशेषोपिचतुर्धाव्यवहारभाक् । करोतिनकरोतीतिव्यवहार्यस्वशक्तित"इति । तत्रतत्रविवृतंचैतद्द्रव्यपूर्तिप्रकरणे । नकेवलंभगवतोवर्तमानसन्निहितकतिपयभोक्तृत्वमपितुएकैकस्मिन्नेवदेशकालाधिष्ठानादौस्थितोपिभगवान्

सर्वदेशस्थितमतीतानागतकालेषुस्थितमिदानीमवर्तमानंनष्टंजनिष्यमाणंचपदार्थमिदानीमेतत्कालीनंच पूर्वोत्तरकालेषुभुङ्क्तइत्यर्थः ॥ ३६१ ॥ नन्वतीतस्येदानींपश्चादप्यसत्त्वाद्वर्तमानस्यच पूर्वोत्तरकालयोरभावा द्भविष्यतश्चातीतवर्तमानकालयोरसत्त्वात्तथादेशांतरेसतोदेशांतरेऽविद्यमानत्वा त्कथंभगवतएकैककालावस्थितपदार्थभोक्तृत्वंसर्वदायुज्यते। कथंचप्रदेशविशेषादाववस्थितस्यपदार्थस्यभोक्तृत्वं समग्रदेशादावनंतरूपैरवस्थितस्यहरेर्युज्यते । कालांतरेदेशांतरेचतस्यासत्त्वेनासद्भोगानुपपत्तेरित्यतआह ॥ देशकालादीति ॥ आदिपदेनस्वभाववस्त्वादीनांग्रहणं । तदुक्तंनिर्णये, "सन्निधानेऽथवादूरेकालव्यवहितेपिवा ।

सर्वदेशेसर्वकालेसर्वभोक्ताजनार्दनः । देशकालादिदेवस्यनहिस्याद्व्यवधायकं ॥ ३६२ ॥
देशभोक्ताजगन्नाथस्तद्गताखिलधर्मभुक् । अण्वादिकालसंस्थानभोक्तासपरमोहरिः ॥३६३॥

स्वभावाद्वाव्यवहितेवस्तुव्यवहितेपिवा । नाशक्तिर्विद्यतेविष्णोर्नित्याव्यवहितत्वतः" इति । अयमाशयः । एकैकदेशकालादौस्थितस्यसर्वथाऽसत्त्वंशशशृंगादिवत्तावन्नसंभवति । परंतु क्वचित्कदाचित्सत्त्वमन्यत्रान्यदातदभावः । तथाचक्वचित्कदाचित्सत्त्वात्सर्वत्रसर्वदातद्भोगःसंभवति। तत्रासतःकथंतद्भोगः तदाऽसतःकथंतदाभोगःसंभवतीत्येतावन्मात्रमवशिष्यते। तत्रदेशकालयोरव्यवधायकत्वेनदेशकालान्तरेसतोपि देशकालांतरेभोगोपपत्तिरिति ॥ ३६२ ॥ देशकालभोक्तृत्वंचप्रसंगादाह ॥ देशेति ॥ देशभोगोनाम स्वातंत्र्येणसर्वदेशव्याप्तिः तत्रसंचारः तत्तत्सत्तादिनियामकतयातत्स्वामित्वं तस्यसर्वाधारत्वसर्व

कारणताप्रवर्तकत्वादिरप्रतिहततयासर्वदेशगतसर्वजगदैश्वर्यमित्यादिः । एवंकालभोगोपि । छांदोग्यभाष्ये "वसुभोज्यादर्धं कालमर्धदेशस्तथैवच । रुद्रभोज्यार्धरात्रात्तुयामआदित्यदैवतइति, युगैकसप्ततेरूर्ध्वंसार्धाष्टादशलक्षकं । वासराणांमनोर्भुक्ति" रितितृतीयतात्पर्येच तत्तद्देवानांतत्तत्कालभोगोभिधीयते । तत्रतेषांकालभोगोनाम तत्तत्कालनियामकत्वेनतत्तत्कालस्यराज्ञो राज्यादिकमिवस्वाम्यतयासुखहेतुत्वं । तत्तत्कालेस्वयोग्यजगदाधिपत्यंचेत्यादिरूपः । तदुक्तं "मध्यंदिनेतृतीयेचरुद्रादेराज्य मिष्यत"इति । "स्वाराज्यंपर्येते"तिश्रुतेः । "स्वाराज्यंभोगःस्वरंजना"दितिभाष्येचतथाभिधानात् । एवंभगवतोपि कालस्य कर्तुमकर्तुमन्यथाकर्तुंचसामर्थ्यविषयत्वेनराज्ञोराज्यमिव विषयतुल्यतयासुखहेतुत्वस्य सर्वकालेष्वप्रतिहतसमस्तजगदाधिप त्यस्य भावाच्चकालभोक्तृत्वमीश्वरस्य । अण्वादिकालानांपृथक्पृथग्भोग्यत्वात्तत्तत्कालविशिष्टपदार्थांतराणांचतथाभोग्यत्वा च्चाण्वादीतिपृथग्ग्रहणं । किंचलोकेपिस्रक्चंदनादिवदेवस्वर्णादिघटादीनां ततोपिकिंचित्परंपरयाजलाहरणादिस्वापेक्षितकार्यो पयोगीकरणमेव भोगइत्यनुभवसिद्धं । एवंगृहवित्तसभाऽऽरामादिभोगोपि । तथाचैवंभोगनानात्वस्यानुभवप्राप्तत्वात्तद्वदी श्वरस्यापिकालादिभोक्तृत्वं कालादेःस्वनिष्पाद्यकार्योपयोगीकरणादिकं । एतच्चलोकन्यायेनैव । वस्तुतस्तुअलौकिकस्यहरेस्त तोप्यतिवैलक्षण्येनैवभोगः । अपिचेश्वरोदेशकालादिकंस्वाचिंत्यशक्त्याविविधविचित्राकारतयाकृत्वानानाप्रकारेणभुंक्तइति प्राज्ञाः । तत्तदवांतरकालोत्पत्तिस्थितिसंहारादिकर्तृत्वंचभोगइति ॥ अण्वादीत्यस्य परमाणुद्व्यणुकत्र्यणुककलात्रुटिक्षणघ टिकामुहूर्तदिनपक्षमासर्त्वयनवत्सरमन्वंतरदिनकल्पमहाकल्पपरममहाकालांतसर्वसंस्थानभोक्तेत्यर्थः । "यावंतंदेवलोकस्थो

मानुषस्त्ववधारयेत् । महाप्राज्ञोदेवजूकःसकालःपरमाणुक" इत्यादिना तृतीयतात्पर्येकालसंस्थानानिनिरूप्य "अण्वादिकालसंस्थानभोक्तृत्वात्परमेश्वरः" इतिकालांतर्यामितदेवब्रह्मभुङ्क्ते । "दिनस्थोभगवान्भोक्ते"तिकालदेशादिभोक्तृत्वंभगवतोभाषितं ॥ ३६३ ॥ सृष्टिस्थितीत्यत्रादिपदेनबंधमोक्षादिसंग्रहः । उपपादितंचैतत्प्रभवादेःसत्ताप्रतीत्यादिकारणत्वात्तद्भोक्तृत्वादिति प्रमेयदीपिकायां । यथापुत्रादिप्रभवोरिपुप्रलयश्चोपलब्धःसुखहेतुरितिपित्रादेस्तद्भोक्तृत्वंतथातद्भोक्तृत्वाच्चेति । एवमेवस्वाप्रिय

सृष्टिस्थित्यप्ययादेश्चभोक्तायज्ञभुगव्ययः । सत्कर्मफलभोक्ताचसदासर्वभुगीश्वरः ॥ ३६४ ॥
गृहवित्तसभाऽऽरामनद्यब्ध्यद्र्यादिभुक्तथा । गोगजाश्वादिपुत्रासबंधवैश्वर्यादिभुग्घरिः ॥ ३६५ ॥
एवंससर्वभोक्तेशस्तेनाभुक्तंनकिंचन । उपासनाज्ञानभक्तिमुखसाधनभुक्प्रभुः ॥ ३६६ ॥
विष्णवप्रियैर्भुज्यमानंतमोनिरयपूर्वकं । तामसानांतुदुःखाद्यंदुष्कर्मादिकमप्युत ॥

बंधःस्वप्रियमोक्षादिश्चोपलब्धः सुखहेतुरितिबंधादिभोक्तृत्वंज्ञातव्यं ॥ यज्ञभुगिति ॥ यज्ञक्रियादिभुगितिवा तद्भोग्य द्रव्यतपआदिभुगितिवा । यज्ञस्यक(ध)र्मत्वेपिपृथग्ग्रहणं "दैवमेवापरेयज्ञं, इत्याद्यारभ्य एवंबहुविधायज्ञावितताब्रह्मणो मुखे" इत्यंतंगीतायामुक्तसर्वयज्ञसंग्रहार्थं ॥ सत्कर्मफलेति ॥ तदुक्तं "गुहांप्रविष्टावात्मनौहितदर्शनात्, रसंपिबतिकर्मज" मित्यादौ ॥ ३६४ ॥ ३६५ ॥ एवंभगवतःसर्वभोक्तृत्वमभिधायोपसंहरति ॥ एवमिति ॥ ३६६ ॥ ननुतेनाभुक्तंनकिं

चनेतिकथं । तमआदेरभुज्यमानत्वादित्यतआह ॥ विष्णवाप्रियैरिति ॥ तिर्यक्त्वग्रहणायपूर्वकमित्युक्तं । आद्यमिति नीचतादेः । आदिकमिति द्वेषमिथ्याज्ञानादेः ॥ ३६७ ॥ कथंतमआदीनांतुष्टिकरत्वमित्यतोऽन्यथावाधकमाह ॥ यद्यदिति ॥ तमआदीनामप्रियत्वे सर्वज्ञस्यस्वतंत्रस्यस्वातोषकरपदार्थनिर्माणमनुपपन्नंस्यात् । तेनज्ञायतेसर्ववस्तुजातंहरेःप्रीतिकरमिति । अपिच "स्रक्ष्येहिचेतनगणान्सुखदुःखमध्यसंप्रापयेतनुभृतांविहृतिंममैच्छन् । सोयंविहारइहमेतनुभृत्स्वभावसंभूतयेभवति भूतिकृदेवभूत्या" इतिनिर्णये तत्तद्योग्यसुखदुःखप्रदानरूपभगवद्विहारस्यरमायाविभूतिप्रापकत्वंश्रूयते । तथाच यदा रमा

सर्वंतुष्टिकरंविष्णोस्ततःसर्वभुगीश्वरः ॥ ३६७ ॥ यद्यत्तुष्टिकरंतत्स्या
त्कुर्यात्तेनैवसर्ववित् ॥ नित्यतुष्टोप्यसौदेवस्तुष्यतीवभवेद्विभुः ॥ ३६८ ॥

याःस्वेशाप्रियदुःखादिनाविभूतिः तदाकिमुहरेस्तोषलाभइति । एतेन तमोनिरयदुःखादेरशुभत्वाद्धरेःकथंतद्भोगइतिमंदाशंकापिनिरस्ता । नहिहरेःसाक्षादशुभभोगोभिहितः । किंनामाशुभयोग्यानामशुभदानमेवभोगइत्युच्यते । तच्चस्वस्यशुभमेव । यथाकेनचिद्राज्ञोमहाद्रोहादिकेकृते राजातमपराधानुसारेणपीडयति तद्बाधनेचस्वस्यातिशयितसंमोदएवजायतेइतिराज्ञःस्वद्रोहिबाधभोगः तथाहरेरपीतिकथमशुभभोगशंका । तदुक्तंछांदोग्यभाष्ये "तमस्यंधेपातयतिमहाकारागृहोपमे । महांधेवापातयतिहस्तच्छेदादिसंमित" इत्यादिना । नन्वेवंभगवतोविषयानुभवेनानंदातिशयोस्ति नवा । नेतिपक्षे

भोगानुपपत्तिर्व्यर्थत्वात् । आद्येकादाचित्कक्रियावेशेनविकारित्वापत्तिः । भोगेनयद्भाव्यंसुखंतस्यतत्पूर्वमभावेनापूर्णत्वप्रसंग श्चेत्यतआह ॥ नित्यतुष्टोपीति ॥ ३६८ ॥ गीताभाष्यवाक्योदाहरणेनैतदुपपादयति ॥ आगमिष्यदिति ॥ भोगेन यदागमिष्यत्सुखं तच्चसदाप्यस्त्येव क्रियाश्चशक्तिरूपेणेतिवार्थः । तर्हिकथंभोगेनसुखंजातमित्युच्यतइतिभावेनपृच्छति ॥ अपित्विति ॥ उत्तरमाह ॥ तथापीति ॥ इतिप्रमेयदीपिकयातदर्थोबोध्यः । अयंभावः । यद्यपिभगवान्नित्यव्यक्तोद्रिक्त निरवधिकपरममहानंदानुभववान् । तथापियथेश्वरज्ञानंवृद्धिह्रासवर्जितंभूत्वैव कदाचिदचिंत्ययाशक्त्याभूतमितिव्यवहा

आगमिष्यत्सुखंचापितच्चास्त्येवसदाऽपितु । तथाप्यचिंत्यशक्तित्वाज्जातंसुखमितीवच ॥ ३६९ ॥

एवंसुपरिपूर्णोपिह्यात्मारामोपिलीलया । कृपयाचरमाब्रह्ममुखेष्वत्त्यखिलंहरिः ॥ ३७० ॥

रालंबनंचभवति तथानित्यव्यक्तमपिसुखमचिंत्यशक्त्या भोगेनजायतइतिनभोगवैयर्थ्यमिति । वस्तुतोऽविद्यमानानंदज ननस्य विद्यमानस्याप्यव्यक्तस्यव्यक्तेर्वाऽभावेपि स्वाचिंत्यशक्त्यैवभोगेनप्राप्तातिशयप्रकारोपेतत्वमितिज्ञापनायभाष्येजात मिवेत्युच्यतइत्युक्तं ॥ ३६९ ॥ रीत्यंतरेणभोगमुपपादयति ॥ एवमिति ॥ एवंनित्यव्यक्तानंदपरिपूर्णोपि स्वरमणत्वेनालस्या दिकं विनानित्यतृप्तोपि रमाब्रह्मादिषुकृपापारवश्येनभोगादिलीलास्वभावत्वेनच सृष्ट्यादावुक्तरीत्याभोगंकरोतीत्युपपद्यत इतिभावः । तच्चोक्तं "आगंताखिलभक्तानांपूजास्वीकारतत्पर" इतिऋग्भाष्ये । "पूर्णानंदोपिभगवान्क्रीडयाभुंक्तएवतु"

इतिगीतातात्पर्ये । "पूर्णानंदस्वरूपस्यक्रीडाभोगोनचान्यथा" इतिमांडूकभाष्ये ॥ ३७० ॥ अचिंत्यशक्त्याभोगांगीकारादेव पूर्णस्यभोगोयुक्तिविरुद्धइतिचनिरस्तमित्याशयेनाह ॥ परीति ॥ तदुक्तंभाष्ये "पूर्णानंदमयस्यास्यचेष्टानज्ञायतेक्कचि" दिति ॥ ३७१ ॥ भोगेवैचित्र्यांतरमाह ॥ भोग्येति ॥ यथाविषयापेक्षि नज्ञानं विषयैश्चविशेषितं तथातद्भोगोपिभोग्यानपेक्षः । भगवत्स्वरूपभूतभोगक्रियायाभोग्यसापेक्षत्वे तस्यस्वातंत्र्यानुपपत्तेरितिभावः । उपपादनंतु "विषयापेक्षिनज्ञान" मित्यत्रोक्तरीत्याद्रष्टव्यं ॥ ३७२ ॥ पुनर्विशेषमाह ॥ सर्वैरिति ॥ यद्यपिसर्वस्यसर्वात्मकत्वेनाखंडैकरसोदेवः । तथापिस्वाचिंत्यश

परिपूर्णस्यभोक्तृत्वमत्याश्चर्यतमंविभोः ॥ ३७१ ॥ भोग्यानपेक्षस्तद्भोगःस्वतंत्रत्वात्परेशितुः ।
तथापिभोग्यघटितस्तदैश्वर्येणकेवलं ॥ ३७२ ॥ सर्वैरूपैरवयवैर्गुणाकारक्रियादिभिः ।
अखंडैकरसोपीशः सर्वंभुंक्तेपृथक्पृथक् ॥३७३॥ अन्यादृशीहरेर्भुक्तिर्नात्रका(च्चिद्वि)र्पाविचारणा ।

क्त्याविविधविचित्रानंतानंतरूपावयवगुणक्रियाजातिवैशिष्ट्याकाराद्यात्मकस्तैरूपादिभिःपृथक्पृथक्सर्वंभुंक्तइत्यर्थः ॥ ३७३ ॥ नन्वेतत्सर्वविरुद्धमिवभाति । तथाहि । कथमेकस्यैवभोक्तृभोग्यादिभावः । तस्यभेदव्याप्तत्वात् । कथंचस्वेतरज्ञानानंदादि (परचैतन्य)भोगःकेवलचिन्मात्रस्य । अन्यस्यतदन्येनभोग्यत्वस्यक्काप्यदृष्टेः । कथंवा एकस्मिन्नेवपदार्थेकिंचिदंशस्यैवसम्यग्भोगः इतरांशस्यदृष्ट्यादिनावैवक्षिकोभोगः । पदार्थस्यैकत्वेनविभागयोगात् । किंच कथंपदार्थानाशेनभोगः । "अचि

र्हिरसविंत्तय" इति चर्वणस्यरसज्ञानार्थत्वेन चर्वणेचपदार्थनाशनैयत्यात् । अपिच कथंभोग्यांतर्गत्याभोगः । भोक्तुर्बहिरेव दृष्टेः । सर्वभोगेचाशुभभोगोऽवश्यमंगीकार्यः । अस्मदादिगतपदार्थभोगेचतद्बंधोपिभवेत् । कर्मफलभोगेकर्मबंधोनियतः । देशादिव्यवहितभोगोयुक्तिविरुद्धः । भोग्यानपेक्षभोगःसुतरामयुक्तः । पूर्णत्वेभोगानुपपत्तिरित्यादींस्तत्रतत्रपरिहृतानपिपुनरेकोक्त्यापरिहरति ॥ अन्यादृशीति ॥ सर्वलोकविलक्षणेभगवतिलोकदृष्ट्याविरोधशंकाऽऽभासभूतैव । अतो मूढदृष्टिमात्रेणालौकिकमहिमातिरस्कारोयुक्तः । नापियुक्त्यगोचरेयुक्तिविरोधःसंभवति । लोके पिशाचादीनामपिस

सर्वतोन्यादृशोत्यंतं सर्वाश्चर्यतमःप्रभुः ॥३७४॥ नबभूवेदृशःकश्चिन्नभविष्यतिकुत्रचित् ।
अनाद्यनंतकालेषुमहाश्चर्यःसएकलः ॥ ३७५ ॥ यतःश्रेष्ठतमोविष्णुःश्रेष्ठःश्रेष्ठतमःसदा ।

तिपर्थादौतदविनाशेनतद्भोगादिकमद्भुतंदृश्यते । देवानांमनुष्यावतारेष्वपिविलक्षणभोगःश्रूयते । "अन्यादृशीहिसुरभुक्तिरतोन्यरूपा । मानुष्यमुक्तिरितिनात्रविचार्यमस्ती"त्यादौ ॥ किमुवाच्यं सर्वेश्वरस्यसर्वदेवादिगताचिंत्यशक्त्यादिनियामकस्यस्वतोप्रतिहताखिलशक्तेर्भगवतोनारायणस्यसकललोकातिविलक्षणविचित्रानंतभोगाद्यस्तीतिभावः ॥ ३७४ ॥ तदेतत्सर्ववैलक्षण्यमेवोपपादयति ॥ सर्वतइति ॥ नैतदाश्चर्यत्वमिदानीमेवेतिमंतव्यमित्याह ॥ नबभूवेति ॥ ३७५ ॥ तदेतदाश्चर्यत्वंछंदोगभाष्यवचनेनद्रढयन्हरेःसर्वोत्तमत्वप्रदर्शनपूर्वकमुपसंहरति ॥ यतइति ॥ "स्वतंत्रत्वात्सुखसज्ज्ञान

शक्तिगुणैःपूर्णःसर्वदैवाखिलैश्च। स्वातंत्र्यशक्तेर्विनियामकोहिनिस्सीमशक्तिर्हियतःस्वतंत्रः। दोषास्पृष्टौगुणपूर्तौचशक्तिर्निस्सी
मत्वाद्विद्यतेतस्ययस्मादि"तिनिर्णयोक्तरीत्यात्रस्वतंत्रत्वनिःसीमशक्तित्वाभ्यांलिंगाभ्यांनिर्दोषत्वमहाद्भुतानंतनिस्सीमगुणगण

श्रेष्ठाच्छ्रेष्ठतमश्चापिपरमात्परमोविभुः ॥३७६॥ परमर्द्धियुतत्वाच्चपरार्ध्यइतिकीर्तितः ॥ ३७७ ॥
अतोमहाद्भुतानंतनिस्सीमगुणबृंहितः । नित्योद्रिक्तोनित्यशक्तिःस्वतंत्रःपुरुषोत्तमः ॥ ३७८ ॥

॥ इतिसत्तत्वरत्नमालायांनारायणप्रकरणं ॥ १ ॥

सर्वेषांमुक्तियोग्यानांमुक्तिर्विष्णोःप्रसादतः। सचज्ञानात्तदर्थंचसाधनानिसमाचरेत् ॥३७९॥
अनंतोद्यत्सहस्रांशुगणाधिकसुकांतिमान्। ज्ञानानंदाद्यसंख्येयकल्याणगुणविग्रहः॥३८०॥
चक्रशंखगदापद्मधरःपरमसुंदरः। दिव्यरत्नोज्ज्वलच्चित्रसर्वभूषणभूषणः ॥ ३८१ ॥
पीतांबरधरोदिव्यवनमालाविराजितः। लज्जितानंतचंद्रौघलसत्सन्मुखपंकजः ॥ ३८२ ॥
रमाधराबाहुलतासमाश्लिष्टःपरःप्रभुः। स्वमूर्तिभिःपरिवृतोब्रह्मवाय्वादिभिस्तथा ॥३८३॥

परिपूर्णत्वयोःसिद्धिरितिभावः ॥ ३७६-३७८ ॥ इतिसत्तत्वरत्नमालाप्रकाशेनारायणप्रकरणं ॥ १ ॥ ॥ ॥
अथमोक्षसाधनंनिरूप्यते ॥ सर्वेषामित्यादिना ॥ ३७९ ॥ तत्रसर्वदाहृदयेश्रीपतिर्वर्ततइतिस्मरणमत्यावश्यकमितितत्स्म

रणप्रकारंदर्शयति ॥ अनंतेति ॥ ३८०-३८४ ॥ सुषुम्नानाडिमध्यगइति ॥ वह्निकार्यप्रकाशिनीवैद्युताब्रह्मनाडीति सुषुम्नापंचप्रकारा । तत्रब्रह्मनाडी मध्येस्थिता । तत्रस्थितइत्यर्थः । जातुचित् कदापि ॥ ३८५ ॥ ३८६ ॥ निदानं प्रधानकारणं ॥ ३८७ ॥ पंचभेदइति ॥ यद्यप्यनंतपदार्थधर्मिकाभेदाअनंताः । तथापिक्रोडीकारेणपंचविधः । ननुक्रोडी

परिवारैःसेव्यमानःसर्वदोषविवर्जितः । पूर्णात्पूर्णतमोचिंत्यःसर्वस्वामीरमापतिः ॥ ३८४ ॥
विष्णुर्मेहृदयांभोजेसुषुम्नानाडिमध्यगे । दिव्येदेवमयेपीठेवैकुंठइवमोदते ॥
इतिध्यायेत्सदाविष्णुंजातुचिन्नैवविस्मरेत् ॥३८५॥ स्मर्तव्यःसततंविष्णुर्विस्मर्तव्योनजातुचित् ।
सर्वेविधिनिषेधाःस्युरेतयोरेवकिंकराः ॥ ३८६ ॥ असज्जनैस्तुसंवासोनकर्तव्यःकथंचन ।
सत्संगएवसंपाद्यस्तन्निदानंविमुक्तये ॥ ३८७ ॥ श्रीपूर्णबोधसच्छास्त्रसमभ्यासःसदैवहि ।
कार्योज्ञे(याःपंचभेदाः)यःपंचभेदोजगतःसत्यतातथा ॥३८८॥ विष्णोरधीनताचास्यश्रुत्याद्युक्तंस्वकर्मच ।

कारेईश्वरगतोजीवगतोजडगतश्चेतित्रिविधएवसंपद्यते । पंचविधत्वंकथमितिचेन्न । एवंसतिजीवप्रतियोगिकजीवांतरगतभेदस्य जडप्रतियोगिकजडांतरगतभेदस्यचाप्राप्त्याईशैकत्ववत्सर्वजीवैक्यस्यसर्वजडैक्यस्यचप्रसक्तेः । अतोभेदस्यपंचविधत्वं युक्तं । नन्वेवंसतिदशविधभेदाःसंपद्यंते । धर्मिप्रतियोगिभावेनतेषांपदार्थानामेवदशविधत्वादितिचेत् तथापिदशविधता

नप्रसज्यते । घटप्रतियोगिकोभेदःपटेऽस्तीत्युक्तेपटप्रतियोगिकोभेदोघटेऽस्तीतिस्वतएवलब्धत्वेनपृथगवक्तव्यत्वात् । तथाच जीवेशयोर्भेदः १ जीवानांचपरस्परंभेदः २ जडेशयोर्भेदः ३ जडानांचपरस्परंभेदः ४ जीवजडयोर्भेदः ५ इतिपंचभेदाः ।

कार्यंविष्णोःप्रीतयेतत्स्वातंत्र्यस्मृतिपूर्वकं ॥ ३८९ ॥ अर्पणीयंहरौतच्चतथादेहेंद्रियादिकं ।
अतीतानागतंसर्वंपशुवित्तगृहादिकं । तथैवात्मगतान्धर्मान्कर्माणिविविधानिच ॥ ३९० ॥
इष्टंदत्तंहुतंजसंपूर्तंयच्चात्मनःप्रियं । दारान्सुतान्प्रियान्प्राणान्परस्मैसंनिवेदयेत् ॥ ३९१ ॥
गुरुप्रसादोबलवान्नतस्माद्बलवत्तरः । गुरुभक्तिःसदाकार्यास्वोत्तमेष्वखिलेष्वपि ॥ ३९२ ॥
यतोऽवराणांसर्वेषांगुणाःसर्वाक्रियाअपि । नियमेनैवसर्वेषांसुप्रसादनिबंधनाः ॥ ३९३ ॥
देवेष्वप्यधिकाभक्तिर्मध्वदेवविशेषतः । अनन्यभक्तिर्देवेशेसदाकार्यारमापतौ ॥ ३९४ ॥
सर्वस्मादुत्तमइतिसम्यक्स्नेहयुतामतिः । सुस्थिराभक्तिरुद्दिष्टातयामोक्षोनचान्यथा ॥३९५॥
ध्यानंचगुरुशुश्रूषानित्यनैमित्तिकाःक्रियाः । तीर्थदानव्रताद्याश्चस्वाध्यायोहरिकीर्तनं ॥३९६॥

रमायाअस्वतंत्रचेतनत्वेनजीवशब्देनविवक्षितत्वान्नचोद्यावकाशइतिसाधूक्तंपंचविधत्वं ॥ ३८८–३९४ ॥ सर्वस्मादुत्तमइतिसम्यक्स्नेहयुतामतिरिति ॥ अत्रस्नेहसहितज्ञानस्यभक्तिरितिज्ञानप्राधान्यमुच्यते । “माहात्म्यज्ञानपूर्वस्तुसुदृढःसर्व

तोऽधिकः । स्नेहोभक्तिरितिप्रोक्तः” इत्यत्रस्नेहस्यप्राधान्यमुच्यते । तत्रसनकादयोज्ञानप्रधानभक्तियुताः । वसुदेवादयःस्नेह प्राधान्योपेताः । अन्येज्ञानस्नेहसाम्ययुताइतिविवक्षयात्रिधोक्तिरिति । अपरेतुज्ञानस्नेहसमाहारएवभक्तिः । तन्निरूपण मनेकधाकृतं । नान्यतरप्राधान्यमत्रविवक्षितमित्याहुः ॥ ३९५–३९८ ॥ अथश्रवणमननाभ्यांतत्वनिश्चयेनसंप्राप्तयापुनः

द्वादश्यादिव्रतंचैवतुलस्यायैरथार्चनं । सर्वंभक्त्यर्थमुद्दिष्टंनिष्फलंतुतयाविना ॥ ३९७ ॥

अनादिसिद्धाभक्तिर्हिक्रमादार्ढ्यंगतैवसा । अपरोक्षदशेर्हेतुर्मुक्तिहेतुश्चसापुनः ॥ ३९८ ॥

सैवानंदस्वरूपेणनित्यमुक्तेषुतिष्ठति । भक्त्यैतादृशयोपास्योभगवानिंदिरापतिः ॥ ३९९ ॥

## इतिसत्तत्वरत्नमालायांभक्तिप्रकरणं ॥ १० ॥

सोपासनाचद्विविधाशास्त्राभ्यासस्वरूपिणी । ध्यानरूपापराचेतितदंगंधारणादिकं ॥ ४०० ॥

परमवैराग्यादार्ढ्यंप्राप्तयात्युद्रिक्तयाभक्त्याऽपरोक्षज्ञानांतरंगोपासनाकार्येत्युत्तरप्रकरणंप्रस्तावयन्भक्तिप्रकरणमुपसंहरति ॥ भक्त्येति ॥ ३९९ ॥ इतिसत्तत्वरत्नमालाप्रकाशेभक्तिप्रकरणं ॥ १० ॥ ॥ ॥ ॥

अत्रोपासनानिरूपणपरमनुव्याख्यानवचनंपठति ॥ सेति ॥ “दर्शनंचिरयाऽनया । अथवासततंशास्त्रविमर्शेनभवि

ष्यती"तितंत्रसारेशास्त्रावमर्शनरूपोपासनस्यापरोक्षप्रापकत्वमुक्तं ॥ ४०० ॥ तत्राद्योपासनाविधायकस्य "सर्ववेदांतप्रत्ययंचोदनाद्यविशेषा"दित्यधिकरणस्यतात्पर्यंभाष्यवचनेनैवाह ॥ सर्वानिति ॥ ४०१ ॥ सर्वेषामधिकारिणामनंतशास्त्रपरिज्ञानंदुःशकमित्यतः "सलिलवच्चतन्नियम" इतिसूत्रतात्पर्यमनुभाष्यवचनेनाह ॥ तत्रेति ॥ अत्रत्यब्रह्मशब्देन तदनतिन्यूनासरस्वत्यपिविवक्षितेत्याह ॥ तथेति ॥ प्रमाणंतूत्तरत्रवक्ष्यते । अनुभाष्यवचनेनैवतदतिरिक्तानांसर्वज्ञानमाह ॥ तदन्येषामिति ॥ तत्रोत्तमानांशेषगरुडेंद्रादिदेवानांवाणीविरिंचापेक्षयाक्रमेणन्यूनतयास्वयोग्यतातारतम्य

सर्वान्वेदान्सेतिहासान्सपुराणान्सयुक्तिकान् । सपंचरात्रान्विज्ञायविष्णुर्ज्ञेयोनचान्यथा ॥४०१॥
तत्राखिलस्यविज्ञप्तिःसम्यग्ब्रह्मणएवहि । तथातदनतिन्यूनाब्रह्माण्याज्ञप्तिरिष्यते ।
तदन्येषांयथायोगमखिलज्ञप्तिरिष्यते ॥ ४०२ ॥ ब्रह्मासमस्तवेदादिशास्त्रोक्तानविरोधिनः ।

क्रमेणसर्वशास्त्रपरिज्ञानं । तदन्येषामृष्यादीनांबहुशाखादिज्ञानं । तदन्येषांविशेषतश्चतुःपंचशाखापरिज्ञानं । तदितरदेवानांस्वज्ञातशाखावदेवेतरशाखास्वनुमितत्वेनभगवत्परताज्ञानं । अधमाधिकारिणांतुशास्त्रैकदेशविषयएव गतिसामान्यसूत्रन्यायेनसामान्यतःपरिज्ञानंचेतिज्ञातव्यं ॥ ४०२ ॥ अथध्यानोपासनंविवक्षुः "उपसंहारोर्थाभेदाद्विधिशेषवत्समानेच, प्राप्तेश्चसमंजस"मित्यधिकरणद्वयतात्पर्यंवदंश्चतुर्मुखोपास्तिप्रकारंतावदाह ॥ ब्रह्मेति ॥ उक्तंचगीताभाष्ये "अ

पौरुषेयवेदेषुविष्णुर्वेदेषुचैवहि । सर्वत्रयेगुणाःप्रोक्ताःसंप्रदायागताश्चये । सर्वैस्तैःसहविज्ञाययेपश्यंतिपरंहरिं । तेषामेवभवे न्मुक्तिर्नान्यथातुकथंचने"ति ॥ स्वज्ञातानखिलानिति ॥ वेदाद्युक्तं तदनुक्तं केवलभगवदुपदिष्टत्वात्संप्रदायागतंयाव द्गुणजातंस्वेनज्ञातं तावत्सर्वंप्रत्येकशएकबुद्ध्युपारूढंचकृत्वा उपास्यसाक्षात्करोत्येव । नतुस्वज्ञातेष्वध्यातमनपरोक्षीकृतं चास्ति । तत्कस्यहेतोः । "आध्यानायप्रयोजनाभावा"दित्याद्यधिकरणेषुतथोक्तेः । सन्न्यायरत्नावल्यांच "हिरण्यगर्भस्तुवि शेषतोऽवबुद्धैःसर्वगुणैर्विशिष्टंविष्णुमुपास्ते"इति । वेदानुक्तगुणोपासनवद्वेदानुक्तदोषाभावोपासनमपिब्रह्मणैवकार्यं । तच्चोक्त मनुव्याख्याने"दोषाभावाश्चयेवेदैरुदिताअविहायतान् । अनुक्ताअपिचग्राह्यामहातात्पर्यशक्तित"इति । ननु किं कल्यादिषु

पृथग्घर्युपदिष्टांश्चस्वज्ञातानखिलान्गुणान् ॥ ४०३ ॥

दोषिषुयेप्रमितादोषास्तदभावाएवेश्वरेऽभिधीयंते उतकुत्राप्यप्रमितदोषाभावावा । आद्येतेषांवेदानुक्तत्वानुपपत्तेरुक्तम युक्तं । द्वितीये शशशृंगादिवदप्रमितदोषाणामभावस्यसर्वत्रसत्त्वेनकथंविशिष्यभगवन्महिमत्वं । कथंचविरिंचोपास्यत्वमि तिचेत् अत्रोच्यते । कल्यादिषुप्रमितदुःखादिदोषाणां तज्जातीयानांवा परमेश्वरधर्मतयाऽत्यंताभावस्तावत्सिद्धः । तद्वि रुद्धनित्यसुव्यक्तनिरवधिकानंदादिगुणाधिकरणत्वात् । नहितमोविरुद्धमहामरीचिमालिनिमार्तांडमंडलेसंतमससंभावनम स्ति । तथाच यथावेदाद्युक्तानंदादिगुणविरोधिदोषाभावसद्भावस्तद्वदेव वेदानुक्तानंतानंतगुणानांचब्रह्मणिसद्भावेन तेषा मपिगुणानांविरोधिनोऽन्यत्रासंतोपिबुद्ध्यासंभाविताएवतदभावाश्चेश्वरेऽभिधीयंते । अस्मदादिषुतुताद्दगनंतदोषविरोधिगुण

बाहुल्याभावेन तद्विरोधिदोषाभावानसंत्येवेति विशिष्यभगवन्महिमत्वं विरिंचोपास्यत्वंच युज्यतएव । नन्वभावाभावे भावनियमादस्मदादिषुगुणविरोधिदोषाभावाभावेभवेयुरेवदोषाः । तथाचभगवद्गतदोषाभावप्रतियोगिभूतदोषाणांलोकएव प्रमितत्वेन कथं दोषाभावाःवेदैरनुक्ताअपिचग्राह्याः इत्यनुव्याख्यानोपपत्तिः । भगवद्गुणानांचलोकगतदोषसमसंख्यता पत्त्यानिस्सीमत्वंचभज्येतेतिचेत् मैवं । यथाकल्यादिगतदुःखोद्रेकपरिमाणसमतद्विरोध्यानंदोद्रेकपरिमाणस्यविरिंचएवसत्त्वेन तत्रैवविरोधिसमर्पणतःप्राप्ततादृग्दोषाभावो नास्मदादिषु । कुतएतत् । अत्रदोषाभावशब्देन दोषविरोधिता(वद्धु)दृग्गुण समर्पकतयातद्विरहोविवक्षितः । अस्मदादिषुसामान्यतःकल्यादिदोषाभावसद्भावेपि तद्विरुद्धतावत्परिमाणकगुणाभावेन

दोषाभावान्क्रियाःसर्वादेशकालगतानिच । रूपाणिचोपसंहृत्यसम्यग्ध्यायतिसर्वदा ॥ ४०४ ॥

ता(वद्धु)दृग्गुणसद्भावनिरूपितदोषविरहरूपस्यदोषाभावस्याभावात् । नह्येतावताकल्यादिवद्दोषवत्त्वंप्रसज्यते । सामान्यतस्तत्प्रतियोगिकाभावस्यप्रमितत्वात् । तथाप्रकृतेपिपरमात्मनोवेदाद्यनुक्तमहागुणपूर्णत्वेनतत्सद्भावनिरूपिताः बुद्ध्यासंभावितत्द्विरोधिदोषविरहरूपादोषाभावावेदानुक्तास्तत्रैवसंति नान्यत्रेत्येतावतास्मदादिषु भगवद्गताभावप्रतियोगिदोषाणां नहिसत्वंसंभवति । सामान्यतस्तादृग्दोषमंगीकृत्यवेदानुक्तदोषाभावशब्देनविवक्षितस्य निरवधिकगुणपूर्तिसद्भावनिरूपितदोषविरहरूपदोषाभावस्यैवास्मास्वनंगीकारादिति । केचित्तु अन्यत्रप्रमितदोषाणामेवेश्वरेअभावमंगीकृत्य तस्यैवदोषस्याभावो

भगवतियाद्दज्ञ्माहात्म्यगर्भस्तस्यमहिम्नोवेदानुक्तत्वेनवेदानुक्तदोषाभावाईश्वरेसंतीति तत्प्रतिपादकग्रंथाभिप्रायइतिवर्णयंति । अत्रगुणोपसंहारकथनेन "समानएवंचाभेदा"दितिसूत्रखंडोक्तं "सोरोदी"दित्यादिश्रुत्युक्तरोदनादिदोषानुपसंहारंसूचयति । अत्रविशेषस्तत्वप्रदीपोक्तोग्राह्यः । तत्रच "सोरोदीद्यदरोदीत्तद्रुद्रस्यरुद्रत्वं, रुद्रस्यत्वेषधनुरार्त्निःशिरउत्पिपेषे"त्याद्यर्थानां "तदधीनत्वादर्थव"दितिन्यायसिद्धरोदनस्वातंत्र्यादीनांगुणानामुपसंहारइत्युक्तं । अविरोधिनोगुणानित्युक्त्या पूर्णत्वविरोधिनांमितभुक्त्वादिगुणानामनुपास्यतादर्शिता । तदुक्तमनुभाष्ये "गुणैरेवसतूपास्योनैवदोषैःकथंचन । गुणैरपिनतूपास्यो

**तथातदनतिन्यूनावाणीदेवीसमस्तशः । वेदोक्तान्संप्रदायाप्तान्स्वज्ञातानखिलान्गुणान् ।**

**रूपाणिचोपसंहृत्यध्यायत्येवंचनाजवत् ॥४०५॥ क्रियासुनित्यविक्रांतिप्रमुखानांचनित्यदा ।**

येपूर्णत्वविरोधिन"इति ॥ ४०३ ॥ ४०४ ॥ अथेदानींसरस्वत्याद्युपास्तिप्रकारमाह ॥ तथेति ॥ उक्तंचतत्वप्रदीपे "यद्यपि ब्रह्मैवसर्वगुणोपासकः । तथापितदनतिन्यूनब्रह्माणीविषयआदिशब्द"इति । सरस्वत्याश्चतुर्मुखवत्सर्वगुणोपसंहारउक्तः । तत्र "समानएवंचाभेदा"दितिसूत्रानुसारेणक्रियाविषयेपवादमाह ॥ एवंचनाजवदित्यादिना ॥ क्रियाविषयेचतुर्मुखवन्न निरंकुशतयोपसंहारः । किंतुभगवत्क्रियाद्विविधाः । काश्चिन्नित्यव्यक्ताः । यथानित्यविक्रांतिसृष्ट्यानंदभोगाद्याः । काश्चिन्ननित्यव्यक्ताः । अपितुशक्तिव्यक्तियुक्ताः । यथात्रैविक्रमघटादिस्रष्टृत्वनवनीतभक्षणाद्याः । तत्रनित्यव्यक्तानांक्रियाणां

कंजजातवन्नित्यदैवोपास्तिःस्यात् । कादाचित्कानांतुनपृथक्नित्यदोपसंहारः । किंनाम कदाचिन्नित्यविक्रांत्यादिष्वंतर्भा व्यैव । तथाहि । नित्यविक्रांतिर्नाम नित्यसंचारः । क्रमुपादविक्षेपइतिधातोः । नित्यसंचारश्चोक्तऐतरेयभाष्ये "सध्रीची नासुपूर्वादिदिक्ष्वेतौचतसृष्वपि । वायुश्चवायुसंस्थश्चचरतोलोकसाक्षिणा"विति । त्रिविक्रमत्वंपादविक्षेपविशेषएवेति । सजातीयतयाकदाचित्तदंतर्भूततयोपसंहारः । अन्यदातुपृथक्पृथगेवोपसंहारः । एवंसृष्टिक्रिया सामान्यतोनित्यव्यक्ता । लयेपिकालादिसृष्टिसद्भावात् । कादाचित्कासुघटसृष्ट्यादिक्रियासु क्वचित्तदंतर्भावेनोपास्याः । क्वचित्पृथक्च । तथा नवनीत

व्यक्तानांनित्यंदैवस्यादुपास्तिःकंजजातवत् ॥४०६॥ [भक्त्यैतादृशयाशास्त्रंविमृश्यपरिवृद्धया ।
महावैराग्यतोदार्ढ्यंप्राप्तयागुर्वनुग्रहात् । अनौपाधिकयोपास्योभगवानिंदिरापतिः ।]
कादाचित्कक्रियाणांतुपृथक्त्रैविक्रमादिनां । ननित्यदोपसंहारोह्यंतर्भावात्क्वचिद्भवेत् ।

भोगादीनामप्यानंदभोगादिनित्यक्रियायामंतर्भावोद्रष्टव्यइति । तदुक्तंन्यायविवरणे "यथाशक्तिस्मृतान्धात्रागुणान्विष्णोःसरस्वती । स्मरेत्त्रैविक्रमाद्यास्तुनित्यविक्रांतिपूर्वकैः । कदाचिल्लोपयेद्देवी"इत्यादौ । नयचंद्रिकायांच "घटस्रष्टापटस्रष्टेत्यादिविशेषान्विना स्रष्टेत्यादौ"ति । एवंब्रह्माणीब्रह्मणोदोषाभावोपसंहारेपि ब्रह्मा सर्वदोषाभावोपसंहारंकरोति । वाणीतु क्वचित्क्रियाविरोधिदोषाभावविशेषाणांसामान्यतउपास्तिंकुर्यादितिविशेषोज्ञेयः । तच्चोक्तमानंदमालायां "ब्रह्मणात्वखिलै

गुणैः । उपास्य"इत्येतद्व्याख्याने । अत्र तुशब्दात् ब्रह्मणादोषाभावैरखिलैरुपास्यः । अन्यैर्यथाक्रमंसामान्यतएवगुणोक्त न्यायतएवेति । नन्वेवंब्रह्मवाण्योःक्रियोपास्तिमात्रेव्यत्यासमंगीकृत्य स्वज्ञातसर्वगुणोपासनासाम्यांगीकारे "नैवसर्वगुणास्स वैरुपास्यामुक्तिभेदतः । विरिंचस्यैवयन्मुक्तावानंदस्यसुपूर्णते"तिभाष्यविरोधः । तत्रगुणोपास्तावेवव्यत्यासस्यसयुक्तिकमु क्तेरितिचेन्न । तत्रगुणशब्दस्यगुणक्रियादेशुभधर्ममात्रपरत्वेन क्रियामात्रेसंकोचोक्तावपिविरोधाभावात् । अतएवनयचंद्रि कायां"क्रियासामान्यतश्चगी"रित्यत्र क्रियादीनांगुणांतर्भूतत्वेपि ज्ञानादीनांपृथगुक्तिर्ब्राह्मणपरिव्राजकन्यायादित्युक्तं । क्रि यायामेवसंकोचेनिमित्तंतु क्रियायाःशृंगारविशेषाभिव्यंजकतयामनसस्तत्रसानुरागमभिनिवेशहेतुतायाःनाट्यादावंगविक्षेपादि

नित्यविक्रांतिपूर्वासुसजातीयक्रियासुहि ॥ ४०७ ॥ श्रीदेवीनित्यमुक्तापिस्वज्ञातानखिलान्गुणान् ।

क्रियासुदृष्टत्वेनप्रकृतेप्यानंदोद्रेकहेतुभूतभगवदनुरागातिशयहेतुत्वेब्रह्मसमानंदोद्रेकस्यब्रह्माण्यामसंभवेनानंदातिशयापादक भक्त्युद्रेकसंकोचएवेतिप्राज्ञामन्यंते ॥ ४०५-४०७ ॥ नन्वेवंयथानंदातिशयवैचित्र्यलाभायवाणीविरिंचयोःस्वज्ञातशुभधर्मे षुवैचित्र्यांगीकारः तर्हितथा चतुर्मुखमहालक्ष्म्योरपिस्वज्ञातार्थोपसंहारेयत्किंचिद्वैचित्र्यमंगीकार्यं । अन्यथा आनंदवैचित्र्या नुपपत्तेः । नचैतद्युज्यते । स्वज्ञातसकलार्थोपसंहारस्यरमायामिवब्रह्मण्यपिनिर्धारितत्वात् । नच स्वज्ञातार्थोपास्तिसाम्येपि ज्ञानएवबहुव्यत्याससद्भावेनफलेव्यत्ययइतिवक्तुंयुक्तं । ब्रह्मब्रह्माण्योरपि एवंज्ञानव्यत्यासेनैवफलवैचित्र्यस्यवक्तुंशक्यत्वेन

"नैवसर्वगुणाःसर्वैरुपास्यामुक्तिभेदत" इति, "समानएवंचाभेदा"दितिच स्वज्ञातार्थोपसंहारेपिवैषम्यकथनमयुक्तंस्यादित्यत आह ॥ श्रीदेवीति ॥ अयमाशयः । ज्ञानानंदाद्याभगवद्गुणाःप्रत्येकंज्ञानविज्ञानसंज्ञानप्रज्ञानमोदप्रमोदाद्यनंतविशेषोपेताः । तथाज्ञानानंदादिगुणेषु पुनर्ज्ञानानंदबलादयोनंतगुणगणाःसंतीतिसप्रपंचमुपपादितंभगवद्गुणप्रकरणे । क्रियासंस्थविशेषाअप्युदाहरिष्यमाणानंदमालातोऽवगंतव्याः । तथाच चतुर्मुखस्यस्वज्ञातसर्वगुणानांगुणिनीश्वरद्रव्येसर्वदापृथगुपसंहारांगीकारेण रमाविरिंचयोर्गुणिनिज्ञातगुणोपासनासाम्येप्यस्त्येववैलक्षण्यं । रमायागुणिनीवप्रत्येकंस्वज्ञातसर्वगुणेष्वपिज्ञानानंदादिगुणगणानांगुणगतानांज्ञानविज्ञानमोदादिविशेषाणांक्रियागतविशेषाणांचसमस्तानांकार्त्स्न्येनसर्वदोपसंहारसद्भावात् । ब्रह्मणस्तु

गुणिनीशेतथानंतस्वज्ञातेषुगुणेष्वपि ॥ ४०८ ॥ एकैकगुणसंस्थेषुसुविशेषगुणेष्वपि ।

गुणेषुगुणांतरादिविशेषाणामुपसंहारस्य "नरमावद्विशेषाणांदर्शनंशक्नुयात्क्वचि"दितिसर्वदाऽभावावधृतेः । प्रपंचितंचैतदानंदमालायां । "अथयावंतोनंतगुणाब्रह्मणागुणिनिहरावुपसंह्रियंते तावतोनंतगुणान् तदनंतगुणेष्वपिप्रत्येकमुपसंहृत्य नित्यमुक्तापिप्रकृतिःस्वेच्छयैवस्वपतिंविष्णुमुपास्ते नकेवलंगुणिन्येवानंतगुणानुपसंहृत्य । संतिह्येकैकस्मिन्गुणेषुपुनरनंतास्तद्विशेषगुणाः । तथाब्रह्मणोपासितेषुक्रियाविशेषगुणेषु एकोगुणोघटस्रष्टृत्वं तस्मिन्नेवगुणेतत्परमाणुस्रष्टृत्वाद्याःपुनरप्यनंतानंतायुज्यंते । एकैकपरमाणूनामपिघटादिद्रव्यवदनंतत्वात् तदेकपरमाण्ववयवानामपितत्परमाणुवदनंतत्वात् तत्परमाणू

नामपितद्वदनंतत्वमित्यपर्यवसितिः । नचपरमाणुर्निरंशः । तस्मादनंतपदार्थेष्वेकैकवस्तुन्यपर्यवसितविशेषावस्थापकत्वाद्यास्तद्गुणा अपर्यवसिताएवपरमेश्वरस्येतिनिश्चीयंते । नचतेषामल्पतमत्वमेवेतिशंक्यं । अणोरणीयस्त्वैश्वर्याव्यतिरेकेणमहतोमहीयस्त्वोपपत्तेः । तथाचानुव्याख्याने "तेचाखिलविलक्षणाः । सर्वेसर्वगुणात्मानःसर्वकर्तारएवच । तथापिसविशेषाश्चे"त्यादीति । अत्रकार्यपरमाणुविवक्षयापरमाणुस्रष्टृत्वोक्तिः । नित्यपरमाणूनांतदवयवानांचस्रष्टृत्वंतु तत्सत्तानियामकत्वादिरूपंध्येयं । अत एव "तेषामवस्थापकत्वाद्याः" इत्याद्युक्तं।नतुपरमाण्ववस्थापकत्वातिरिक्तं।किंतदवयवव्यवस्थापकत्वमितिचेत् जगत्स्रष्टृत्वातिरि

ब्रह्मोपास्यक्रियासंस्थविशेषेष्वखिलेष्वपि । सर्वदैवोपसंहृत्यह्युपास्तेस्वेच्छयैवहि ॥४०९॥

ब्रह्मातुसर्वदासर्वगुणान्गुणिनिसंहरेत् । गुणेषुतद्विशेषेषुकदाचिन्नोपसंहरेत् ।

क्तंकिंघटस्रष्टृत्वमितिवयमपिपृच्छामः । जगत्स्रष्टृत्वविशेषोघटादिस्रष्टृत्वमिति सृष्टिक्रियाविशेषाभिप्रायेणतदुक्तिरितिचेत् तुल्यमितरत्रापि॥४०८॥४०९॥ यदुक्तं हिरण्यगर्भस्यगुणिनीवगुणेष्वपिप्रत्येकंसर्वगुणोपास्तिःसर्वदानास्तीति कथमेतत् । तर्हिव्यासादिभगवद्रूपाणां "ज्ञानकलावतीर्ण"मित्याद्यनेकप्रमाणैर्ज्ञानादिगुणावतारतयाप्रमितत्वेन केवलंज्ञानादिगुणतन्मात्रेषुव्यासादिषु सर्वगुणपूर्त्योपासनंतस्यनस्यादितिचेत् अत्रद्वेधासमाधानमाहुः । व्यासादीनांगुणावतारत्वेपिज्ञानादिष्वपिद्रव्यत्वाकारस्यशक्तिव्यक्त्यात्मनासद्भावेन द्रव्यत्वव्यक्तिदशायामेवव्यासादिरूपतांगीकारात् । अथकेवलंगुणाकारस्यैवाचिंत्यशक्त्याद्रव्यत्व

सद्भावेनवा तत्रगुणोपसंहारोगुणिनीश्वरएवेत्यापन्नमिति नदोषइत्येके। अपरेतुविरिंचस्यगुणेष्वपिगुणांतरोपसंहृतिर्विद्यतएव। परंतुनसर्वदा। रमायास्तुसर्वदेतिविशेषइत्यलं ॥ ४१० ॥ इदानींसुपर्णाद्युपास्तिप्रकारमाह ॥ सुपर्णेति ॥ अत्रत्यगुणशब्दो दोषाभावस्यापिसंग्राहकः। एवमुत्तरत्रापि। प्रमाणंतूक्तं। अपिपदेनक्रियासंकोचंकैमुत्येनसमुच्चिनोति। केषुचिदित्युक्त्या प्रायोगुणानांविशेषोपास्तिःकेषांचिदंतर्भावेणेतिसूचयति। तदुक्तं "गुणसामान्यतोरुद्र" इत्यनुव्याख्याने। नयचंद्रिकायांच "घटज्ञःपटज्ञ" इत्यादिविशेषान्विनासर्वज्ञइत्यादीति ॥४११॥ सौपर्ण्याद्युपास्तिप्रकारमाह ॥ सौपर्णीति ॥ "द्रव्यसामान्यतः

नैवक्रियाविशेषेषुब्रह्माण्यप्येवमेवहि ॥ ४१० ॥ सुपर्णशेषयोर्ज्ञातगुणेष्वपिहिकेषुचित् ।
संकोचःस्याद्धिरूपेषुसदोपास्तिःसमस्तशः ॥ ४११ ॥ सौपर्णीवारुणीशक्रमुखानामपिकेषुचित् ।
रूपेष्वपिहिसंकोचःकदाचिदितिनिश्चयः ॥४१२॥ गुणानांचविशेषेणाप्युपास्तिःस्यात्क्वचित्क्वचित् ।

परे" इत्यनुभाष्यस्य परे पार्वत्यादयइतिनयचंद्रिकायां। "इंद्रादयस्तुमूर्तिविशेषैरपिसामान्यतोऽवबुद्धैर्विशिष्टंविष्णुमुपासत" इतिसन्न्यायरत्नावल्यांसुधायांचव्याख्यानेनसंगृहीतं। ननुतर्हिरुद्रादीनांगुणसामान्योपास्तिमात्रांगीकारे विशेषोपास्तिविधि वैयर्थ्यमित्यतआह ॥ गुणानामिति ॥ तच्चोक्तंनयचंद्रिकायां "नात्रज्ञानादीनांविशेषोपास्तिविधिवैयर्थ्यमाशंकनीयं। सामान्येनोपास्तिविधेःप्रायिकत्वादिति। तदेतत्सर्वं "ब्रह्मासर्वगुणैश्चे" त्याद्यनुव्याख्याने तद्व्याख्यानपरसन्न्यायरत्नावलीनय चंद्रिकासुधासुच विशदंप्रतिपादितं ॥ ४१२ ॥ एवंगुणरूपक्रियासुसंकोचोक्त्यारुद्राद्युपास्यगुणादीनांनाल्पत्वंमंतव्यमित्याह ॥

तएवमपीति ॥४१३॥ एवं सर्वदेवोत्तमानांविरिंचादीनामुपास्तिप्रकारंनिरूप्येदानीं "नवाप्रकरणभेदात्परोवरीयस्त्वादिवत्, वेधाद्यर्थभेदात्, संभृतिद्युव्याप्त्यपिचातः, प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौहिभेदे" इत्याद्यधिकरणानुसारेणसामान्यतःसर्वदेवतोपास्तिप्रकारमाह ॥ एवमित्यादिना ॥ क्रमादिति ॥ क्रमेणोत्तमोत्तमेषूपास्यगुणानामतिबाहुल्यं नीचनीचेषुक्रमेणह्रासइत्यर्थः । "सएषपरोवरीयानि"त्यत्रोक्तमिंद्ररुद्रब्रह्मादिकानांक्रमेणसर्वोत्तमत्वप्रकारकज्ञानपूर्वकंहरेःसर्वप्रकारेणोत्कर्षःपरोवरीयस्त्वं । "अग्नेत्वचंयातुधानस्यभिंधि, पराशृणीहितपसायातुधानानि"त्यादावुक्तंभगवद्योगविघ्नकरशत्रुभूतासुरादिवेधव

तएवमप्यसंख्येयगुणरूपक्रियास्तथा । दोषाभावांश्चसततंसमाहृत्यह्युपासते ॥ ४१३ ॥

एवमेवहिदेवाद्याःक्रमाद्बहुतरान्गुणान् । परोवरीयस्त्वमुखान्वेधभेदादिकानपि ॥४१४॥

धादि । किंच "उक्षासद्यावापृथिवीबिभर्ति, एषहिसर्वेषुलोकेषुभाति, एषलोकाधिपतिः, एषसर्वेश्वरः, एषसेतुर्विधृति"रित्यादिसूक्तान्संभृतिप्रकाशव्याप्तिसर्वाधिपतित्वादिगुणांश्चेत्यर्थः । "तस्यप्रियमेवशिरः मोदोदक्षिणःपक्षः"इत्यादिसूक्तान् प्रियशिरस्त्वमोदादिपक्षत्वादीनित्यर्थः । एवं बृहतीसहस्र विष्णुनाम संहिता मधु वैश्वानर पंचाग्नि सप्तान्नांतर्यामि गायत्र्याद्यध्यात्माधिभूताधिदैवसंबंध्यनंतवेदगतनानाविद्यावेद्यनानागुणरूपतदंशक्रियादिकान् तथा "अयमात्माऽपहतपाप्मा, यत्तदद्रेश्यमग्राह्य"मित्याद्यनंतविद्यावेदितदोषाभावरूपानपिगुणानित्यर्थः । तत्रतावत् "परस्मादुत्तमंप्रोक्तंपरोइति

ततःपरं । परोवरंपरंतस्मात्प्रोक्तंपारोवरीयक”मित्युक्तक्रमेण परो परोवरज्ञानपूर्वकं भगवतोमहोत्कर्षज्ञानध्यानलक्षणपरोवरीयस्त्वोपास्तिःक्रमाद्देवादीनामेव । वेधादिकंतुनसर्वोपास्यं । किंतुसर्वदेवानांगंधर्वचक्रवर्तिप्रमुखानांशत्रुसंहारादावधिकृतानामेव । “भिंधिविध्यशृणीहीतिफलभेदेनसर्वशः । यत्यादीनांतेष्वयोगा”दितिहिभाष्ये । प्रियशिरस्त्वमोदादिपक्षत्वादधोमोदप्रमोदमुख्यमुदादयश्चदेवादीनामेव । नापरेषां । तदुक्तंतत्वप्रदीपे “एकैकस्मिन्नपिगुणेगुणविशेषाणामुपचयानुपचयौफलभेदार्थंभवतः । अपचयःफलमात्रायभवति । उक्तगुणोपास्तावुपचयोऽधिककफलायभवति । अतोनावरेषांप्रियशिरस्त्वादिगु

तथाप्रियशिरस्त्वादीनानंदादिविशेषकान् । तथासंभूतिद्युव्यासिप्रभुत्वैश्वर्यपूर्वकान् ॥ ४१८ ॥
बलौदार्यमुखांश्चैवनानावैचित्र्यसंयुतान् । नानाविद्यावेदितांश्चनानारूपक्रियादिकान् ।

णोपास्तिःप्राप्यतइत्यादिना । आनंदमालायांच “येपुनस्तत्फलेप्यानंदोद्रेकपूर्वान्विशेषानिच्छंतिनतुफलमात्रं । योग्यतायामप्याधिक्यात् । तैःसुरैस्तदर्थंस्वयोग्यतातारतम्यानुसारेण सच्चिदानंदादिगुणेषुप्रियशिरस्त्वादिगुणानांसंयोगाच्चतुःसंख्यातएवबहुभिर्बहुप्रकरणेषुबहुशाखासुपठितैरुपास्योभगवान्नकेवलंचतुर्भिरेव । सुराईश्वरायेप्रभूपिगंधर्वादीनां तेसुरेश्वराउच्यंते” इत्यादि । संभूत्यादयोदेवानां प्रियव्रतादिचक्रवर्तिनां गंधर्वप्रवरादीनांचोपास्याः । तेषांजगद्रक्षकत्वसूर्यवत्सर्वलोकप्रकाशकत्वादीनां “जगतीपतिर्महीतलमनुशशासरजनीमपिदिनंकरिष्यामीतिससकृत्वस्तरणिमनुपर्यक्रामद्द्वितीयइवपतंगः । योने मि

निम्नैरकरोच्छायांघ्नन्सप्तवारिधीन् । भूसंस्थानंकृतंयेनसरिद्भिरिवनादिभि"रित्यादौप्रमितानांप्राप्तये "इतरेत्वर्थसामान्या"दित्युक्तरीत्याभगवत्यपिसंभृतिप्रकाशव्याप्त्यादिगुणानामुपास्योपसंहार्यत्वात् । सर्वेश्वरेषुदेवेषुतुकैमुत्येनतत्सिद्धं । अतएव "देवादीनामुपास्यास्तुभृतिव्याप्त्यादयोगुणा" इत्यत्र देवादीनामुत्तमानामित्युक्तंतत्वप्रदीपे। अत्रादिशब्देन आदिराजादीनामेवग्रहणं नसर्वेषामितिगम्यते। एवं बलौदार्यादिगुणाश्चसामान्यतएवकर्मदेवाद्युपास्याः। देवैस्तु नानावांतरवैचित्र्यवत्तयाबहुशास्त्रोक्ताः क्रमादतिबहुगुणाउपास्याः । यथोक्तं "सुरेश्वरैः । यथाक्रमंबहुगुणै"रित्यत्रानंदमालायां "पुनःस्वरूपसुखादिष्वतिव्याप्तत्वादिमहागुणलिप्सुभिःसुरेश्वरैरेवलोकेश्वरैर्वह्निवरुणसूर्यसोमादिभिर्यथाक्रमंप्रियशिरस्त्वादिसहितेषुसंभृतिद्युव्याप्त्यादिगुणानांसं

दोषाभावांश्चसंहृत्ययथायोग्यमुपासते ॥ ४१६ ॥ अंगावबद्धदेवानामप्यंगेषूपसंहृतिः ॥ ४१७ ॥

योगात्तेभ्योपिबहुमहाशास्त्रोदितमहागुणैरुपास्यो नकेवलंप्रियशिरस्त्वादिमात्रैः । देवऋष्यादिभ्योप्येषामाधिक्यात् । तथापि पुनर्मुक्तेषुस्वगुणेष्वतिसांद्रत्वमहत्त्वविशेषलब्धियोग्यैःसुराणामीश्वरैरिंद्ररुद्राद्यैःयथाक्रमंबहुभिस्सर्ववेदोपवेदादिष्वाचंतादुदितैर्द्रव्यगुणक्रियासामान्यरूपैरनंतरूपत्वसर्वज्ञत्वसर्वकर्तृत्वादिभिरपिमहागुणैरुपास्यो नतुसहितैरेवेत्यादिना । एवंभावरूपगुणोपासनान्यायेनाभावरूपगुणोपासनमपियथाक्रमंद्रष्टव्यमिति ॥ ४१४-४१६ ॥ "अंगावबद्धास्तुनशाखासुहिप्रतिवेदं, अंगेषुयथाश्रयभाव"इत्यधिकरणद्वयोक्तोपास्तिमाह ॥ अंगावबद्धेति ॥ "चंद्रमामनसोजातः चक्षोःसूर्योअजायत । मुखादिंद्रश्चा

ग्निश्च प्राणाद्वायुरजायत" इत्यादिनामनआद्यंगोद्भूतानांसोमादिदेवानांस्वस्वोत्पत्त्यंगाश्रिततया तत्परिवारतयाचोपासनंतत्तन्नी चैःकार्यं। यथोक्तंतत्वप्रदीपेब्रह्मादीनांपरिवारदेवानामुपासनापूजानमस्काराद्युच्यते। अंगेति। अंगदेवानामुभयविधमुपा सनंकार्यं परिवारत्वेनांगस्थत्वेनचेति। समानानांसमानोपासनस्योत्तमानामधमोपासनस्यच "समत्वा(द्धो)च्चोत्तमत्वा(द्धे) च्चे"ति निषिद्धत्वादितितत्तद्देवोपासनंविनातत्तद्देवाश्रयत्वेनतद्बिंबत्वेनचभगवदंगोपासनंचेत्सर्वदेवैरपीष्यतइत्याशयेनाह। विष्ण्वंगानामिति। एतच्चोक्तंतत्रैव। ब्रह्मविषयबुद्धिभावात्सर्वदेवतामंत्राःयथाविधीयंतेएवमविरोधोवेति। अपिचचक्षुर्मन

अंगाश्रितामरगणाध्येयाअंगेषुसर्वशः। एवमेवांगदेवेषुगुणध्यानंभवेत्क्वचित् ॥ ४१८ ॥

महतामपिकेषांचिदंगेष्वप्यंगदेवताः। उपास्याउत्तमास्तेषुतद्गुणाश्चोत्तरोत्तरं ॥ ४१९ ॥

आद्यंगदेवेषुसूर्यसोमादिषुयेप्रकाशाह्लादकत्वादयोगुणास्तेभगवदंगेषूपसंहार्याइत्याह ॥ अंगाश्रितेति ॥ ४१७ ॥ सूर्याद्यंग देवेषुचतेगुणाउपास्याइत्याह ॥ एवमिति ॥ क्वचिदित्यस्यभार्यापुत्रत्वादिरूपानुबंधेसत्येवेत्यर्थः। एतदप्युक्तंतत्वप्रदीपे "नकेवलमंगेषुतत्तद्देवताभावनयापूर्यते। तत्तदंगगुणसमाहारश्चतत्तदंगेषुकर्तव्यः। यथाचक्षुर्मनआदिषुसूर्यादिदेवगुणामहाप्र काशाह्लादकरत्वादयः। गुणविशेषोपसंहृतिस्तुफलविशेषाकांक्षायामेव। गुणोपसंहृतिर्भार्यापुत्रादिभावे। यथाह्युमादीनांरु द्रादिगुणोपसंहारोनस्वरूपमात्रोपासनंतत्रेत्यादौ ॥ ४१८ ॥ भगवदंगाश्रितायेअंगदेवाः ब्रह्माशिरसि ललाटेरुद्रः इत्याद्युक्ता

ग्निश्च प्राणाद्वायुरजायत"इत्यादिनामनआद्यंगोद्भूतानांसोमादिदेवानांस्वस्वोत्पत्त्यंगाश्रिततया तत्परिवारतयाचोपासनंतत्तन्नी चैःकार्यं। यथोक्तंतत्वप्रदीपेब्रह्मादीनांपरिवारदेवानामुपासनापूजानमस्काराद्युच्यते। अंगेति। अंगदेवानामुभयविधमुपासनंकार्यं परिवारत्वेनांगस्थत्वेनचेति। समानानांसमानोपासनस्योत्तमानामधमोपासनस्यच "समत्वा(द्धो)च्चोत्तमत्वा(द्वे)च्चे"ति निषिद्धत्वादितितत्तद्देवोपासनंविनातत्तद्देवाश्रयत्वेनतद्विंबत्वेनचभगवदंगोपासनंचेत्सर्वदेवैरपीष्यतइत्याशयेनाह। विष्ण्वंगानामिति। एतच्चोक्तंतत्रैव। ब्रह्मविषयबुद्धिभावात्सर्वदेवतामंत्राःयथाविधीयंतेएवमविरोधोवेति। अपिचचक्षुर्मन

अंगाश्रितामरगणाध्येयाअंगेषुसर्वशः। एवमेवांगदेवेषुगुणध्यानंभवेत्क्वचित् ॥ ४१८ ॥

महतामपिकेषांचिदंगेष्वप्यंगदेवताः। उपास्याउत्तमास्तेषुतद्गुणाश्चोत्तरोत्तरं ॥ ४१९ ॥

आद्यंगदेवेषुसूर्यसोमादिषुयेप्रकाशाह्लादकत्वादयोगुणास्तेभगवदंगेषूपसंहार्याइत्याह ॥ अंगाश्रितेति ॥ ४१७ ॥ सूर्याद्यंगदेवेषुचतेगुणाउपास्याइत्याह ॥ एवमिति ॥ क्वचिदित्यस्यभार्यापुत्रत्वादिरूपानुबंधेसत्येवेत्यर्थः। एतदप्युक्तंतत्वप्रदीपे "नकेवलमंगेषुतत्तद्देवताभावनयापूर्यते। तत्तदंगगुणसमाहारश्चतत्तदंगेषुकर्तव्यः। यथाचक्षुर्मनआदिषुसूर्यादिदेवगुणामहाप्रकाशाह्लादकरत्वादयः। गुणविशेषोपसंहृतिस्तुफलविशेषाकांक्षायामेव। गुणोपसंहृतिर्भार्यापुत्रादिभावे। यथाह्युमादीनांरुद्रादिगुणोपसंहारोनस्वरूपमात्रोपासनंतत्रेत्यादौ ॥ ४१८ ॥ भगवदंगाश्रितायेअंगदेवाः ब्रह्माशिरसि ललाटेरुद्रः इत्याद्युक्ता

कर्मक्षयोत्क्रांतिमार्गभोगरूपचतुर्विधमोक्षभाजोमनुष्योत्तमागृह्यंते । नतुवर्णावरादयः । तेषां "आत्मेत्येवपरंदेवमुपास्यहरिमव्ययं । केचिदत्रैवमुच्यंतेनोत्क्रामंतिकदाचने"ति कर्मक्षयभोगमात्रभागिनामेकगुणोपासनस्यैवप्रमितत्वात् । अतोवर्णाश्रमाचारयुजामेवचतुर्गुणोपास्तिः। मनुष्यचक्रवर्तिनोपिमनुष्यपदेनगृह्यंते। अतस्तेषामपिचतुर्गुणोपासनमेव । परंत्वतिशयेनेत्यप्याहुः । अत्रोक्तंतत्वप्रदीपे "सन्नामनिर्दोषत्वं । नचसुखानुभवमात्रंमोक्षेइष्यते । संसारेपितत्संभवात् । नचनिर्दोषसुखानुभवस्तथा । तदुपास्तिंविनाप्राप्यते । "तंयथायथोपासतेतदेवभवती"त्यादिश्रुतेः । सचपुरुषार्थःस्वामिनःसकाशाद्भवतीतिस्वामित्वं भगवत्युपसंहर्तव्यंविशेषतः । अतश्चतुष्कमुपासनीयं । फलस्योपास्तिसदृशत्वात् । "प्रतिमुखस्ययथामुखश्री"रितिभा

प्रकाशसौंदर्यमुखागुणाःकेचित्क्रियाअपि । प्रकाशंतेहि भगवद्रूपांतर्भावतःक्वचित् ।

गवतेइति चतुर्णामानंदज्ञाननिर्दोषत्वस्वामित्वानामावश्यकत्वमुक्तं ॥ ४२२ ॥ नन्वानंदादिवत्तद्विशेषाणांमोदप्रमोदादीनांस्वरूपदेहेच प्रकाशसौंदर्यादिगुणांतराणांचमुक्तौभाव्यत्वात्फलसाम्यन्यायेनतेप्युपास्याभवेयुरतोनचतुर्गुणोपास्तिनियमइतिचेत्सत्यं । "सत्योज्ञानंपरमानंदरूपआत्मेत्येवंनित्यदोपासनंस्यात् । नान्यत्किंचित्समुपासीतधीर"इत्यादावितरगुणोपासनस्यायोग्यतयानिषिद्धत्वादुक्तनियमोंगीकार्यः । तर्हिकथंतत्तत्फललाभइतिचेत् मोदप्रमोदादिविशेषाणांप्रत्येकशोऽनुपासनेपिस्मरणमात्रेण स्वोपास्यानंदाद्यंतर्भावेणप्रकाशसौंदर्यादीनांकेषांचिद्गुणानां कासांचित्क्रियाणांच स्वोपास्यभगवद्रूपांतर्भावेणस्फुर

णेनसामान्यफलोपपत्तिरितिभावेनाह ॥ प्रकाशेति ॥ तदुक्तंन्यायविवरणे "यथायोग्यान्गुणपूगानुपास्यफलंभवेन्मुक्तिर्गंनान्यथास्यात् । नित्यैकाग्र्यव्यंग्यताहेतुतश्चसाक्षाद्दृशिनोंतद्विशेषैःस्मृतैश्चेति, गुण्याकारस्मृतेरेवद्युतिमात्रंप्रतीयते । नव्याप्तिर्जगदस्मृत्ये"त्यादिना । तत्वप्रकाशिकायांच "यच्चप्रकाशादिमात्रमपेक्षितं तच्चभगवत्प्रतीत्यविनाभूतप्रकाशादिनैवलभ्यत"इति ॥ ४२२ ॥ वर्णावराणांतुस्वामित्वेनैवोपास्तिरित्याह ॥ आत्मेत्येवेति ॥ ननुतर्हितेषामानंदाद्यभावप्रसंगः । तदनुपासनादित्यतोयुगपत्स्वभुजवदुपासनायामप्रतिभासनेनानुपासनेऽप्यानंदादीनामात्मत्वेएकीकारेणोपास्तिसंभवात्तल्लाभ

आनंदादिविशेषाणांस्मृतिमात्रंनधारणं ॥ ४२३ ॥ आत्मेत्येवसदोपास्योविष्णुर्वर्णावरादिभिः ।
सुखादीनामथात्मत्वेह्यंतर्भावःप्रकीर्तितः ॥ ४२४ ॥ देव्यासहासौप्राणेनचोपास्यश्चाखिलागुणाः ।

इत्याशयेनाह ॥ सुखादीनामिति ॥ यथोक्तमानंदमालायां "चतुर्गुणोपास्तेरशक्यत्वे आनंदादीनामात्मगुणेएकीकारेणाप्युपास्तिःसमस्तीति ॥ ४२४ ॥ अथमहालक्ष्म्याअपिनारायणेनसहोपास्यत्वस्य "उपासितामुक्तिदासद्यएव । तथापिसर्वपरमांसर्वदोषविवर्जितां । ज्ञात्वाश्रियंतत्परमंतत्पतिंपुरुषोत्तमं । विज्ञायोपासतेनित्यंतेहियुक्ततमामता"इत्यादिगीतातात्पर्ये, देव्याः प्राणप्रसूतिं, प्राणादुपरिसहैवभगवतामुमुक्षूणामभिध्यानंकर्तव्यं । नामादिप्राणपर्यंतानामपिपरिवारभूतानामुत्तरोत्तरतोविशेषपूजोपास्त्यादिकंविवक्षितं किंपुनरखिलेश्वरस्यातिप्रियतमायाविरिंचमुखनिखिलसुरपुरःसरसज्जनलोकायादेव्या, इतितत्वप्र

दीपादौच भगवतासहरमोपासनस्यात्यावश्यकत्वावगमादाह ॥ द्व्येति ॥ सचवायुर्विष्णोर्मुख्यप्रतिमा । "वायुर्हिप्रतिमाहरेः । तस्माद्वायुकृतंसर्वंक्रियतेविष्णुनैवहीत्यैतरेयभाष्ये । तेवायवेमनवेबाधितायावासयन्नुषसंसूर्येण" इत्यादिषुस्पष्टं बहुशोवायोर्मुख्यपरिवारत्वेनहरिणासहोपास्यत्वोक्तेःसोपिनियमेनसर्वैरुपास्यइत्याशयेनोक्तं ॥ प्राणेनचेति ॥ भूमाधिकरणाभिप्रायमाह ॥ अखिलाइति ॥ "सत्यंपूर्णंविज्ञानंपूर्णंकृतिःपूर्णानिष्ठापूर्णाश्रद्धापूर्णामतिःपूर्णासुखंपूर्णंभूमापूर्णोहंपूर्णआत्मापूर्णोनात्रकिंचिदूनं पूर्णमेवाधस्तात्पूर्णमुपरिष्टात् पूर्णमध्यतःपूर्णंसर्वत"इत्यादिन्यायविवरणे । "पूर्णज्ञानःपूर्णानंदइत्याद्युपासनंकार्यमि"ति तत्वप्रदीपोक्तदिशा सर्वेपिगुणाःप्रत्येकंपूर्णतयोपास्याइत्यर्थः । कार्याख्यानादपूर्वमितिसूत्रानुसारादाह ॥ वैलक्षण्येनेति ॥

पृथक्पूर्णतयोपास्यावैलक्षण्येनचाखिलैः ॥ ४२५ ॥ बिंबरूपोपासनंचकार्यंसद्भक्तिपूर्वकं ।

॥ ४२५ ॥ सर्वसाधारणोपास्त्यंतरं "नसामान्या"दितिसूत्राभिप्रेतमाह ॥ बिंबेति ॥ तथाहिन्यायविवरणे "समोपिभगवान् स्वबिंबदर्शनेनैवेनंजीवंमोचयतीति । बृहद्भाष्येचयेषांबहिरुपासनेनमोक्षस्तेषामपिहृद्युपासनंकिंचित्कार्यमेवे"ति । ननु "ऋषयोंतःप्रकाशाः, अंतर्दृष्टयोबहिर्दृष्टयःसर्वदृष्टयः, उपासात्रैविध्यात्, अग्नौक्रियावता"मित्यादौबहिरुपास्त्यादिमात्रोक्तेः सर्वसाधारण्येनबिंबोपासनानियमे तद्विरोधइतिचेदुच्यते । अप्रतीकालंबनऋषिकर्मयोग्यप्रबुद्धादितत्तदधिकारिणांसर्वत्राग्नौप्रतिमादौचोपासनाप्राचुर्यस्य कर्मक्षयादिरूपफलसाधनस्यैवविवक्षितत्वात् । बिंबोपासनस्य लिंगशरीरभंगासाधारणहेतुभूतस्य

कादाचित्कस्य नप्राचुर्यमिति प्राचुर्याभिप्रायकत्वेनोदाहृतवचनानां नतद्विरोधइति। अतएवबृहद्भाष्येकिंचिच्छब्दः। "अतः किंचिदुपास्यैवविष्णुंमुक्तिमनुव्रजे"दितिच । तत्वप्रकाशिकायांच "सर्वाधिकारिसाधारण्येनाबिंबमेवावश्यमुपास्य"मित्युक्तं । उपासनेतिकर्तव्यताविशेषं "अंबुवदग्रहणात्तुनतथात्व"मित्युक्तमाह ॥ सद्भक्तिपूर्वकमिति ॥ "नृसिंहादिकमन्यच्चदुरितादिनिवृत्तय"इत्युक्तेराह॥ विघ्नेति ॥४२६॥ इदानीमुपासनाशब्दार्थंवदन्नुपसंहरति॥ नित्यशइति॥ तारतम्यपरिज्ञानपूर्वकंनित्य

सर्वैश्वविघ्नहान्यर्थंनृसिंहादेरुपासनं ॥ ४२६ ॥ नित्यशःश्रवणंचैवमननंध्यानमेवच ।
कर्तव्यमेवपुरुषैर्ब्रह्मदर्शनमिच्छुभिः । तारतम्यपरिज्ञानपूर्वकंकमलापतेः ॥ ४२७ ॥

## इतिसत्तत्वरत्नमालायांउपासनाप्रकरणं ॥ ११ ॥

शइतीतिकर्तव्यनिरूपणं । कमलापतेःकमलापतिविषयकंश्रवणमित्यादियोजना । "तारतम्यपरिज्ञानपूर्वकंसपरिवारस्यविष्णोरुपासनमितिदर्शित"मितितत्वप्रदीपे । तथाच देवतातारतम्यपरिज्ञानपूर्वकं तारतम्यांतर्गतत्वेन सर्वोत्तमत्वं सकलनिरवधिकगुणगणपरिबृंहितत्वं निश्शेषावद्यगंधराहित्यंच यथायोग्यं सकलसच्छास्त्रश्रवणमननाभ्यांनिश्चित्यातिवैराग्येणातिदृढीकृतयाऽनन्यभक्त्या ब्रह्मादिसकलपरिवारसंसेवितस्यनिर्दोषातिकमनीयानंतगुणोज्ज्वलयामहालक्ष्म्यासमेतस्य भगवतोनारायणस्य

निजगुरूपदेशानुसारेणात्मयोग्यगुणक्रियाद्युपेतभगवद्रूपविशेषोपासनंसर्वैरपिनैरंतर्येणकार्यमितिसिद्धं ॥ ४२७ ॥ इतिसत्त्वरत्नमालाप्रकाशेउपासनाप्रकरणं ॥ ११ ॥ ॥ ॥ ॥ ॥

एवंयथायोग्यमनुष्ठितोपास्तिर्यदापरिपक्का तदामहालक्ष्मीसमेतोभगवानपरोक्षतोदृश्यतइत्याह ॥ इत्थमिति ॥ ४२८ ॥ तदेवमपरोक्षज्ञानमधिकारिविशेषनिष्ठतयाविविच्यप्रतिपादयदनुव्याख्यानवचनंपठति ॥ ब्रह्मात्त्विति ॥ सन्न्यायरत्नावल्याद्यनुसारेणार्थोभिधीयते । सर्वगं यावदव्याकृताकाशव्याप्तं । अन्यतः सरस्वत्यादेः अधिकंयथाभवतितथापश्येत् । ब्रह्मणो

इत्थंसपरिवारस्ययदोपास्तिर्दृढाभवेत् । तदालक्ष्मीपतिर्देवोदृश्यतेनिखिलैरपि ॥ ४२८ ॥

ब्रह्मापिसर्वगंपश्येद्गुणानप्यन्यतोधिकं । नतुसर्वेषुकालेषुतथापश्यत्यमुक्तिगः ॥ ४२९ ॥

प्यवस्थाभेदेनविशेषउच्यते ॥ नतुसर्वेष्विति ॥ तथा सर्वगतत्वेन । "ब्रह्मणस्त्वंशरूपेषुभारत्याज्ञानवर्जन"मित्येकादशतात्पर्ये प्राप्तापरोक्षज्ञानस्यभीमाद्यवतारंविना तदन्यत्रतिरोधानाभावाभिधानात् अमुक्तिगःसर्वेषुकालेषुतथानपश्यतीत्युक्ते तिरोधानपर्यवसानाद्विरोधइतिनवाच्यं । अस्याप्यवतारदशायांपर्यवसिततयातदेकवाक्यत्वात् । केचित्तु ब्रह्मणस्त्वंशरूपेष्वितिवाक्यं ज्ञानादिव्यक्तिरव्यक्तिर्भवेत्प्रारब्धकर्मणेतिन्यायेनप्रारब्धकर्मवशाज्ज्ञानतिरोधानविषयं । एतत्तुभगवदिच्छयैवब्रह्मणएवक्वाचिद्दर्शनाभावविषयमिति भिन्नविषयत्वेनाविरोधंमन्यंते (अत्रऋजूनांप्राप्तज्ञानप्रतिबंधकप्रारब्धदुरितपरिकल्पनंकथमितिचिंत्यं ॥ )

॥४२९॥ मुक्तब्रह्मणःकदाचिदपिज्ञानतिरोधानाभावेरमासाम्यंकिमितिपृच्छति॥ अपित्विति ॥ उत्तरं नरमेति ॥ दर्शनं कर्तु मितिशेषः। उपपादितमेतदुपासनाप्रकरणे॥४३०॥ तथावाणीति॥ सरस्वत्यपितथाब्रह्मवत्। तत्रापवादोविशेषानिति। यावंतो ब्रह्मदृष्टाविशेषास्तावतोनैवपश्यति। क्रियासुविशेषस्यप्रागेवसमर्थितत्वात्। वस्तुतस्त्वनंतविशेषान्सदापश्यतीतिभावः॥४३१॥ परिमाणदर्शनेविशेषमाह ॥ त्रैगुण्यादिति ॥ पंचाशत्कोटिविस्तीर्णात्तावत्परिमाणखर्परयुतब्रह्मांडात्परितःक्रमाद्दशगुणितोत्त

मुक्तस्तुसर्वदापश्येत्सर्वगत्वेनचापितु । नरमावद्विशेषाणांदर्शनंशक्नुयात्क्वचित् ॥ ४३० ॥
स्वात्मानमन्यच्चसदाविशेषैरखिलरपि । पश्यत्यजस्तथावाणीविशेषांस्तावतोनतु ॥ ४३१ ॥
त्रैगुण्यात्परतःपश्येद्ब्रह्मांशंशतगुणंहरिं ॥ ४३२ ॥ गिरिशोगरुडश्चैवतमोमात्रगतंहरिं ॥
पश्येद्विशेषानपिहिवाणीदृष्टान्नपश्यति ॥ ४३३ ॥ उमासुपर्णीचमहत्तत्त्वंयावत्प्रपश्यति ॥
रुद्रदृष्टान्विशेषांश्चनैवपश्येत्कदाचन ॥ ४३४ ॥

रोत्तरावरणांतिमत्रैगुण्यादपिपरतः शतोत्तरदेशपर्यंतमेवस्थितंविष्णुंपश्यतीत्यर्थः ॥ ४३२ ॥ तमोमात्रेति ॥ महत्तत्वाद्दश गुणितंयद्गुणत्रयाख्यंतत्वंतत्रावांतरविशेषउक्तस्तृतीयतात्पर्ये। "तमसोरजस्तुद्विगुणंरजसःसत्वमेवचे"ति । तत्रयआदिमोगु णस्तन्मात्रव्यापिनंहरिमित्यर्थः॥ विशेषानपीति॥ गुणादिपरिज्ञानेज्ञातगुणेष्वपिसंकोचेनदर्शनस्यसत्त्वादितिभावः ॥४३३॥ रुद्रदृष्टानिति ॥ गुणरूपक्रियापरिज्ञानेपि न्यूनत्वात्स्वज्ञातरूपादिदर्शनेपि "द्रव्यसामान्यतःपरे"इत्युक्तन्यायेनविशेषसद्भा

वाच्चेतिभावः ॥ ४३४ ॥ एतेषांब्रह्मादीनांभगवद्दर्शनेविशेषसद्भावेपिनान्येषांदर्शनेइत्याह ॥ स्वरूपमिति ॥ अत्रान्यरूपंस्वाधमरूपंमंतव्यं । स्वोत्तमविषयकसमग्रज्ञानाभावस्य "शक्रमुखदेवगणैरचिंत्य"मितिद्वादशस्तुत्यादावुक्तेरिति । ब्रह्मणिमुख्यमेतत् । रमाविषयेविशेषस्यविरिंचप्रकरणेप्रपंचितत्वेनतद्विरोधाभावात् ब्रह्माद्याःस्वस्वाधमरूपंपश्यंतीतिद्रष्टव्यं । उमासुपर्णीचरुद्रदृष्टान्विशेषान्नैवपश्येदित्युक्तरीत्याइंद्रकाममनुदक्षादीनांस्वस्वपूर्वदृष्टगुणरूपक्रियादिविशेषदर्शनंनेतिसिद्धत्वात्व्यासिदर्शनविषयेविशेषमाह ॥ इंद्रश्चेत्यादिना ॥४३५॥ नन्विंद्रश्चकामश्चब्रह्मयावदहंकृतीतिकथं । "नांतंनमध्यंनपुनस्तवादिंपश्यामि,

स्वरूपमन्यरूपंचमुक्तादेवाःसमस्तशः । जानंतींद्रश्चकामश्चब्रह्मयावदहंकृति ॥ ४३५ ॥
पश्यंतोमनुदक्षाद्याबुद्धितत्वस्थितंहरिं । पश्यंतिसोमसूर्यौतुमनःस्थंपरमेश्वरं ॥ ४३६ ॥

अनादिमध्यांतं, त्वयाततंविश्वमनंतरूपे"तिगीतायां तद्भाष्येच "उपचारनिवृत्त्यर्थंनमध्यमितीतींद्रावताराजुर्नस्यानंतदेशव्याप्तविश्वरूपसाक्षात्काराभिधानादितिचेत् अत्राहुःप्राज्ञाः यथास्मदादीनांसमुद्रदर्शनेअस्मच्चक्षुषएकद्वियोजनादिमात्रावगाहित्वेप्यपारतयैवदर्शनं । नतुतावन्मात्रपर्यवसिततया । तथार्जुनस्याप्यहंकारतत्वव्याप्तिपर्यंतंविशिष्यदर्शनेपिनतावन्मात्रपर्यवसिततत्वेन । किंनाम सामान्यतोनिरवधिकतयैव । तथाचसामान्यतोपारतयादर्शनाभिप्रायेण नांतमित्याद्युक्तिः नतुविशिष्टदर्शनाभिप्रायेण । सर्वत्रापिस्वयोग्यसर्वावयवदर्शनसद्भावान्नक्षुद्रोपद्रवइति । केचित्तु "बहुसाहस्रवर्षेणमहत्तत्वेक्वचित्क्वचित्"

इत्युक्तन्यायेन बहुसहस्रवर्षाद्यनुष्ठिततपःप्रभावादिनाकदाचिदमितदेशव्याप्तरूपसाक्षात्कारोप्यस्तीत्याहुः ॥ बुद्धितत्वस्थित मिति ॥ "अबग्नीरनभोऽहंकृन्महत्तत्वगुणत्रयै"रित्यावरणोक्तिप्रस्तावे अहंतत्वकार्यतयातदंतर्भूतत्वेन तद्धीनपरिमाणंबुद्धित त्वं तद्ग्रहणेनैवगृहीतमित्यावरणत्वंनतस्येतिनमंतव्यं । एवंमनोप्यहंतत्वांतर्गततयाबुद्धितत्वादूनपरिमाणंगृहीतमिति ॥४३६॥ भूतस्थितमित्यत्र क्रमेण नभोवाय्वादिगतंदेवाःपश्यंतीत्यर्थः ॥ बहुसाहस्रेति ॥ बहुसहस्रवर्षानुष्ठितसाधनोत्तमेनक्रमेण मह त्तत्वेस्थितंविष्णुंपश्यंति । क्वचित्क्वचिदिति महत्तत्वभागानभ्युपैति ॥ ४३७ ॥ अंडांतर्वर्तिनमित्यादावप्रतीकालंबनादेवातिरि

अन्येभूतस्थितंविष्णुंदेवाःपश्यंतिसर्वदा । बहुसाहस्रवर्षेणमहत्तत्वेक्वचित्क्वचित् ॥ ४३७ ॥
अन्येचैवयथायोगमंडांतर्वर्तिनंहरिं । श्वेतद्वीपपतिंचैवहृद्येवान्येतुकेचन ॥

क्ताग्राह्याः। अंडांतर्यथायोगं समग्रब्रह्मांड तदेकदेशादिक्रमेण त्रिलोक्यादिव्यासरूपसाक्षात्कारस्यात्राभिमतत्वात् । श्वेतद्वीप पतिमपियदिव्याप्ततयापश्यंतीतिमतं तदातेअप्रतीकालंबनाएव । हृद्येवेत्यादाववरऋष्यादयःप्रतीकालंबनाउच्यंते । हृदयेऽ ग्नौप्रतिमादौचयेपश्यंति तेप्रतीकालंबनशब्दवाच्याः । "प्रतीकंदेहउद्दिष्टं"इत्येतत्प्रतीकांतरोपलक्षणार्थं । वस्तुतःप्रतीकंदेहादि स्थानं । अन्यथा अप्रतीकालंबनान्नयतीत्यत्रानंदमालायां व्याप्तदृष्टयोऽव्याप्तदृष्टयश्चेतिद्विविधाः । तत्रव्याप्तदृष्टयस्तुऋषिगंधर्व प्रवरपूर्वकादेवपर्यंताउच्यंते । अव्याप्तदृष्टयस्तुमनुष्योत्तमाद्याऋषिगंधर्वांताउत्तममध्यमाधमाश्चेति अप्रतीकालंबनप्रतीकालंबन

प्रस्तावप्रतिपादनेन तद्विरोधात् । स्पष्टंचैतत्तत्वप्रदीपइति । सर्वेषामपिबिंबापरोक्षनैयत्यमाह ॥ कदाचिदेवेति ॥ केचित् क्रिया योग्या अप्रबुद्धादयोऽब्ध्यादिषुपश्यंतोपि कदाचिदेव तत्रापिहृद्यपिपश्यंति नतुऋष्यादिवत्प्राचुर्येणेत्यर्थः ॥ ४३८ ॥ परिमाणदर्शनवद्विशेषदर्शनंनविस्पष्टमुक्तमतआह ॥ उमायावदिति ॥ उमापर्यंतंपश्चादुक्ताः ब्रह्मावाणी गिरीशगरुडौ उमा सुपर्णीत्येतेदेवाः पूर्वैःरमाब्रह्मवाणीगिरीशगरुडैःपूर्वपूर्वोक्तैर्दृष्टेभ्योविशेषेभ्योपि । तदपेक्षयाऽनंतांशानेव । दृष्टेभ्यइतिपंचमीषष्ठ्यर्थेवा । दृष्टानांविशेषाणांमध्येऽनंतांशानेववासुदेवविशेषान्विचक्षतेपश्यंति । लक्ष्मीर्यावतोवासुदेवस्यगुणान्पश्यति तावतांमध्येअनंतांशात्परि

कदाचिदेवतत्रापिकेचित्पश्यंतिकेशवं ॥ ४३८ ॥ उमायावदनंतांशान्पूर्वदृष्टेभ्यएवतु ।
विशेषान्वासुदेवस्यपश्चादुक्ताविचक्षते ॥ ४३९ ॥ शक्रकामादयश्चैवविशेषान्ब्रह्मणिस्थितान् ।
उमादिभिःप्रबुद्धेभ्यःशतांशानेवचक्षते ॥ ४४० ॥ एवंहितत्रतत्रस्थःस्वाधिकारानुसारतः ।

मितमेवभागंब्रह्मापश्यतीत्यादि द्रष्टव्यं ॥४३९॥ उमातःपरमाह ॥ शक्रकामादयश्चेति ॥ चस्त्वर्थे । एवशब्दस्य उमादिभिरेवेत्यन्वयः । प्रबुद्धेभ्यइति पूर्ववत्षष्ठ्यर्थेवर्तते । चक्षते पश्यंति ॥ ४४० ॥ उक्तमर्थमुपसंहरन्नपरोक्षज्ञानेकारणमाह ॥ एवंहीति ॥ "एषोणुरात्माचेतसावेदितव्य" इत्याथर्वणे, वेदःशाम्यतितद्यथेत्यत्र, वेदोवृत्तिज्ञानमित्येकादशतात्पर्ये । तत्रह्यपरोक्षज्ञानंप्रस्तुतं । "दिव्यंददामितेचक्षु" रितिगीतायां तद्भाष्यादौ "दिव्यचक्षुर्मनःस्मृत" मित्यादिभिस्तत्रतत्रापरोक्षज्ञानस्यमनःकरणक

त्वाभिधानादितिभावः । "तद्व्यक्तमाहहि, अतोनंतेनतथाहिलिंग"मिति भगवतोऽव्यक्तस्वभावत्वेपि भक्तिज्ञानाभ्यांसुप्र
सन्नस्यस्वाचिंत्यशक्त्यैवापरोक्षविषयता युक्तेत्युपपादनानुसारेणाह ॥ नित्येति ॥ ४४१ ॥ "यस्यतद्ब्रह्मसंसिद्धंपूर्वंतेनाप्यतेऽ
ग्रतः । मध्येवयसिचे(त्सि)द्धुद्धंमुक्तोमध्यंप्रपश्यति । वार्धकेचेद्विजानातिमुक्तःपादौप्रपश्यति । ज्योतिर्मंडलमेवान्यदंगंविष्णोः
प्रपश्यती"त्यादितैत्तिरीयभाष्यानुसारेणाधिकारिविशेषनिष्ठज्ञानविशेषमाह ॥ तत्रापीति ॥ योगतः साधनविशेषादित्यर्थः
॥ ४४२ ॥ तत्रापिस्पष्टताविशेषान्तैत्तिरीयवचनेनाह ॥ विद्युदिति ॥ प्रकाशातिशयेनविद्युतोदुर्दर्शत्वात् सूर्यमंडलस्यस्प

मनसैवस्वभक्तानांदृश्योसौरमयासह । नित्याव्यक्तोपिभगवानीक्ष्यतेनिजशक्तितः ॥ ४४१ ॥
तत्रापिह्यल्पकाःकेचित्पादमात्रंप्रचक्षते । ज्योतिर्मंडलमेवान्येत्वन्यआमध्यतस्तथा ।
आमुखात्सर्वदृष्टिःस्यादुत्तमानांहियोगतः ॥ ४४२ ॥ विद्युद्वन्मानुषाविद्युःसूर्यमंडलवत्सुराः ।

ष्टंद्रष्टुमशक्यत्वात् जलादिगतप्रतिबिंबस्यस्पष्टदर्शनत्वात्तारतम्यं । विरिंचस्यतुस्थिरचिद्रूपत्वेनछायातपमध्येकरतलकलितास
लकवत्स्पष्टातिस्पष्टविशददर्शनवत्त्वात्सर्वाधिक्यमितिभावः । "जीवेस्थितःसभगवान्दृश्यतेज्ञानदृष्टिभिः । आदर्शेमुखवत्स
म्यङ्तथापितृलोकगः । ततःकिंचित्स्पष्टतयागांधर्वेदृश्यतेहरि"रित्यादिकाठकभाष्यवचनस्यैकैकाधिकारिणामप्यधिष्ठानभे
देनदर्शनभेदविषयत्वान्नतद्विरोधः । "नित्यशोभगवद्रूपस्यापरोक्ष्येणदर्शनं । मुहूर्तमात्रज्ञानंस्यान्महाज्ञानंततोधिकं । ज्ञानेन

ब्रह्मलोकःस्यान्महाज्ञानाद्धरेर्गतिः । सदैवाखंडितंध्यानंतपइत्युच्यतेबुधैः । अपरोक्षदशायुक्तंनित्यंषण्मात्रकालया । अपरोक्षदशानित्यमेकमात्रयुजायुतं । योगनाम्नासमुद्दिष्टं"इत्याद्येकादशतात्पर्ये ज्ञानावस्थाकालपरिमाणनिरूपणं तत्तल्लोकप्रापकापरोक्षविशेषविषयं । "पादयोगान्महर्लोक"इत्याद्युक्तेर्नतुयोग्यसाक्षात्कारविशेषविषयमिति नतत्संगृहीतं ॥ ४४३ ॥ "यदा स्वरूपंजानातिकालप्रकृतिवर्जितं । वासुदेवप्रसादेनतदामुक्तोभवत्यसा"विति, हरिपादाब्जसंस्थितमितिच, अपरोक्षीकृतस्वात्मभूतचिदानंदात्मकदेहेंद्रियादिमत, इत्यादितत्वप्रदीपोक्तेः बिंबापरोक्षसमयेप्रतिबिंबस्वात्मरूपसाक्षात्कारोप्यस्तीत्याह ॥

प्रतिबिंबवच्चगिरिशोब्रह्मैनंपश्यतिस्फुटं ॥ ४४३ ॥ बिंबरूपंहरिंदृष्ट्वाहरिपादाब्जसंस्थितं ।
स्वंचपश्यत्यापरोक्ष्यान्निवृत्ताखिलबंधनः ॥ ४४४ ॥ एवमुत्पन्ननिर्दोषभगवद्दर्शनात्सदा ।
अपेक्षितफलप्राप्तिरारब्धस्यानतिक्रमात् । देवर्षिमानुषादीनांतत्तज्जात्यनुसारतः ॥४४५॥

बिंबेति ॥ ४४४ ॥ एवमपरोक्षप्रकारंयथामति संग्रहेणनिरूप्य तत्फलनिरूपणपरानुव्याख्यांपठति॥ एवमिति॥ सदेति ॥ स्वोदयमारभ्येतिशेषः । "स्वोदयात्फलदंज्ञान"मितिवचनात् । अपेक्षितफलावाप्तिर्मोक्षमात्रेइत्याशयः । अपरोक्षज्ञानिनामपि देवर्ष्यादीनांद्युनामकवसोर्वसिष्ठधेन्वप्राप्तिवत्तदपेक्षितफलप्राप्त्यभावदर्शनात्कथमेतदित्यतउक्तंआरब्धस्यानतिक्रमादिति॥ प्रारब्धस्यकर्मणोतिक्रममविहायेतिपूर्वेणसंबंधः । अत्रविशेषमाह ॥ देवर्षीति ॥ जातिरत्रयोग्यता । अपेक्षितफलंभवती

तिसंबंधः । एतद्विवरणं(जयमु)जैमिन्युक्तं "मानुषाणामि(त्याद्युपरितनानुव्याख्याने)त्युत्तरग्रंथेक्रियते । "विज्ञातुमेतत्सर्वैषा" मितिभाष्येचज्ञायते । गौरवभयात्तदपठनं । फलितार्थस्तु अपरोक्षज्ञानेनैवमोक्षइतितावत्सिद्धं । ज्ञानोत्तरभाविकर्मणामुक्तावानंदातिशयइत्यत्रनविवादः । नांतरीयकफलेजातिविशेषेणास्तिविशेषः । ज्ञानिनोद्विविधाः देवामनुष्याश्चेति । तत्रमानुषपदोदितादेवातिरिक्तज्ञानिनस्त्रिविधाः । अधममध्यमोत्तमभेदेन । तत्राधमानांमोक्षेतरफलंकर्मणैव नज्ञानस्यात्रोपयोगः । मध्यमानां कर्मणैवदृष्टंफलं । अदृष्टंतुज्ञानेनकर्मसहितेनेतिज्ञेयं । उत्तमानांतु मोक्षेतरफलमप्यैहिकामुष्मिकभेदेनद्विविधं ।

ज्ञानीचकर्माणिसदाकुर्याद्वेदोदितानिहि । यतोज्ञानोत्तरंकर्ममौक्तानंदा(दि)भिवृद्धिदं ॥ ४४६ ॥

अशुभंह्रासदंतुस्यान्मौक्तानंदस्यहिक्रमात् । देवावराणांदेवानांसुखंक्ष्वसंयथाक्रमं ॥ ४४७ ॥

तत्र ऐहिकंधनादिकर्मणाज्ञानंत्वतिशयाधायकं । अदृष्टंस्वर्गादि केवलज्ञानमहिम्नैव । बलवत्प्रारब्धप्रतिबद्धज्ञानानांदेवानामप्येवमेव । अप्रतिबद्धज्ञानानांदेवानांतुदृष्टादृष्टसर्वफलमपिज्ञानेनैव । कर्मत्वतिशयाधायकमिति ॥ ४४५ ॥ एवंज्ञानोत्तरकर्मणांदृष्टादृष्टफललब्धिनांतरीयकतयैवमुख्यफलंमुक्तावानंदवृद्धिः । अतोऽवश्यंज्ञानिना कर्म कर्तव्यमित्याशयेन "आचारदर्शना"दितिसूत्रसिद्धार्थमाह ॥ ज्ञानीचेति ॥ ४४६ ॥ एवमशुभत्यागोपिकार्यः । "शुभकर्मभिराधिक्यंविपरीतैर्विपर्ययः । ननिषिद्धानिवर्तेतपूर्वज्ञानफलेच्छये"त्याद्युक्तेरित्याशयेन स्तुत्यधिकरणाभिप्रेतमाह ॥ अशुभमिति ॥ नन्वशुभेनानंदह्रासो

नयुक्तः । तथाहि । किंस्वरूपस्यह्रासः स्वरूपाधिकस्य साधनातिशयेनप्राप्तव्यस्यवा । आद्येपिह्रासोनामानभिव्यक्तिरुतविनाशः । नद्वितीयः । स्वरूपस्यनित्यत्वेनविनाशायोगात् । नप्रथमः । "प्रकृतिंस्वात्मसंश्लिष्टांगुणान्सत्वादिकानपि । कर्माणिसूक्ष्मदेहंचजायमानाहरेर्द्दृशिः । दहे"दित्यादिना अपरोक्षज्ञानेनाविद्याद्यावरणतिरस्कारस्यप्रमितत्वेनावरणापगमेचस्वरूपभूतानंदस्यस्वतएवव्यक्तिनैयत्येननिषिद्धकर्मादिनानभिव्यक्त्यनुपपत्तेः । नापिद्वितीयः । मध्यमाधिकारिणोयावत्स्वरूपपूर्तिनैयत्याभावेनाधिकार्जनस्यदूरनिरस्तत्वादितिचेदुच्यते । नाविद्यादिरेवात्मस्वरूपस्यावरणं । किंत्वीश्वरेच्छारूपाशक्तिरेव । तदुक्तं "ईश्वरेच्छाप्राथमिकी"ति । अविद्यादिस्तुनिमित्तमात्रं । तथाचापरोक्षज्ञानेनाविद्याद्यावरणनिवृत्तावपि नाशेषानंदाभिव्यक्तिः यावदीश्वरएवस्वीयांबंधशक्तिंनततोव्यावर्तयति । यदात्वयंपरमेश्वरोज्ञानोत्तरकर्मणापुनर्विशेषतःप्रसन्नोभवति तदामुक्तौस्वविशेषप्रसादसाधनानिकर्माण्युद्बोधयंस्तदास्वीयांबंधशक्तिंततोव्यावर्तयतीतिचेत् ज्ञानानभिव्यक्तमपिसुखवैचित्र्यंव्यज्यते । पूर्वंविकर्मकरणेतुव्यंजकभगवत्प्रसादाप्राप्त्यास्वयोग्यपरिपूर्तेर्यावत्साधनमनुष्ठेयं । तदतिरिक्तेनसाधनेनसत्कर्मादिनाभवितव्योप्यानंदोमुक्तिगोह्रासंविकर्मकरणाद्व्रजेदिति । तदेतज्जिज्ञासाधिकरणे "आनंदश्चमुक्ताना"मित्यत्रसुधायां "नन्वानंदःस्वरूपमेव । सचाविद्यानिवृत्तौस्वतस्सिद्धएवेत्याद्याशंक्य उच्यतेइत्यादिना अतएवानंदह्रासवृद्धीवक्ष्येते"इत्यंतंसंक्षेपतःप्रतिपादितं । ननुकर्मणोंतःकरणनिष्ठापूर्वकत्वात्कथंमुक्तावनुप्रवेशइतिचेत् मुक्तावुच्छित्तिमतांकर्मणांस्वरूपेपिभिन्नाभिन्नतयाचिंतनादिवत्उत्पाद्यांतःकरणसंनिधानात् । मुक्तावनुवर्तमानकर्मभिस्तुस्वरूपांतःकरणेतत्सन्निधानेनव्यक्तिरितिमुक्तावपि

तत्कर्मानुवृत्त्युपपत्तिर्भाष्ये । "नहास्यकर्मक्षीयते अस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजते" इतिश्रुतिरुदाहृता । मुक्तौ यद्यत्सुखंभोग्यंवाकामायतेतत्सुखादिकंअस्मात्परमात्मनःतत्प्रसादात्कर्मैवसृजतीत्यर्थः । ब्रह्मदर्शिकृतंपुण्यमल्पमपिमहत्तमम नंतंचभवतीतिभाष्ये तत्वप्रदीपिकायामनंतमनंतकालीनफलदमिति । तज्ज्ञानोत्तरकर्मणांमुक्तावनुप्रवेशस्य 'अन्यथातत्कृ तिर्नही'त्यनुव्याख्यानादावप्युक्तेः । ननुविकर्मकरणेनस्वरूपानंदह्रासेनस्वरूपस्यापूर्णतया अलंबुद्धिविषयानंदाभावेनमोक्ष स्यापुरुषार्थत्वंस्यादितिचेन्न । अपरोक्षज्ञानादेवालंबुद्धिगोचरवृद्धिह्रासरहितप्रचुरतरानंदलाभः । नहितस्यकेनापिहानिः । परंतु उत्तरसत्कर्माद्यार्जितस्यानंदगतस्यविषयानुभवादिव्यंग्यवैचित्र्यातिशयस्यैव । एवंचालंबुद्धिविषयानंदहान्यभावाद्वैचि त्र्यह्रासेपिनापुरुषार्थत्वं । ननुतर्हितेनैवालं कुतः कर्मसाध्यानंदवैचित्र्यमंगीकृत्य तस्यचेश्वरेच्छारूपावरणमप्यंगीकृत्य ज्ञानमात्रसाध्यापितन्निवृत्तिरुत्तरानुष्ठितकर्मणेत्यभ्युपगम्य तस्यचकदाचित्व्यक्त्यव्यक्तिरूपवृद्धिह्रासावित्येवंकुसृष्टिपरंपरे तिचेत् प्रमितत्वादेवेतिब्रूमः । प्रयोजनप्रश्नेतु तादृशानंदवैचित्र्यस्यपुनरिष्टत्वादित्युत्तरं । तदुक्तंज्ञानपादीयसुधायां "बहुत्वमप्यात्मसुखस्यैवपुनरिष्टत्वात्कर्मसुखेऽगीकृतेपिनविरोध"इति । एवंविकर्मकरणेनस्वरूपानंदह्रासोदेवावराणामेव । सुराणांतुविकर्मणिबुद्धिरेवनप्रवर्तते । बुद्धिप्रवृत्तावपिनविकर्मकरणं । कथंचित्करणेप्यहल्याजारत्वादिवदकिंचित्करमेव । ईषत्प्रारब्धानर्थसूचकंचतद्भवति । महत्त्वेवृत्रहत्यादिवत् अश्वत्थाम्नोदुर्योधनभार्यादावपत्योत्पादनेनभीमादिपांडवाभावा पादनप्रतिज्ञादिवत्ततोपिमहच्चेत्ब्रह्मास्त्रोपसंहारासामर्थ्यादीष्टकार्यविघातकंभवति । चंद्रसुग्रीवयोरिवस्वोच्चदारपरिग्रहादि

चेत्प्राप्तव्यानंदह्रासोभवति । नसर्वथास्वरूपहानिः । अत्रयद्वक्तव्यं तत्फलप्रकरणेप्रपंचयिष्यामः ॥४४७॥ ज्ञानजन्यफलप्राप्तिर्द्रव्यस्वातंत्र्याद्याधिक्यात्स्वामिनांदेवानांगुरूणांमुख्यतइति “स्वामिनःफलश्रुते”रित्यादिसूत्रादवगम्यते । तदाह ॥ ज्ञानजमिति ॥ “मुक्तावष्टगुणंशिष्याद्गुरुराप्नोतिशोभनं । तद्गुरुर्द्विगुणंतस्मात्सार्धंतावत्ततोपरे । देवाःसहस्रगुणितंक्रमाद्यस्माद्यथोत्तरं । ब्रह्मामहौघगुणितमेवंफलविनिर्णय”इत्यनुव्याख्यानादत्रविशेषोज्ञेयः । नच “अष्टभागफलंश्रुतात् । विद्ययात्वर्धमाप्नुयादि”तिबृहद्भाष्यविरोधः । तत्रकर्मफलंशिष्यापेक्षयाऽर्धंगुरुणाप्राप्यतइत्युच्यते । अत्रतुज्ञानफलमितिस्पष्टत्वात् । तत्रविद्य

ज्ञानजंयत्फलंतत्स्यात्स्वामिनामेवमुख्यतः । गुरवोदेवताश्चैवज्ञानस्वामिनईरिताः ।

क्रमादेवहितत्रापिस्वामित्वंब्रह्मणोधिकं ॥४४८॥ सहकारित्वतोहिस्यात्प्रजानांच(श्रुतं)शुभंफलं ।

येत्युक्तिस्तु शिष्यकृतकर्मफलस्यार्धस्यापिगुरोःप्राप्तौ विद्ययादत्तयानिमित्तेनेति निमित्तकथनरूपैवेतिसंतोष्टव्यं ॥ ४४८ ॥ नन्वस्त्वधिकारिगतज्ञानस्योपदेशादिप्रापकतयाऽऽचार्याणांस्वामित्वात् तदुत्तेजकतयाक्रमात्तत्तदिंद्रियज्ञानप्रयत्नादिसमस्तस्वातंत्र्योपेतत्वेनचाधिकस्वामित्वाद्देवानांचोत्तरोत्तरमाधिक्येनफलप्राप्तिः । ज्ञानिजीवस्यतुकुतःफलंकुत्रापिस्वतःप्रवृत्त्यभावादित्यतो राजादीनांभृत्यादेरिव सत्रयागेष्वृत्विजामिव ज्ञानादिनियामकानांमुख्यफलसद्भावेपिनियमनस्यनियम्यसापेक्षत्वेनज्ञानिस्वामिदेवताकर्तृकज्ञाननियमनादिरूपभगवदाराधनेज्ञानिप्रजानांनियम्यतयासहकारित्वात्तेषामपिश्रुत्याद्युक्तंफलं

स्यादेवेत्याह ॥ सहकारीति ॥ तदुक्तमानंदमालायां "नराणांभृत्यवदल्पचेतनफलं सुराणांक्षेत्रग्रामविषयस्वामिवत्क्रमाधिकंफलं ब्रह्मणस्सार्वभौमवत्(परम)करफलं सत्रयागेषुऋत्विजामिवाल्पंफलमवराणांयजमानानामिवमहन्मध्यमानां तद्गुरूणामिवमहत्तममुत्तमाना"मिति । उक्तंच "तत्रगोदातागोमात्रफलभाग्भवे"दित्याद्यनुव्याख्यानेच । मोक्षकालमाह ॥ प्रारब्धेति ॥ अवशिष्टमुत्तरप्रकरणांतेवक्ष्यामः ॥४४९–४५०॥ इतिसत्तत्वरत्नमालाप्रकाशेअपरोक्षज्ञानरूपसाधनप्रकरणं ॥ १२ ॥

प्रारब्धविगममोक्षोभवेन्नैवान्य(दा)थाक्वचित् ॥ ४४९ ॥ श्रीविठ्ठलार्यतनुजेनयथावबोध

मानंदतीर्थवरनामयुजाकृतायां । सत्तत्वरत्ननिकरोत्करमालिकायांसत्साधनप्रकरणंपरिपूर्णमंजः ॥४५०॥

## इतिसत्तत्वरत्नमालायांअपरोक्षज्ञानरूपसाधनप्रकरणं ॥ १२ ॥

हर्यत्यर्थप्रसादस्यजनकंजायतेयदा । ज्ञानंतदात्वनारब्धंपापंपुण्यमनिष्टकं ॥ ४५१ ॥

अथेदानींमोक्षलक्षणंफलंलक्ष्यते । तच्च कर्मक्षयोत्क्रांतिमार्गभोगाइतिचतुर्विधं । तत्रतावत्कर्मक्षयोनिरूप्यते ॥ हर्यत्यर्थेति ॥ अत्रायंनिष्कर्षः । मोक्षयोग्यानांकर्म तावद्द्विविधं । पुण्यंपापंचेति । पुण्यंचनिवृत्तप्रवृत्तभेदेनद्विविधं । तत्राद्यमकाम्यंपुण्यमपरोक्षज्ञानात्पूर्वभाविज्ञानसाधनं । "कर्मणाज्ञानमातनोती"त्यादेः । सत्कर्मणांतःकरणेतिपरिशुद्धेविमलसात्विकांतःकरणोपादानकंविशुद्धमेवमोक्षसाधनंतत्वज्ञानमुदेतीत्यस्यन्याय्यत्वात् । तदुत्तरंतुमुक्तावानंदातिशयायभवति । उपपादितमेतत्प्रवृ

त्ताख्यं । काम्यंद्विविधंप्रारब्धमप्रारब्धंचेति । अप्रारब्धकाम्यंद्विविधंइष्टमनिष्टंचेति । पापंचप्रारब्धाप्रारब्धभेदेनद्विविधं । तत्रापरोक्षज्ञानेनाप्रारब्धंपापमप्रारब्धमनभीष्टंपुण्यंचविनश्यति । अत्राविनाशोनामशुभाशुभफलापादकपुण्यादिक्रियाजनितांतःकरणपरिणामरूपापूर्वनाशेनस्वस्यतत्फलानवाप्तिः । वस्तुतस्तुतदापुण्यंसुहृदःस्वोपकारिणोमोक्षयोग्यान् पापंचद्विषतस्तमोयोग्यान्प्राप्नोति । तेषांकर्मप्राप्तिश्च यथाऽन्यैर्जपस्नानादिकर्मभिरन्योद्देशेनकृतैरन्यत्रापूर्वोत्पत्तिरेवंज्ञानिनामपकारिषुतमोयोग्येषूपकारिषुवैष्णवेषुचापरोपकारानुसारेणज्ञानिनिवृत्तकर्मभिस्तत्तत्फलापादकापूर्वोत्पत्तिरितिज्ञातव्यं ॥ ४५१–४५२ ॥

सम्यग्भस्मीभवेत्सर्वंनात्मनःफलदंभवेत् । तदापुण्यंतुसुहृदोद्विषंतःपापमाप्नुयुः ॥ ४५२ ॥

ज्ञानोत्तरंतुयत्पापंनश्लेषंयातितद्ध्रुवं । अशुचित्वादिकंतस्यनभवेदितितत्फलं ॥ ४५३ ॥

ज्ञानोत्तरानुष्ठितस्यानिष्टपुण्यस्यपापस्यचाश्लेषोभवति । अत्रालेपोनाममहापातकाद्याचरणेप्यशुचित्वासंभाव्यत्वस्वतोदेहांतरापादकत्वाद्यभावः । वस्तुतस्तु तत्फलप्राप्तिरस्त्येव । "शुभकर्मभिराधिक्यंविपरीतैर्विपर्यय"इत्युक्तेः । "तथाहि । विकर्मलेपोनैवास्तिब्रह्मणस्तुविकर्मतः । तदन्येषामपिचनप्रायोविकर्मसंभवः । कदाचिदपिनाधर्मेबुद्धिर्विष्णुदृशांभवेदि"तिगीताभाष्योक्तेः । प्रामादिकंत्वस्ति । तत्त्रिविधंअल्पंमहदतिमहदिति । अधिकारिणोप्युत्तममध्यमाधमभेदेनत्रिविधाः । तत्रोत्तमानांदेवानामल्पमकिंचित्करं । गीताभाष्ये "अल्पमहल्याजारत्वाद्यपीत्याद्युक्त्वा 'तस्यनलोमचमीयत'इत्याद्युपपादनात् । "प्रमा

दात्तुकृतंपापंस्वल्पंभस्मीभविष्यती"तिच । अत्राल्पस्यविकर्मणोदेवादिषुव्यर्थत्वोक्तिरनर्थजनकत्वतत्सूचकत्वाद्यभावाभिप्राये णैव । वस्तुतस्तु अशुभादेर्द्विविधंफलं । स्वाचरणनिमित्तकानर्थप्राप्तिः । अशुभाचरणाभावप्रयुक्तोयउन्नाहस्तदभावश्चेति । यथा एकादश्याद्युपवासाद्याचरणेमहाफललब्धिःप्रत्यवायपरिहारश्च तथेति । तत्रयद्यपिदेवानांस्वल्पाशुभकरणेननानर्थसंभवः । तथाप्यशुभाभावजोयउन्नाहस्तदभावरूपंफलंभवत्येव । तदुक्तंपंचमतात्पर्ये "अशुभाभावजोन्नाहोमहाधीकारिणामपि । अशुभेकृतेनभवतितारतम्याच्चसस्मृत"इति । एतेन "शुभकर्मभिराधिक्यंविपरीतैर्विपर्यय"इतिभाष्यवचनंसर्वसाधारणमितिलक्ष्यते । महद्विकर्मतुब्रह्महत्यादिरूपमवश्यभोक्तव्यप्रारब्धानर्थस्यसूचकं देहारंभकारब्धकर्मफलत्वेन नियतस्यमरणस्य विषाशनवत् । तथाचोक्तंगीताभाष्ये "ईषत्प्रारब्धानर्थसूचकंचतद्भवति महच्चेद्वृत्रहत्यादिवत्"इति । "ब्रह्मापरोक्षेपिविकर्मसूचकंप्रारब्धपापस्यविषाशनंयथेतिविषभक्षामृतेरिवेतिचानुव्याख्यानेनकेवलंमहाविकर्मणोनर्थसूचकत्वमात्रं । सूच्यतेचतदैव चित्तखेद"इतिप्रमेयदीपोक्तरीत्यातात्कालिकानिष्टजनकत्वंचांगीकार्यं । एवमन्यदपिसाक्षात्तात्कालिकानर्थप्रदमूह्यं । यथाऽश्वत्थाम्नोब्रह्मास्त्रोपसंहारासामर्थ्यंदुर्योधनभार्यायामपत्योत्पादनेनापांडवत्वापादनप्रतिज्ञया । यथाचवालिभार्यायाःस्वर्गाप्राप्तिः । चित्रांगदादेहेअर्जुनासांनिध्यंच । कर्णस्यचसहस्रवर्मनामकासुरसंवेष्टितत्वं । युधिष्ठिरस्यनरकदर्शनमित्यादि । ननु "ज्ञानादिव्यक्तिरव्यक्तिःसुखदुःखादिकंतथा । सुदृष्टब्रह्मतत्वानांभवत्यारब्धकर्मणामि"ति प्रथमतात्पर्येज्ञानोत्तरस्यसर्वस्यशुभाशुभजातस्यारब्धकर्मकारणकत्वोक्तेःकथमपांडवतासंकल्पवृत्रहननसुग्रीवांगसंगादेरुक्तरूपानर्थापादकत्वमितिचेत्सत्यं । प्रार

ब्धस्यशुभाशुभापादकत्वंद्वेधाविवक्षितं साक्षात्परंपरयाचेति । तत्राद्यंयथासौभरिकर्दमादीनांमहैश्वर्यं वसिष्ठस्यपुत्रशोकादि । द्वितीयंतु शताश्वमेधादिनैंद्रत्वादिकंशुभं । इंद्राश्वत्थामतारादीनांवृत्रहननापांडवतासंकल्पसूर्यजांगसंगादिकंचाशुभं । "पुरास वालिमारणप्रभूतदोषकारणात् । सहस्रवर्मनामिनाऽसुरेणवेष्टितोऽजनि" इत्याद्युक्तविधं । अत्रप्रारब्धकर्मणावालिवृत्रमारणादिविकर्मकरणं । तेनचासुरवेष्टनचित्तखेदादिप्राप्तिरितिपरंपरयाप्रारब्धफलत्वमिति नोदाहृतवाक्यविरोधः । अन्यथा "स्वधर्मनिष्ठःशतजन्मभिःपुमान्विरिंचतामेति" इत्यादौ उत्तरपुण्यस्यपारमेष्ठ्यादिहेतुतोच्यमाना नस्यादिति । यद्यपिवालिमारणादिकंश्रेष्ठापराधरूपत्वेनातिमहाविकर्म । तथापिविकर्मसाम्यादत्रोदाहृतमित्यदोषः । तथाचप्राप्तव्यहान्यतिरिक्तदृष्टफलसंपादक

शुभाशुभाभ्यांयद्वृद्धिह्रासावपिभविष्यतः । अतोऽलेपेपिलेपःस्यादत्रापिफलदत्वतः ॥ ४९४ ॥

त्वप्रसंगादत्रोदाहृतमितिज्ञेयं । ननुवृत्रहत्यादेश्चित्तखेदजनकत्वादिकंनयुक्तं । तस्यश्रेष्ठापराधरूपत्वाभावात् । "श्रेष्ठापराधान्नान्यस्यदोषस्यलेपः" इत्युक्तेरितिचेत्सत्यं । आनंदह्रासरूपलेपस्यश्रेष्ठापराधमात्रजन्यत्वंतत्रोच्यते । अत्रतुमहाविकर्मणाऐहिकईषल्लेपोंगीक्रियतइतिकुतोविरोधः । उक्तंचगीताभाष्ये "आदिराजैस्तथादेवैर्ऋषिभिःक्रियतेकियत् । बाहुल्यात्कर्मणस्तेषां दुःखसूचनमेवही" ति । कियत् महदितिप्रमेयदीपिकायां । ननुतथापिनवृत्रहत्यायाअनर्थसूचकत्वमुचितं । "नहिलोकावनं पापंत्रैलोक्येशस्यवज्रिण" इत्यपापत्वोक्तेः । "इंद्रोवैवृत्रंहत्वामहान्भवती" तिपुण्यत्वोक्तेश्चेतिचेत्सत्यं । वृत्रहत्यायालोकावनार्थं

तयावस्तुतःपुण्यरूपत्वेपिस्वरूपतोहननात्मकतयानिषिद्धतयापापरूपत्वंचस्यादेव । परंतुलोकसंरक्षणेनभगवत्प्रीत्यतिशया पादकतयामहत्त्वहेतुत्वेनापापत्वाद्युक्तिः । यथोक्तंनिर्णये "क्वचित्पापंचपुण्यानांवृद्धयेभवतिस्फुटं । वृत्रहत्यायथेंद्रस्यजाताध र्माभिवृद्धय"इति । ऋग्भाष्येच "उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाये"तिऋग्व्याख्यानावसरे "वियोजयास्मत्कृ तान्याश्वघानिपुण्यंपापंमिश्रमित्येवपाशा"नित्युभयात्मकंकर्मचोक्तं । अतोवृत्रवधस्यपापरूपत्वमहापुण्यरूपत्वयोरुपपन्नत्वादु क्तंयुक्तमिति । अतिमहद्विकर्मयत्स्वोत्तमद्रोहरूपंतेनस्वयोग्यतापेक्षयाऽधिकस्यप्राप्तव्यस्यह्रासोभवति । "प्राप्तह्रासोभवेत्क्वा पिमहतातुविकर्मणा । चंद्रसुग्रीवयोश्चैवस्वोच्चदारपरिग्रहात् । क्लृप्तहानिरभून्नैवप्राप्तहानिःकथंचने"त्याद्युक्तेः । यस्यदेवस्यया

प्राप्तव्यह्रानिर्देवानांभवेच्छ्रेष्ठापराधतः । नक्लृप्तस्ययतोमुक्तौसुखंक्लृप्तंयथाक्रमं ॥ ४५५ ॥

वद्गुणवत्त्वंक्लृप्तं तस्यकेनापिविकर्मणासर्वथाहानिर्नभवति । किंतुस्वसामर्थ्येनस्वयोग्याशेषानंदपरिपूर्तयेयावत्साधनजातमनुष्ठेयं ततोतिरिक्तेन सुग्रीवविविदादीनांरामसेवनातिशयवदनुष्ठितेनाधिकेनसाधनेनयदानंदादिकंप्रसक्तंतत्प्राप्तमित्युच्यते । तस्यैव ह्रासोभवेत् । "स्वाधिकाराधिकोयत्नःकथंचिन्नोपपद्यते । कथंचिदधिकेयत्नेदोषःकश्चित्समापते"दित्युक्तेः । सचदोषःश्रेष्ठापरा धरूपएव । श्रेष्ठापराधान्नान्यस्यदोषस्यलेपइत्युक्तेः । ननुचंद्रसुग्रीवयोःप्रथमदिनकल्पएवस्वोच्चदारपरिग्रहोस्ति । प्रतिदिनम पिनियतत्वात् । तदास्वयोग्ययावदानंदपरिपूर्तिरस्तिनवा । आद्येद्वितीयादिसकलदिनेष्वनुष्ठीयमानसाधनजातस्यसर्वस्यापि

स्वाधिकाराधिकयत्नत्वापत्त्यातद्धानिनैयत्येनसर्ववैयर्थ्यंस्यात् । "स्वाधिकाराधिकोयत्नःकथंचिन्नोपपद्यते"इत्युक्तिविरोधश्च । द्वितीयेस्वयोग्यानंदपूर्तेरभावेनाधिकार्जनस्यैवासंभवात्स्वोच्चदारपरिग्रहादेरादिकल्पेह्रासापादकत्वाभावइतिचेन्न । तत्तत्काले यावत्साधनमनुष्ठेयमितीशक्लृप्तिः । तत्रतत्रततोधिकयत्नेकृतेसएवाधिकाराधिकयत्नोभवेत् । तत्कालेस्वसंपाद्यसाधनापेक्षयाऽधिकसाधनत्वात् । तस्यचस्वोच्चापराधेनह्रासइतिसंप्रदायः । अतोनकश्चित्क्षुद्रोपद्रवइत्युत्तमानांस्थितिः । "देवानांनाशुभाद्ध्रासःशुभात्काचित्सुखोन्नतिः । आधिकारिकजीवानामेवमन्येषुचद्वयं । अल्पाधिकारिणांतत्रह्रासोपिभवतिध्रुवं । अशुभाभावजोन्नाहोमहाधीकारिणामपि । अशुभेकृतेनभवतितारतम्याच्चसस्मृतः । प्रजापाश्चतथादेवामहाधीकारिणःस्मृताः"इतिपंचमतात्पर्यवाक्यमपीममेवार्थंवक्ति । अयमर्थः । देवानामशुभाचरणेतत्क्लृप्तस्यस्वरूपस्यह्रासोनास्ति । शुभादपिक्लृप्तस्वरूपापेक्षयाऽधिकसुखंचनास्ति । अधिकयत्नेह्रासनैयत्यादित्यर्थः । यद्वाशुभात्अपरोक्षोत्तरात्काचित्सुखोन्नतिःआनंदोद्रेकोभवति । अत्रदेवानामित्यनेनप्रजापतयोपिग्राह्याः । आधिकारिकदेवानामेवमित्यतिदिश्य अल्पाधिकारिकव्यावृत्त्यर्थमेवमहाधिकारिशब्देनव्यवहृत्य "प्रजापाश्चतथादेवामहाधीकारिणःस्मृताः"इत्युक्तेः । इतःपरं "ऋष्यशीतिस्तथासप्तपितरोप्सरसांशतं । गंधर्वाणांतथाराज्ञांविंशदन्यासुजातिषु । अल्पाधिकारिणःप्रोक्ता"इतिपंचमतात्पर्योक्तकर्मदेवादयोत्रमध्यमत्वेनविवक्षिताः । भृग्वादीनांसनकादीनांचदेवतासमत्वादत्राल्पाधिकारिकत्वेनतदतिरिक्तानामेवग्रहणमितिभावेनऋष्यशीतिरित्युक्तं । अप्सरसांगंधर्वाणांचशतं राज्ञांचशतमितियोजना । अतः "ऋषीणांशतमेवच । राज्ञांचशतमुद्दिष्टंगंधर्वादिशतंतथे"तिभाष्येणैकवाक्यता ।

विंशदन्यासुजातिष्वित्यत्रभाष्यमुपलक्षणंमंतव्यं ॥ ४५३–४५५ ॥ एतेषांमध्यमानांस्थितिमाह ॥ ह्रासइति ॥ अयमाशयः। अल्पाधिकारिणामेतेषामल्पंविकर्माकिंचित्करं। कदाचिदपिनाधर्मेबुद्धिरितिवचनेआदिराजैरितिगृहीतत्वात् । आचरणेपि पूर्ववदुन्नाहाभावोस्त्येव । महद्विकर्मत्वनर्थसूचकंतात्कालिकानिष्टप्रदंचपूर्ववत् । अल्पंस्वतोकिंचित्करमपिमहाविकर्मसाहाय्येसतिईषदनर्थकारकंभवति। यथाराजादिर्भृत्यकृताल्पापराधेननकुप्यति। अतएवनदंडंकरोति । अथतेनैवमहापराधेकृते सतिपूर्वकृतमल्पतयोपेक्षितमप्यपराधंसंस्मृत्यातिकुपितस्तदानींकृतमहापराधानुसारिदंडापेक्षयाऽधिकदंडंकरोत्येवहीतिसिद्धं । तथाप्रकृतेपिप्रारब्धसाहाय्येनाल्पस्यानर्थकारकत्वमिति । यथामांडव्यस्यशूलारोपणेवसिष्ठसाम्यप्रयत्नरूपमहाविकर्मसहकारि

आकिंचित्करमल्पंस्यान्महच्चेद्दुःखसूचकं। ह्रासःश्रेष्ठापराधात्स्यात्स्वरूपेकार्मिकादिनां ॥ ४५६ ॥

तयामक्षीवधस्यापिकारकत्वं। तदुक्तंनिर्णये "अयोग्यसंप्राप्तिकृतप्रयत्नदोषात्समारोपितमेवशूले । मक्षीवधादित्यवदद्यमस्तं नासत्यतातस्यचतत्रहेतुत"इति । महद्विकर्मतुप्रारब्धानर्थसूचकंचित्तखेदजनकंचभवति । कदाचित्प्राप्तव्यह्रासोपितेनभवति। स्वोच्चापराधरूपमतिमहच्चेत्स्वरूपेपिह्रासोभवति । "अल्पाधिकारिणांतत्रह्रासोपिभवतिध्रुव"मित्युक्तेः । नचप्राप्तव्यह्रासोत्रविवक्षितइतिवाच्यं । तस्यदेवेष्वपिभावात् देवानांनाशुभाद्ध्रासइत्युक्त्वा "आधिकारिकजीवानामेव"मित्यतिदिश्य तदपवादतया अल्पाधिकारिणांतत्रह्रासोपिभवतिध्रुवमित्युक्त्यनुपपत्तेः। अथवा अल्पाधिकारिणामपिस्वोच्चापराधेन

नस्वरूपेह्रासः । किंतुमहाधिकारिवत्प्राप्तव्यस्यैव । नचोक्तानुपपत्तिः । देवानांस्वोच्चापराधादन्यस्मादशुभात्प्राप्तव्यस्यापिह्रासो नास्ति । अल्पाधिकारिणांतुश्रेष्ठापराधादन्येनमहाविकर्ममात्रेणापिप्राप्तव्यह्रासोभवतीत्यर्थोपपत्तेः । नच "आदिराजैस्तथादेवैर्ऋषिभिःक्रियतेकियत् । बाहुल्यात्कर्मणस्तेषांदुःखसूचकमेवत"दितिमहाविकर्मणोदुःखसूचकत्वमात्रोक्तेर्ह्रासापादकत्वोक्तौतद्विरोधइतिवाच्यं । दुःखसूचकंभवत्येवेत्ययोगव्यवच्छेदकत्वस्याप्युपपत्तेः । अप्रतीकालंबनानांसायुज्यभाजांस्वरूपह्रासस्यायुक्तत्वात् । स्पष्टज्ञापकाभावात् । अल्पाधिकारिणांतत्रेत्यस्योक्तरीत्यासावकाशत्वादिति ॥ ४५६ ॥ अनधीकारिणःपरइत्युक्ता

विकर्ममात्रतोह्रासोह्यल्पानांमानुषादिनां । भवेन्मुक्तौविशेषेणस्वोच्चानामपराधतः ॥ ४५७ ॥

ज्ञानव्यंग्यस्यनह्रासःसुखस्यतुकथंचन । यावत्स्वरूपस्याव्यक्तिः केवलंत्वीश्वरेच्छया ॥ ४५८ ॥

नामधमानामाह ॥ विकर्ममात्रतइति ॥ तत्रापियोग्यताक्रमानुसारेणविशेषोद्रष्टव्यः । पापाधिक्य(मात्र)क्रमेणाप्यतिशयोज्ञेयइत्याशयेनोक्तंविशेषेणेति । तदुक्तमनुव्याख्याने "ह्रासोपिमानुषादीनामानंदस्यविकर्मणा । भवेन्मुक्तौविशेषेणस्वोच्चानामपराधत"इति ॥ ४५७ ॥ ननुस्वरूपानंदह्रासेमुक्तेरपुरुषार्थत्वमित्यतआह ॥ ज्ञानेति ॥ अपरोक्षज्ञानव्यंग्यस्यसंपूर्णस्यालंबुद्धिगोचरतयानित्यानुभवयोग्यप्रचुरानंदस्यह्रासाभावात् साधनांतरसाध्यस्वरूपानंदवैचित्र्यमात्रस्यह्रासेपिनदोषइतिभावः । मुक्तेरविद्यादिसमस्तावरणापगमरूपत्वात्कथंतत्रस्वरूपानंदवैचित्र्यानभिव्यक्तिरित्यतआह ॥ यावदिति ॥ उपपादितमेतज्ज्ञा

नप्रकरणे ॥ ४५८ ॥ यथापापश्लेषेयोग्यतावैचित्र्याद्वैचित्र्यंतथाकिमनिष्टपुण्याश्लेषेपीत्यतआह ॥ अनिष्टेति ॥ इयांस्तुविशेषः । अनिष्टकाम्यकर्माचरणप्रयुक्तोन्नाहाभावस्तारतम्याद्भवतीतिकाम्यकर्मणोनिष्टत्वेतदाचरणमेवनस्यादितिचेत्सत्यं । करणकालेइष्टत्वप्रकारकबुद्धिभावेपिपश्चात्परामर्शेनकाम्यंकर्माधिकानंदसाधनंचेदिच्छामितदेवफलितंभूयात् । यच्चराजत्वाद्यापादनद्वारानंदह्रासापादकविकर्माचरणकारणंतन्निष्फलमेवभूयादित्यनुसंधानेनकाम्यानामनिष्टत्वंविवक्षितमित्यदोषः । यथोक्तमानंदमालायां "तस्मादभीष्टमेवसर्वंपुण्यमपीतिचेत्सत्यं । काम्यंकर्म पुनरार्जनेसाधनंचेदिच्छामीतीष्टं । नोचेत्तदनिष्टं ।

अनिष्टपुण्यस्याश्लेषःसर्वेषांसमएवहि । प्रारब्धयोस्तुनियमाद्भोगेनैवक्षयोभवेत् ।
उपमर्दोपिभवतिकिंचिद्भुक्तस्यसंविदा ॥ ४५९ ॥ वैश्वानरेद्युनद्यांवासूर्येवादेहएववा ।

स्वार्जितमहासुखप्रतिबंधकत्वात् । अतोऽनिष्टत्वात्क्षीयतएवतादृशंपुण्यमनिष्टवदिति । प्रारब्धपुण्यपापयोःकथंनाशइत्यतआह ॥ प्रारब्धयोरिति ॥ प्रारब्धकर्मजस्यैवविषभक्षामृतेरिव । प्राप्तस्याप्यनिवृत्तस्यकिंचिद्भुक्तस्यसंविदा । उपमर्दइहप्रोक्तोदेवादीनांयथाक्रमं । सर्वात्मनात्वभोगोहिप्रारब्धस्यैवकर्मणः । नब्रह्मदर्शिनोपिस्यात्फलह्रासस्तुविद्यत" इत्यनुव्याख्यानंमनसिनिधायाह ॥ उपमर्दइति ॥ उपमर्दोनामबहुफलेभवितव्येस्वल्पमात्रपर्यवसानं । उक्तंचतत्वप्रदीपे "उपमर्दःफलह्रास" इति । "महताकारणेनैवप्रारब्धान्यपिकानिचित् । कर्माणिक्षयमायांतिब्रह्मदृष्टिमतःक्वचिदि"तिप्रथमतात्पर्यं ॥ ४५९ ॥ कर्मशेषनिवृत्तिस्थानमाह ॥ वैश्वानरइति ॥ स्वर्गस्थद्युनद्यांसूर्यमंडलंभित्त्वागमनसमये । प्रायःशब्देननसर्वविनाशइतिज्ञायते ।

तर्हितच्छेषनाशःकदेत्यतआह ॥ प्रारब्धेति ॥ एतद्भोगप्रसंगेविवरिष्यामः ॥ ४६० ॥ प्रारब्धकर्मानुभवःकस्यकियत्कालमित्यतोधिकारिविशेषनिष्ठत्वेनप्रपंचयदनुव्याख्यानवचनंपठति ॥ ब्रह्मणामिति ॥ अत्रब्रह्मशतकालस्यादौकियतःकालस्यब्रह्मापरोक्षज्ञानसाधनार्थंगतत्वादपरोक्षज्ञानस्यकिंचिन्न्यूनशतकालमनुवर्ततेहिरण्यगर्भत्वयोग्यजीवस्यप्रारब्धकर्म ॥ ४६१ ॥ रुद्रपदयोग्यजीवस्याप्येवंकिंचिन्न्यूनपंचाशद्ब्रह्मकालमनुवर्ततेप्रारब्धकर्म । इंद्रादिपदयोग्यानामप्येवंप्रारब्धकर्मह्रासेक्रमोभवति

प्रारब्धकर्मशेषस्तुविरजातरणावधिः ॥ ४६० ॥ ब्रह्मणांशतकालात्तुपूर्वमारब्धसंक्षयः ।
ब्रह्मणस्त्वेवतावत्त्वंपंचाशद्ब्रह्मणस्तथा ॥ ४६१ ॥ रुद्रस्याविंशदेवस्यादिंद्रस्यार्कादिकेदश ।
अन्येषांब्रह्ममात्रस्यत्वंतरारब्धसंक्षयः ॥४६२॥ तृणादिचेतनानांस्यादेकजन्मादिमात्रतः ॥४६३॥

## इतिसत्तत्वरत्नमालायांकर्मक्षयप्रकरणं ॥ १३ ॥

कालतइत्यर्थइतिसन्न्यायरत्नावल्युदाहृतरीत्याऽर्थोज्ञेयः । नच "तथैवचत्वारिंशद्भिःपदंशैवंचजन्मभि"रितिचतुर्थतात्पर्यविरोधः । तस्यशिवपदप्राप्तिसाधनानुष्ठानकालपरत्वात् । अत्रत्वपरोक्षानंतरंप्रारब्धानुभवकालस्यपंचाशद्ब्रह्मकल्पत्वमुच्यतइतिभिन्नविषयत्वेनकुतोविरोधः । केचित्तुतात्पर्यवचनस्यापिप्रारब्धानुभवकालपरतामेवमन्वानाअल्पत्वादविवक्षेत्यविरोधइत्याहुः ॥ ४६२ ॥ यस्मिन्देहेज्ञानमुत्पन्नंतत्पातानंतरमेवमुक्तिर्लभ्यतेप्रारब्धप्रतिबंधाभावेइतिसुधोक्तेराह ॥ तृणादीति ॥ तेषामल्प

योग्यतयाऽल्पप्रारब्धवत्त्वं । क्रमादुत्तमानांमुक्तौब्रह्मानंदानुभवयोग्यत्वेनतत्प्रापककर्मानुष्ठानसाधनहेतुप्रारब्धस्यापिक्रमेणा धिक्येनबहुकालमनुवर्ततेप्रारब्धंकर्मेतिभावः। तदुक्तंसन्न्यायरत्नावल्यां "प्रारब्धकर्मचनैकशरीरपरिसमाप्यं। किंत्वधिकंमोक्षं साधयतामधिकमधिकंकालमनुवर्तत" इति । नचैवं बहुकालंसंसारावस्थानेनप्रारब्धानुभवेविकर्मकरणस्यापिसंभवेहानिरपिस्या दितिवाच्यं । प्रकृत्याद्यावरणस्यसर्वस्यज्ञानतएवदग्धत्वेनप्रायोविकर्मकरणाभावस्य "प्रकृतिंस्वात्मसंश्लिष्टा"मितिप्रथमतात्पर्ये "कदाचिदपिनाधर्मेबुद्धिर्विष्णुदृशांभवे"दितिगीताभाष्यादौसिद्धत्वात् । क्वचिद्विकर्मकरणंतुप्रकृत्यादेःक्वचिद्दग्धेंधनादिवदा

एवंप्रक्षीणकर्माणःप्रसादाच्चक्रपाणिनः । उत्क्रामंतिततोदेहाच्चरमान्मानुषादयः ॥ ४६४ ॥
उत्क्रांतिमार्गौदेवानांनप्रायेणभविष्यतः । तत्रप्रवेशोदेवानामुत्तरोत्तरतःक्रमात् ।
स्रष्टृष्वेवहिसृज्यानांप्रवेशोब्रह्मणोलये ॥ ४६५ ॥ स्वसमानलयस्थानेष्वेकेषांविलयोभवेत् ।

विर्भावनिमित्तकप्रमादायत्तं । सादग्धेंधनवच्चपुनराविर्भावेपितिरोव्रजेदिति, प्रमादात्तुकृतंपापं, इतिचोक्तेः । तच्चतारतम्य क्रमेणैवभवतीतिनकश्चित्क्षुद्रोपद्रवः ॥ ४६३ ॥ इतिसत्तत्वरत्नमालाप्रकाशेकर्मक्षयप्रकरणंसंपूर्णं ॥ १३ ॥

अथाशेषानिष्टकर्मक्षयवतांज्ञानिनांदेहमोक्षोभिधीयते ॥ एवंप्रक्षीणकर्माणइत्यादिना ॥ ४६४ ॥ मानुषादयइत्युक्तं । तत्कुत इत्यतोदेवानांमानुषावतारादन्यत्रोत्क्रांत्यभावादित्यतोनुव्याख्यानंपठति ॥ उत्क्रांतीति ॥ कथंतर्हितेषांदेहलयइत्यतोनुव्या ख्यांपठति ॥ तत्रेति ॥ तत्रापिविशेषमाह ॥ स्रष्टृष्वेवेति ॥ ४६५ ॥ यत्रस्रष्टृसृज्यभावाभावस्तत्रकथमित्यतः "तत्समानां

चस्वसमानलयस्थानएवलयोपपत्ति”रितिन्यायविवरणंमनसिनिधायाह ॥ स्वसमानेति ॥ शचीरत्यादीनामिंद्रकामादिष्विव प्रत्यासत्तिविशेषोप्यपेक्षितइत्याह ॥ स्वस्वेति ॥ ४६६ ॥ एवंक्रमादुत्तरोत्तरदेवेषुप्रविष्टानांसर्वेषामपियथायोगंसुपर्णेशेषेच्चप्रवेशस्तयोरुभयोरपिसरस्वत्यामित्याह ॥ क्रमादिति ॥ भाष्यानुव्याख्याननन्यायविवरणादौचस्पष्टमेतत् । भृग्वादयइत्यत्रवसिष्ठमरीच्यादेर्ग्रहणमित्यादिसन्न्यायरत्नावल्यादौच । अत्रैतेसंग्रहश्लोकाः । “ब्रह्मारमामागतआदिदेवंविष्णुंविशत्येनमपिस्मवाणी । वीशःफणीशश्चसरस्वतींतांसुपर्णमेतिस्मसुपर्णपत्नी ॥ १ ॥ तामिंद्रदेवःप्रविशत्यपींद्रंमरुद्गणाःप्रवहाद्यागुरुश्च । दक्षोमनुश्चैवविशंतिवैगुरुंभूमिश्चसूर्यंश्चविनायकश्च ॥ २ ॥ पृथ्वींतुसर्वेंऽभवोमृत्यवश्चसूर्यंचवह्निःप्रविशत्यमुंच । वह्न्यात्मजाश्चावशिष्टाश्च

स्वस्वसृष्ट्यनुसारेणसर्वेषामुत्तरोत्तरं ॥ ४६६ ॥ क्रमादेवप्रविष्टानांलयःस्याद्वींद्रशेषयोः ।

देवाविनायकंसाध्यगणाविनायकाः ॥ ३ ॥ भृगुर्वसिष्ठप्रमुखाश्चदक्षंमनुंयमश्चापिप्रियव्रताद्याः । नृपाश्चवैवस्वतपूर्वकाश्चविशंतिसर्वेमनवोंजसैव ॥ ४ ॥ प्रयातिधर्मंनिर्ऋतिस्तथैवसंयांतिसर्वेपितरोमनुष्याः । वर्णाश्रमाचाररताश्चतेषांप्रवेशमात्रंतुभवेद्धिकाले । देहक्षयेनैवभवेद्धितेषामुत्क्रांतिभाजामितिवीशमार्गः ॥ ५ ॥ शेषंविशत्येवहितस्यपत्नीतांकामएतंसनकादयस्तु । यतीश्वराश्चानिरुद्धोऽनिरुद्धंविष्वक्सेनःपार्षदाश्चैवसर्वे ॥ ६ ॥ सोमश्चसोमंवरुणःकुबेरस्तत्राप्पतिंयांत्यसुरास्तथापः । नासत्यदस्रावपिवित्तपंतुगंधर्वाद्यादेवभृत्याःसमग्राः ॥ ७ ॥ येषामनुक्तिःप्रविशंतितेतुलयस्थलेहिस्वसमानकानां । नयत्समानांचविशेषवा

क्यंतेचावशिष्टाइतिपूर्वमुक्ताः । तेरूपभेदैर्बहुधाविसृष्टाःस्वस्रष्टृरूपेषुचसंविशंति ॥ ८ ॥ इतिक्रमेणैवलयंप्रयांतियतोहिबिंबप्रतिबिंबभूताः । बिंबेलयोऽयंनियतश्चमुक्तौचिदात्मनांतद्वशताचसर्वदा ॥ ९ ॥" अत्रप्रियव्रतादीनांराज्ञांमनुष्योत्तमादीनांमनुधर्मादिप्रवेशःकथमुच्यते । उत्क्रांत्यैवतेषांचरमशरीरलयनैयत्यादितिचेत् श्रूयतामवधानेन । तेहिचरमशरीरादुत्क्रम्य अर्चिरादिपथावायुंप्राप्य तेनचस्वयोग्यवैकुंठादिसांतानिकलोकान्प्रापिताः तत्रज्योतिर्मयशरीरेणसुखंवसंतः परांतकालेस्वायंभुवमनुधर्मादीन्प्रविशंतीति ॥ ४६७ ॥ प्रकृत्याख्यस्येति ॥ यद्यपिसरस्वत्याश्चतुर्मुखेलयोनियतः । "सगिरंचसैववायुंविश

तयोस्तुवाण्यांसावाणीलयंयातिचतुर्मुखे ॥ ४६७ ॥ प्रकृत्याख्यस्यरूपस्यनलयःस्याच्चतुर्मुखे ।

पुरुषेणातिसामीप्यंप्रकृतेर्लयउच्यते ॥ ४६८ ॥

त्यंजइहैवनिर्णयः, सहतेनवाणीब्रह्माण"मित्यादिनाबहुशोनुव्याख्यानादावभिधानात् । वाण्याविरिंचाज्जननस्य बहुशोभिधानात्प्रमितत्वेन "स्रष्टुस्तुग्रासभूतस्ये"तिन्यायसिद्धत्वाच्च । तथापि "प्रद्युम्नतश्चाद्यकृतौस्त्रियौद्वेप्रजज्ञतुर्यमलेतत्रपूर्वा । प्रधानसंज्ञाप्रकृतिर्जनित्री"तिनिर्णयोक्तप्रद्युम्नजातप्रकृतिनामकरूपस्यप्रद्युम्नएवलयोंगीकार्यः । "स्रष्टुस्तुग्रासभूतस्ये"तिन्यायात् । किंचैकादशचतुर्विंशतात्पर्ये "साचसत्वादिभेदतः। त्रिविधैकत्वमापद्यविष्णावेवविलीयते"इतिलक्ष्म्याहरौलयमुक्त्वा "हरेरत्यंतसामीप्यंलयोलक्ष्म्याःप्रकीर्तित"इत्यतिसामीप्यमेवात्रविलयोविवक्षितइत्यभिधाय "प्रकृतिर्मूलरूपासाब्रह्मपत्नीजगन्मयी ।

पुरुषाभिधेविरिंचेति"तिप्राक्प्रद्युम्नाज्जातप्रकृतिनामकवाणीरूपस्यपुरुषनामकेविरिंचेप्रोक्तलयोप्यतिसामीप्यविवक्षयैवेत्युक्तं "पुरुषेणातिसामीप्यंप्रकृतेर्लयउच्यते"इत्यादिना । छांदोग्यभाष्येच "वाक्प्राणौदंपतीचापिसंसृज्येतेजनार्दने । मुक्ता"वित्यादिनावाण्याःसाक्षाद्विष्णावेवलयोभिधीयते । तस्मात्सरस्वत्यनेकरूपाणांविरिंचेलयः । प्रकृतिनामकप्रथमरूपमात्रस्यहराविति सिद्धं ॥ ४६८ ॥ "प्राणस्यतेजसिलयोमार्गमात्रउदाहृतः । द्वारमात्रातुसादेवी"त्युक्तेराह ॥ विरिंचइति ॥ नन्वेवंदेवानामुत्तरोत्तरप्रवेशेनदेहलयमंगीकृत्योत्क्रांत्याद्यनंगीकारे कर्मक्षयभोगमात्रप्राप्त्या कर्मक्षयादिपादचतुष्टयात्मकसमग्रफलाध्यायोक्तफलाभावेन सर्वाधिकारिमोक्षपरत्वमस्याध्यायस्यनस्यादित्यतोपूर्वप्रमेयमाह ॥ देवत्वेत्यादिना ॥ अयमाशयः । अस्त्येवदे

विरिंचोरमयानीतोलीयतेपरमेऽव्यये । देवत्वप्राप्तितःपूर्वंजन्मन्येतेसमस्तशः ॥ ४६९ ॥

वानांचतुर्विधोमोक्षः । नचोत्क्रांतिमार्गौदेवानांनप्रायेणेतिविरोधः । अनुव्याख्यानेप्राप्तदेवत्वानामुत्क्रांत्यादिनिषेधःक्रियते । उत्क्रांतिमार्गाभ्युपगमस्तुदेवत्वप्राप्त्यव्यवहितपूर्वजन्मनि । नचदेवत्वात्पूर्वस्यचरमशरीरत्वाभावात्कथंतत्रमुक्तिरूपोत्क्रमणमितिवाच्यं । देवत्वस्यज्ञानमहाफलरूपत्वेनावांतरमुक्तितयैवविवक्षितत्वात् । "मनुष्याःसंतोदेवाभवंती"तिन्यायेनदेवत्वात्पूर्वंमनुष्यशरीरस्यैवचरमशरीरत्वविवक्षा । तस्मादुत्क्रम्य अर्चिरादिपथावायुंप्राप्य तेनजनार्दनंतेपूर्वंयांति । तत्रवैकुंठादौसांतानिकतया स्थित्वामहालयसमयेमहालक्ष्म्यांप्रविश्यभगवदुदरगताःसुप्ताःस्थित्वा पुनर्वाय्वादित्वेनावांतरमोक्षरूपदेवत्वंप्राप्य पश्चादुत्तरो

त्तरदेहलयेनपरममोक्षमाप्नुवंति । तथाचदेवत्वादव्यवहितपूर्वदेहादुत्क्रमणंमुक्तिरूपमेवेतिनदोषइति । अवश्यंचैतदंगीकार्यं । तथाहि । "तदोकोग्रज्वलन"मित्यादिना उत्तमाधिकारिकोत्क्रमणमभिधाय मार्गंचोक्त्वा "अप्रतीकालंबनान्नयती"त्युत्तमाधिकारिणामप्रतीकालंबनानामकार्यब्रह्मप्राप्तिरूपंफलमुच्यते । तत्राप्रतीकालंबनाःकेइत्याकांक्षायां तत्स्वरूपविवरणपरभाष्ये "अप्रतीकादेवतास्तुऋषीणांशतमेवचे"तिदेवाश्च "तदोकोग्रज्वलनं, अप्रतीकालंबना" नित्यादिसूत्रविषयतयास्पष्टमुच्यंते । नच देवावस्तुतोप्रतीकालंबनतयात्रोच्यंते नत्वकार्यब्रह्मप्राप्तृत्वेनैतत्सूत्रविषयतयेतिवाच्यं । देवातिरिक्ताप्रतीकानामत्यल्पतयासूत्रस्यतन्मात्रपरत्वायोगात् । एवंनिर्बंधविशेषप्रमाणाभावाच्च । प्रत्युतानंदमालायां "अतीतपादेसर्वेषामधिकारिणांस्थूल

दृष्ट्वामार्गंतद्वद्देवान्हरिंभाव्यपदंतथा । उत्क्रांतामार्गतोगत्वाप्राणेनप्रापिताहरिं ॥ ४७० ॥

देहादुत्क्रमणमस्तीत्युक्तं । तेचात्रव्याप्तदृष्टयोऽव्याप्तदृष्टयइतिद्विविधाः । तत्रव्याप्तदृष्टयऋषिगंधर्वप्रवरपूर्वकादेवपर्यंताउच्यंते । अव्याप्तदृष्टयोमनुष्योत्तमाद्याऋषिगंधर्वांताः । उत्तमाधमाश्चेतियावत् । तेतावदुभयेप्यर्चिरादिपथाऊर्ध्वंगत्वाततोविद्युत्पर्तिं परंवायुंप्राप्नुवंतीत्यादिना देवानामप्येतत्सूत्रविषयतैवोच्यते । किंच "सएनान्ब्रह्मगमयती"तिसर्वाधिकारिसाधारणतयाप्रतीतस्यास्यवाक्यस्यदेवातिरिक्ताधिकारिमात्रपरतयासंकोचोपिनयुक्तः । ननुब्रह्मनाड्योत्क्रम्यापुनरावृत्तिमार्गत्वेनानेकप्रमाणप्रमितार्चिरादिना अकार्यब्रह्मगतानांपुनर्देवत्वेनजननादिरूपसंसारप्रवृत्त्यावृत्तौप्रमाणविरोधः । किंचैवंवैकुंठादिलोकगतानां

पुनर्जनने "आजनान्नजनिर्भुवि" इतिप्रमाणविरोधश्चेतिचेन्न । पूर्वोदाहृतप्रमाणान्यथानुपपत्त्यार्चिरादेरपुनरावृत्तिप्रतिपादक मानानांदेवातिरिक्तपरत्वमंगीकार्यं । आजनान्नजनिर्भुवीत्यस्यतुदेवातिरिक्तविषयत्वमकामेनापिस्वीकर्तव्यं । तथाहि । "महर्लोकमतीतानांनजन्मांशलयौविने"त्यादेरेवंखल्वर्थः । महर्लोकमतीतानां जनादिलोकगतानांनजन्म । तस्यापवादमाह । अंशलयौविनेति । एकेनांशेनतत्रस्थितानामंशांतरेणजन्मसंभवति । यथाजयविजयादीनां । तथामहाब्रह्मलयानंतरंसामस्त्येनैवजन्मसंभवतीति । नचात्रलयशब्दस्यदैनंदिनप्रलयपरताकल्प्या । दैनंदिनप्रलयानंतरमप्यंशेनैवजननस्य "नदेवानांनदेवीनांसामस्त्येनजनिर्भुवि । अंशांशेनैवजायंते" इतिप्रमितत्वेनांशलयौविनेतिपृथग्लयग्रहणसामर्थ्याद्देवानामंशेन तत्तद्योग्यानां

स्थित्वायावल्लयंविष्णुलोकेपश्चात्पुनर्जनिं । वाय्वादित्वेनसंप्राप्यपुनर्यांतिप्रवेशतः ॥ ४७१ ॥

महाप्रलयानंतरंसामस्त्येनैवजननमित्यंशलयौविनेत्यस्याभिप्रायइतिगम्यते । तथाच महर्लोकमितिवाक्येजनस्तपःसत्यवैकुंठलोकगतानां "महर्लोकादिगंतारउत्तरायणरश्मिभि" रित्युक्त्याब्रह्मनाड्यादिभिरुत्क्रम्यअर्चिरादिपथानेकरूपैःकार्याकार्यब्रह्मप्राप्तानामप्यंशेनलयानंतरंसामस्त्येनचजननाभ्युपगमान्यथानुपपत्त्याकेषांचित्सामस्त्येनोत्तरोत्तरब्रह्मकल्पेजननमवश्यंवक्तव्यमंगीकार्यं । "नैवदेवपदंप्राप्ताब्रह्मदर्शनवर्जिता" इत्युक्तेर्देवानामेवपूर्वंजीवन्मुक्ततायाःसिद्धत्वात्तेषांपूर्वमुत्क्रम्यवैकुंठादिलोकेषुस्थितानांपुनर्ब्रह्मलयानंतरंदेवताशरीरेणोत्पत्तिरवश्यमंगीकार्येत्याजनादित्यादेर्देवातिरिक्तविषयतेति । ननुदेवत्वात्पूर्वंजन्मन्यु

त्क्रम्यब्रह्मगंतॄणांकायत्यागक्षणेपरमेश्वरस्मृत्यभावे सांतानिकतयापितत्प्राप्त्यनुपपत्तिः । तत्स्मृतौत्रातत्रैवप्रवेशेनभाव्यतया देवपदप्राप्त्यनुपपत्तिरितिचेदुच्यते । यथाब्रह्मनाड्योत्क्रम्यगंतॄणामन्येषांकायात्ययक्षणे "मार्गोब्रह्मचयःपश्ये"दित्यादिगीतातात्पर्योक्तरीत्या मार्गस्तद्गतदेवाःप्रापकोमुख्यप्राणःप्राप्योलोकस्तद्गतोहरिश्चेत्येतत्सर्वंयुगपत्प्रतीयते तथाभविष्यत्तदसहितैतत्सर्वदर्शनस्य पश्चात्प्राप्यस्योत्तरोत्तरबिंबदेवेषुविलयस्य परमप्राप्यभगवत्स्वरूपस्यचयुगपद्दर्शनांगीकारान्नदोषइति । तदेतत्तदोकोग्रज्वलनसूत्रतत्वप्रदीपिकायांविवृतं । यदावागादीनांविलयस्तदेत्यारभ्य देवानामुत्तरोत्तरविलयध्यानपूर्वकंतद्बिलयपर्यवसानस्थानस्यपरब्रह्मणोध्यानमुत्क्रमिष्यतःकर्तव्यमितिश्रुतिस्मृतिपर्यालोचनयागम्यतइत्यादिना ॥ ४६९–४७१ ॥ अस्त्वेवंदेवानां

तदन्येकर्मदेवाद्याःसमुत्क्रम्यैवदेहतः । अर्चिरादिपथाब्रह्मसंयांत्यामानुषोत्तमाः ॥ ४७२ ॥

अप्रतीकालंबनास्तुसुषुम्नामध्यसंस्थया । ब्रह्मनाड्याविनिष्क्रम्यविष्णोर्लोकंतदाप्नुयुः ॥ ४७३ ॥

तदन्येषांकथंचरमशरीरान्मुक्तिरित्यतआह ॥ तदन्यइति ॥ आमानुषोत्तमाः मनुष्योत्तमपर्यंताः । चतुर्गुणोपासकानामेव चतुर्विधमोक्षः नत्वेकगुणोपासकानामितिवक्ष्यामः ॥ ४७२ ॥ अत्रचरमशरीरादुत्क्रांतिप्रकारः "तदोकोग्रज्वलन"मित्यादिसूत्रेषुनिरूपितस्तस्यायंसंग्रहः ॥ अप्रतीकालंबनाइति ॥ देहेद्वासप्ततिसहस्रनाड्योवर्तंते । तदतिरेकेण "मूलाधारंसमारभ्य त्वामूर्धानमृजुस्थिता । मध्येसुषुम्नाविज्ञेयावज्रकार्यप्रकाशिनी । वैद्युताब्रह्मनाडीतिसैवपंचप्रभेदिनी" तितंत्रसारेसुषुम्नानामका

नाडीचोक्ता । सासुषुम्नामध्यगब्रह्मनाड्यत्रशताधिकशब्देनविवक्ष्यते । उदानगत्या ब्रह्मनाड्या । "अथैकयोर्ध्वमुदान"इति श्रुतेरितिद्वितीयतात्पर्योक्तेः । तयानिष्क्रमणमप्रतीकालंबनानामेव । तेषांतदैववैकुंठादिलोकप्राप्तियोग्यत्वेनब्रह्मनाड्युत्क्रमण नियमात् ॥ ४७३ ॥ प्रतीकालंबनानांमध्येयेउत्तमाःसत्यलोकप्राप्तियोग्याः तेषांतुशताधिकसुषुम्नाप्रभेदप्रकाशिन्यादिकये त्याह ॥ तदन्यइति ॥ तेभ्योप्यवराणामधिकारिणांतुशतांतर्गतपिंगलासंज्ञिकनाडीभिर्गमनमित्याह ॥ ततोऽधमाइति ॥ यद्यपिसर्वेषांब्रह्मनाड्योत्क्रमणंचकिंचिदस्ति । तदोकोग्रज्वलनमित्यस्यसाक्षादप्रतीकालंबनपरत्वेपिकिंचित्सर्वाधिकारिसाधा रण्यस्यापिभावात् । तथापिब्रह्मनाड्यामेवहृत्पद्मेस्वस्यस्थितत्वेनप्रथमतस्तयैवकिंचिदूर्ध्वगत्वापश्चात्सन्निकृष्टसुषुम्नाप्रभेदासुपिं

तदन्येब्रह्मणोलोकंसुषुम्नायाविभेदतः । ततोऽधमास्तुसर्वेपिपिंगलाद्याभिरेवहि ॥ ४७४ ॥

गलाद्यासुचनाडीषुप्रवेशेनोत्क्रमणप्राधान्याभिप्रायेण "सुषुम्नायाविभेदतः, पिंगलाद्याभिरि"तिचोक्तं । तदुक्तमानंदमालायां "उत्क्रम्यमानुषामुक्तिंयांतीति । मुक्तिकालतःप्रागेवकदाचिन्मनुष्यलोकेजातादेवाश्चात्रमानुषशब्देनोच्यंते नकेवलंमनुष्यचे तनाः । तेतावदुभयेपिज्ञानसामर्थ्यात्स्वषुम्नयार्कसुषुम्नामनुसृत्यस्वदेहादुत्क्रम्ययांती"ति । अत्रकेवलंब्रह्मनाड्योत्क्रमणवताम प्रतीकालंबनानांतदैववैकुंठादिभगवल्लोकप्राप्तिः । सुषुम्नाप्रभेदेनोत्क्रांतानांतुसांतानिकतयासत्यलोकप्राप्तिः । पश्चाद्विष्णुलोक प्राप्तिः। पिंगलानाडीभिरुत्क्रमणवतांतपोजनादिलोकप्राप्तिरितिज्ञेयं। तदुक्तंद्वितीयतात्पर्ये। "विष्णोर्लोकंतदैवैकेयांतिकालांतरे

परे। आज्ञयैवहरेःकेचिदपूर्तेकेचिदंजसा। विहृत्यैवान्यलोकेषुमुच्यंतेब्रह्मणासह। अपक्वायेनतेयांतिवायुंवाहरिमेववा। स्थान मात्राश्रितास्तेतुपुनर्जनिविवर्जिता" इति। ब्रह्मनाडींविनान्यत्रयदागच्छतितदाविनामोक्षंस्थानांतरंगच्छतीतिगीताभाष्ये। मोक्षमित्यस्यविष्णुलोकमित्यर्थः। "विष्णोर्लोकंपरंगच्छन्नुत्क्रामन्मूर्धयैवतु। तथैवब्रह्मणोलोकंसुषुम्नायाविभेदत" इतिबृहद्भाष्ये। "पिंगलाभिःशतायुःपुरुषाअहःसंज्ञिकंदेवयानमि"तिद्वितीयतात्पर्येचोक्तेः। नन्वाजनान्नजनिर्भुवीतिवाक्येजनलोकादुपरिलोकगतानामेवजन्माभावाभिधानात् "विशेषविधिःशेषनिषेधंगमयती"तिन्यायेनततोऽर्वाक्तनमहरादिगतानांपुनरावृत्तिनियमात्कथंतत्रप्राप्तानामप्यपुनरावृत्तिरुच्यतइतिचेदुच्यते। स्वर्गादेर्वस्तुतःपुनरावृत्तिलोकत्वेपि येसमस्तसाधनपरिपाकेनोत्क्रम्य अर्चि

महर्जनस्तपोलोकान्प्राप्नुवंतिसनातनान्। स्वरंतरिक्षंमेरुंवास्वाधिकारानुसारतः ॥ ४७९ ॥

रादिपथास्वर्गादिप्राप्नुवंति तेषामपुनरावृत्तिः नतुलोकस्वाभाव्यात्। लोकस्वाभाव्याभिप्रायेण "आजनान्नजनिर्भुवी"त्युक्तिः। ननुतर्हिमहर्लोकस्य "ईयुस्त्रीन्कर्मणालोकान्ज्ञानेनैवतदुत्तरान्"इतिद्वितीयतात्पर्ये, एवंज्ञानंविनानैवमहर्लोकादिकागतिरिति, पादयोगान्महर्लोकइत्येकादशतात्पर्ये, ज्ञानैकसाध्यत्वश्रवणात् ज्ञानैकसाध्यस्यापुनरावृत्तित्वनियमेनसर्वथाभुविजन्मानुपपत्तेः पुनरुक्तानुपपत्तिरितिचेन्नायोग्यरूपापरोक्षज्ञानसाध्यत्वेअपुनरावृत्तिनियमः नतुसामान्यदर्शनसाध्यत्वे। महरादेर्ज्ञानसाध्यत्वोक्तिस्तुसामान्यदर्शनसाध्यत्वाभिप्राया। "सामान्यदर्शनाल्लोका"इत्युक्तेः। अतएवतत्वप्रकाशिकायां "महर्लोकादि

गंतारउत्तरायणरश्मिभि"रित्यत्रमहर्लोकादीत्यतद्गुणसंविज्ञानोबहुव्रीहिरित्युक्तं । तथाचमहर्लोकस्यदक्षिणायनरश्मिप्राप्यतया पुनरावृत्तिलोकत्वमुक्तंभवति । यदिच "महर्लोकादिगंतारउत्तरायणरश्मिभिः । निर्गच्छंतीतरैश्चापियैरेष्टव्येतरागतिः ।" इतरैःदक्षिणायनरश्मिभिःनिर्गच्छंत्यपरे । यैर्महर्लोकादिभ्यःइतरास्वर्गादिगतिःप्रासव्येतितत्वप्रदीपानुसारेणतद्गुणसंविज्ञानेन महर्लोकगंतॄणामप्युत्तरायणरश्मिभिरेवगमनमितिपक्षः तदामहर्लोकएवजन्मवतांदेवादिपदयोग्यानांभूमौजनिसद्भावात्तदभि प्रायेणाजनान्नजनिरित्युक्तं । जनादौविद्यमानानामंशलयौविनानजननमिति । अतएव "मन्वंतरायुषःस्वर्ग्यामहर्लोकेतुकालिप काः । आब्रह्मणोजनाद्याये"इतिमहर्लोकगतानांकल्पायुष्यमभिधाय जनादिगतानांलयाभावोक्तिरितिध्येयं । महरादौचज्ञान

**तत्रापितत्तद्देवादिद्वारेणोत्क्रांतिरिष्यते ॥ ४७६ ॥ सर्वासूक्तासुचोत्क्रांतिकालेनाडीषुसंविदा ।**

सामर्थ्येनोत्क्रम्यगंतॄणामपुनरावृत्तिकथनेतुनकश्चिद्दोषः ॥ ४७४ ॥ ४७५ ॥ पिंगलानाड्युत्क्रांतौविशेषमाह ॥ तत्रापीति ॥ यद्यत्सूर्यचंद्रादिदेवाभिमतलोकप्राप्तिरस्यभवति तत्तद्देवसंबंधिचक्षुःश्रोत्रादिद्वारापिंगलानाडीभिरुत्क्रमणमित्यर्थः । तदुक्तं बृहद्भाष्ये "देवलोकेचिरंरत्वायस्तुमुक्तिंव्रजिष्यति । सतुतद्देवताद्वारेणोत्क्रामतिनसंशय"इति । गीताभाष्येच "निर्गच्छंश्चक्षु षासूर्यंदिशःश्रोत्रेणचैवही"ति । तत्रापिविशेषः "दक्षिणश्रोत्रमार्गेणदेवलोकंव्रजत्यसा"वितिचतुर्थतात्पर्ये ॥ ४७६ ॥ उत्क्रांति कालेभवद्विशेषमाह ॥ सर्वास्विति ॥ पूर्वोक्तासुसर्वासु ब्रह्मसुषुम्नापिंगलानाडीषुप्रकाशः प्रादुर्भवति । ज्ञानिजीवस्य

हृदयएवनाडीमध्यगतत्वाभिप्रायेण भाष्येहृदयाग्रज्वलनंभवतीत्युक्तं । सचप्रद्योतोभगवत्प्रभैव । "यदाविष्णोःस्वतेजसा । द्योततेहृदयाग्रंचतेनद्वारेणकेशवः । निष्क्रमेज्जीवमादायप्राणएनमनुव्रजे"दितिबृहद्भाष्ये ॥ ४७७ ॥ नाड्यंतस्तुसौररश्मीनां सदासद्भावात्तत्प्रकाशेनगमनमित्याह ॥ नाडीति ॥ ४७८ ॥ तत्रापिविशेषमाह ॥ सुषुम्नायामिति ॥ तदुक्तं "सहस्रंवाआदित्यस्यरश्मयआसुनाडीष्वातताः । तत्रश्वेतःसुषुम्नोब्रह्मयानःसुषुम्नायामाततःतत्प्रकाशेनैषनिर्गच्छती"त्यादि ॥ ४७९ ॥

भगवत्प्रभयात्वग्रेप्रकाशोभवतिध्रुवं ॥४७७॥ नाड्यंतरेषुसूर्यस्यरश्मिभिर्गमनंभवेत् ॥ ४७८ ॥
सुषुम्नायांसुषुम्नाख्योव्यासोरश्मीरवेःसदा । पिंगलाख्यासुनाडीषुह्युत्तरायणरश्मयः ॥४७९॥
दृष्टामार्गंतद्वद्देवान्यथायोग्यतयाहरिं । ध्यात्वादृष्टाचसर्वेषामुत्क्रांतिर्हर्यनुग्रहात् ॥ ४८० ॥
तत्रवर्णावराद्यायेनोत्क्रामंतिकदाचन । अत्रैवतेविमुच्यंतेपरमात्मप्रसादतः ॥ ४८१ ॥

## इतिसत्तत्वरत्नमालायांउत्क्रांतिप्रकरणं ॥ १४ ॥

विद्यासामर्थ्यादित्यनुसारेण "मार्गौब्रह्मचयःपश्ये"दित्यादिमनसिनिधायाह ॥ दृष्ट्वेति ॥ एकगुणोपासकानांवर्णावरादीनांनैवमुत्क्रमणं । "आत्मेत्येवपरंदेवमुपास्यहरिमव्ययं । केचिदत्रैवमुच्यंतेनोत्क्रामंतिकदाचन । अत्रैवचस्थितिस्तेषामित्युक्तेः । किंतूच्छूनतादिनादेहेनष्टेतेऽन्यत्रगच्छंति । तदुक्तंबृहद्भाष्ये "केचित्तुमानुषामुक्तिमनुत्क्रम्यैवदेहतः । देहपातेतुदेहस्यदोषान्

भुक्त्वैवसर्वशः । मरणोच्छूनतादींस्तुस्वकीयारब्धकर्मजान् । देहेक्षीणेतुपातेनदृष्ट्वाविष्णुमनुज्ञया । पुनरत्रैवतिष्ठंतिनित्यानंदैकभोगिन"इति । तदेतदभिप्रेत्याह ॥ तत्रेति ॥४८१॥ इतिसत्तत्त्वरत्नमालाप्रकाशेदेवादिदेहमोक्षप्रकरणं ॥ १४॥

अथभाष्यन्यायविवरणगीताभाष्यादिषुविक्षिप्यप्रतिपादितमर्चिरादिमार्गसंक्षिप्यनिरूपयति ॥ उत्क्रांतइति ॥ "नाभ्यां

उत्क्रांतस्तुशरीरात्स्वाद्गच्छत्यर्चिषमेवतु ॥ ४८२ ॥ अग्निर्ज्योतिरितिद्वेधैवार्चिषःसंप्रतिष्ठितिः ।
अग्निंगत्वाज्योतिरेतिप्रथमंब्रह्मसंव्रजन् ॥ ४८३ ॥ एकस्मिंस्तुपुरेसंस्थोद्विरूपोऽग्नेःसुतोमहान् ।
ततोहिवायोःपुत्रंचयोसौनाम्नातिवाहिकः ॥ ४८४ ॥ ततोऽहोभिजितासाकंततःपौर्णिमयासह ।
शुक्लपक्षंचषण्मासानयनंविषुवासह ॥ ४८५ ॥ तथासंवत्सरंलोकंज्ञानीप्राप्यततःपरं ।
तटितंवरुणंचैवप्रजापंसूर्यमेवच ॥ ४८६ ॥ सोमंवैश्वानरंचेंद्रंध्रुवंदेवींदिवंतथा ।
ततोवायुंपरंप्राप्यतेनैतिपुरुषोत्तमं ॥ ४८७ ॥

स्थितंहृद्यवरोप्यतस्मादुदानगत्योरसितंनयेन्मुनिः । तस्माद्भ्रुवोरंतरमुन्नयेते"त्यादिनोक्तक्रमेण "एवंदेहंपरित्यज्यविष्णुनाधिष्ठितःपुमान् । एवंज्ञानात्मकश्चैवप्राणात्मकइतिद्विधा । अनुयातिहृषीकेशंसर्वदेवैस्समन्वित"इतिबृहदारण्यकोक्तरीत्याचभगवताऽऽरूढःसकलदेवतापरिवृतप्राणनायकेनसहितउक्तनाडीद्वाराशरीरादुत्क्रांतोर्चिरादिदेवतदधिष्ठितलोकान्गच्छंतीतिभावः

॥ ४८२-४८७ ॥ तत्रविशेषमाह ॥ तत्रतत्रेति ॥ यद्ययमल्पाधिकारी तर्हिस्वभृत्यपुरुषद्वारेण उत्तमश्चेत्साक्षादेवेत्येवंपुंद्वारेणस्वदृष्ट्यावाऽर्चिरादिदेवैरनुज्ञांप्राप्यसंमानितास्संतउत्तरोत्तरलोकान्यांतीत्यर्थः । "दिवादिदेवताभिस्तुपूजितोब्रह्मयातिही" तिगीताभाष्ये ॥ ४८८ ॥ तत्राल्पानांसमग्रमार्गपारगमनंनास्ति । किंनामकेचिद्योग्यतायाअल्पतयाअंतरिक्षेचकेचनेत्याद्युक्तेमार्गमध्यगतदेवलोकेष्वेवतिष्ठंति । येतुकिंचित्पूर्वपरिपाकादित्याद्युक्तरीत्यासम्यक्साधनपरिपाकाभावेपिभक्त्यादिबलेन मुच्यंते ते कियत्कालंमध्येस्थित्वातत्रसाधनशेषानुष्ठानेनतदूर्ध्वंयांतीत्याशयवानाह ॥ तत्रापीति ॥ उक्तंचन्यायविवरणे ।

तत्रतत्रस्थितैर्देवैःप्राप्यानुज्ञांचपूजितः । पुंद्वारेणस्वदृष्ट्यावागच्छतिह्युत्तरोत्तरं ॥ ४८८ ॥

तत्रापिह्यल्पकाःकेचिन्मध्येतिष्ठंतिमोदिताः । ततःसाधनसंपत्त्याह्यूर्ध्वंयांत्यपिकेचन ॥ ४८९ ॥

"तद्भेदोमध्यसंस्थितिः । धूमार्चिरादिदेवेभ्यःप्राप्यानुज्ञांचमध्यगाः । विहृत्यस्वेष्टदेशेषुतदूर्ध्वंयांतिचाधरं । अत्यल्पानामविज्ञाताप्यनुज्ञावर्तिनांभवेत् । पुंद्वारेणस्वदृष्ट्यावायथायोग्यंविमुच्यता"मिति । धूमादिमार्गस्यापिप्रस्तुतत्वात्तद्विवक्षया अधरंयांतीत्युक्तं । अर्चिरादिपथागंतारस्तुतदूर्ध्वंयांति । अत्यल्पानां आवर्तिनांस्वैरनुज्ञातैवानुज्ञाभवेत् । विमुच्यतां अनावर्तिनां । अल्पाधिकारिणांपुंद्वारेण । उत्तमानांतुस्वदृष्ट्यैवेतियथायोग्यमार्चिरादिदेवानुज्ञाभवेदितियोजना । तदूर्ध्वंयांतीत्युपलक्षणं । "अंतरिक्षेचकेचन । अपक्वायेनतेयांतिवायुंवाहारिमेववा । स्थानमात्राश्रितास्तेतुपुनर्जन्मविवर्जिताः" इतिमध्येप्यवस्थानोक्ते

रितिध्येयं ॥ ४८९ ॥ एवमर्चिरादिपथागताअप्रतीकालंबनाविष्णुं प्रतीकालंबनेषूक्तप्राश्चतुर्मुखं तन्नीचास्तपोजनादौ तत्रापि तद्गतंकार्यंब्रह्म एवंवैजयंतमेवादिस्थितंकार्यंब्रह्मप्राप्य ततोपिनीचामार्गमध्येंऽतरिक्षादावित्येवंतत्तल्लोकेषुयावल्लयंतिष्ठंति । तान्लोकानपुनरावृत्तित्वेनसंततत्वान्नाम्नासांतानिकान्विदुः । तदेतदाह ॥ अर्चिरादीति ॥ ४९० ॥ एवंसांतानिकलोकेषु स्थितानांभगवत्प्राप्तिमाह ॥ ततइति ॥ ततोमहाप्रलयेप्राप्ते । "वर्णाश्रमाचारयुतामनुष्याधर्मंमनुंसोपिसमेतिकाल"इत्याद्यु

अर्चिरादिपथाह्येवंगतास्तेयोग्यताक्रमात् । सांतानिकेषुलोकेषुवसंतिह्यालयंशुभाः ॥ ४९० ॥
ततोधर्मादिदेवांस्तुसंप्राप्यह्युत्तरोत्तरं । देवेषुसंप्रविश्याथब्रह्माणंप्राप्यतेनच ॥
नारायणंलयेयांतिशरण्यंकरुणार्णवं ॥ ४९१ ॥

## इतिसत्तत्वरत्नमालायांमार्गप्रकरणं ॥ १५ ॥

इत्थंलयेसर्वजीवाःसंप्राप्यकमलासनं । चतुर्मुखोपदेशंचस्वयोग्यंप्राप्यपुष्कलं ॥ ४९२ ॥

क्तरीत्यायमादिदेवान्प्राप्य तद्द्वारामनुशक्रसुपर्णीसुपर्णवाणीःप्रविश्य वाण्याब्रह्माणंप्राप्यलयंहरौयांतिसमस्तजीवाः । तत्रध्या नंगताआनंदमात्रवपुषोवर्ततइतिभावः ॥ ४९१ ॥ इतिसत्तत्वरत्नमालाप्रकाशेमार्गप्रकरणंसंपूर्णं ॥ १५ ॥

अथभोगंनिरूपयति । तत्रादौनारायणेलयंयांतीत्युक्तंविवृणोति ॥ इत्थमित्यादि श्लोकचतुष्टयेन । एवंदेहादुत्क्रम्यवोत्तरो

त्तरदेहलयेनवामुक्ताःसर्वेजीवाश्चतुर्मुखसमीपंप्राप्यतदुपदेशंयथाक्रमंप्राप्यपुनर्भगवंतंप्रयांति । तदुक्तं "सएतस्माज्जीवघना त्परात्परंपुरिशयंपुरुषमीक्षते"इति । "तेपुरतःसमाप्नुयुः । ब्रह्माणमस्मात्प्रतिप्राप्यविष्णुंप्राप्स्यंती"त्यनुभाष्ये । "उपदेशोब्रह्मण स्तुसर्वेषामेवमुक्तय"इतिच । वैकुंठपरिधाकृत्यामित्यस्यायंभावः । प्रलयकालेसावरणब्रह्मांडविलयानंतरमावरणतत्वैस्सह तत्वमानिरूपाणांविलये सृष्टगुणत्रयविलयेचसति पश्चात्तद्बहिःसूक्ष्मसृष्टिजातानामशेषदेवानामुत्तरोत्तरबिंबदेवताप्रवेशेनदेह लयसमये वैकुंठपरिधात्वेनपूर्वमंडस्थितलक्ष्म्यात्मकविरजानदी । "वैकुंठःकल्पितोयेनलोकोलोकनमस्कृत"इतिसृष्टिकालेवैकुंठ

वैकुंठपरिधाऽऽकृत्यांविरजायांसमस्तशः । महालक्ष्मीस्वरूपिण्यांविगाह्यप्रकृतेःपरं ॥ ४९३ ॥
प्रारब्धकर्मशेषंचलिंगदेहादिकंतथा । विनाश्यजठरेविष्णोःप्रविश्यानुग्रहाद्धरेः ॥ ४९४ ॥

कल्पनान्यथानुपपत्त्यानित्यत्वेनप्रमितस्यापिवैकुंठस्याव्यक्तिरूपविलयसत्वात्तस्यशक्त्यात्मकतापत्त्यनंतरंप्रधानपरमाकाशयो रंतरागच्छति । "अंतिमावरणव्योम्नोरंतराविरजानदी । विधेर्देहापगमनेलिंगमात्रशरीरकाः । पूर्णसाधनसंपन्नाअपरोक्षदृश श्चये । निर्गत्यचोर्ध्ववैकुंठादतीत्यावरणानितु । विरजायांकृतस्नानाब्रह्मणासहसर्वशः । त्यक्तलिंगास्ततःसर्वेस्वरूपेणव्यवस्थि ताः"इत्युक्तेस्तदाचतुर्मुखेप्रविष्टाःसर्वेबहिर्निर्गत्यविरजायांस्नास्यंति । तेननिश्शेषारब्धनिवृत्तिर्लिंगदेहादेःसर्वस्यविनाशश्च । तदनंतरमावरणाभावेनसुव्यक्तपरमानंदाभगवदुदरमभिसंविश्यध्यानंगतास्तिष्ठंतीति । तदुक्तं "प्रारब्धकर्मशेषश्चविरजातरणा

वधि"रिति । ननु "संप्राप्नोतिविरजानदींतत्सुकृतदुष्कृतेविधूनते" इतिप्राधान्येनप्रारब्धनाशस्यात्रोक्तेःकथंशेषपदप्रयोगइति चेत् प्रारब्धकर्मणःप्रायोभोगेननाशःक्वचिदुपमर्दः तच्छेषस्यसुखदुःखादिमात्रापादकस्यवैश्वानरेद्युनद्यांवासूर्येवादेहएववा क्षयः । अतएव "स्वोदयात्फलदंज्ञानमादेहंकर्मवारवे"रित्युक्तिः । लिंगदेहसंबंधापादकस्यप्रारब्धकर्मशेषस्यविरजायामिति स्थिते "सुकृतदुष्कृतेविधूनुते" इतिवाक्यमपितत्परंपर्यवस्यति । देवतानामुत्तरोत्तरदेवताप्रवेशेनविरजायांलिंगदेहलयकालएव अन्येषांवैश्वानरादिस्थानेष्विवभुक्तोपमर्दितातिरिक्ताशेषप्रारब्धसुकृतदुष्कृतानांविनाशाभिप्रायेणवायुज्यतइतिनविरोधः। आ

तमेवपरमप्रेष्ठंध्यायंतःकमलापतिं । यावत्सृष्टि वसंत्यत्रसंपूर्णानंदभोजनाः ॥ ४९५ ॥
श्वेतद्वीपंततोगत्वाविष्णुंदृष्ट्वाचतेततः । अनुज्ञाताःप्रमोदंतेनिर्दुःखास्तुधरादिषु ॥ ४९६ ॥

नंदमालायांतु "देवाविशिष्टामपिमुक्तिंगच्छंतउत्तरोत्तरेष्वेवस्वस्वबिंबभूतदेवेषुप्रविश्यस्वंस्वंदेहंतत्रक्षपयित्वाऽऽनंदचिदात्मक देहेनतांस्तानभीष्टभोगान्भुंजते । अतःसोऽयंवायुःश्रीविष्णुप्रेरितोविष्णुमेवप्रविश्यतत्रस्वकीयंलिंगशरीरंभङ्क्त्वा । मनुष्य चेतनाश्चप्रागेवोत्क्रम्यब्रह्मलोकंगताःकथंचित्सुरशब्देनोच्यंते । तस्मात्तेषामपिलिंगभंगोबिंबप्रवेशादितिसिद्धमिति । उत्तरोत्तर देवदेहेष्वेवलिंगभंगोऽभिधीयते । अत्रैवंभाति । वस्तुतउक्तरीत्यागुणत्रयाद्बहिरुत्तरोत्तरदेवप्रवेशेनदेहलयस्यासिद्धत्वात्तदैववि रजास्नानस्यचभावाद्विरजातरणावधिरित्यविरोधइति ॥ ४९२–४९५ ॥ एवंप्रलयेभगवदुदरंप्रविष्टानांसृष्टिकालेजगन्निर्माणा

नंतरमवस्थितिप्रकारमाह ॥ श्वेतद्वीपमिति ॥ श्वेतद्वीपव्यक्तीकरणानंतरंरमासमेतनारायणसमीपंब्रह्मणानीताःसकृद्दर्शनानंतरंतदनुज्ञाताःपृथिव्यादिश्वेतद्वीपवैकुंठांतस्वयोग्यस्थानेषुक्रीडंतइत्यर्थः । उत्क्रांत्यादिरहितानांतद्वतामपिसर्वमुक्तानांप्रतिकल्पंसृष्टिसमयेसकृच्छ्वेतद्वीपगमनंयुज्यते । उक्तंचतत्वप्रदीपे । "नोत्क्रामंतिकदाचनेतिसृष्टौसकृच्छ्वेतद्वीपगमनात्परमस्माल्लोकाच्चनोत्क्रामंतीत्यर्थः । अन्यथाबहुनात्रकिमुक्तेनेतिवचनविरोधा"दिति ॥ ४९६ ॥ धरादिष्वित्युक्तंविवृणोति ॥ केचिद्देवेति ॥

केचिद्देववसंत्यत्रह्यंतरिक्षेचकेचन । केचित्स्वर्गेमहर्लोकेजनेतपसिचापरे ॥
केचित्सत्येमहाज्ञानागच्छंतिक्षीरसागरं ॥ ४९७॥ श्वेतद्वीपंचवैकुंठमनंतासनमच्युत ।
तत्रापिक्रमयोगेनज्ञानाधिक्यात्समीपगाः ॥ ४९८ ॥ सालोक्यंचसरूपत्वंसामीप्यंयोगएवच ।
इमामारभ्यसर्वत्रयावत्सुक्षीरसागरे । पुरुषोनंतशयनःश्रीमान्नारायणाभिधः ॥ ४९९ ॥

"मुहूर्तमात्रंज्ञानंस्यान्महाज्ञानंततोधिक"मित्युक्तं ॥ ४९७॥ तत्रापिक्रमयोगेनेति ॥ "उपस्थिताब्रह्मवनंकेचिदश्वत्थमंडलं । ऐरंहृदेकेचिदपिदेवाएवसदाहरिं । नागभोगशयंमुक्तादद्दशुस्तेऽधिकमोदिनः । सागरादिस्थितंविष्णुंपश्यंतिक्वाचिदेवही"ति ॥ ४९८ ॥ ननुभूम्यादिषुमुक्तस्थितौनमोक्षःस्यात् । सालोक्यादिचतुर्विधानंतर्भावादित्यतोभाष्यवचनंपठति ॥ सालोक्यमिति ॥ इमांपृथिवीमारभ्योक्तक्रमेण सु समीचीनक्षीरसागरेयावन्नारायणाभिधोनंतशयनोवर्तते तावत्पर्यंतं आंतरालिके

ष्वंतरिक्षादिसर्वस्थानेष्वपिसालोक्यादिकमस्त्येवेत्यर्थः । योगःसायुज्यं । तत्वप्रकाशिकायांच "सर्वस्थानेष्वपिसालोक्याद्यस्त्येव । ईश्वरस्यसर्वत्रावस्थिते"रित्युक्तं । "सएवान्यस्वरूपेणशक्रलोकसमीपगः । इज्योयज्ञपुमान्नामज्ञानिनांगृहिणां पदं । यतीनांध्रुवलोकस्थोवनिनांमेरुमध्यगः"इत्यादिद्वितीयतात्पर्योक्तेःभूम्यादिगतस्थानविशेषाणामपिहरिलोकत्वात्तत्स्थानां मनुष्योत्तमानामपिसालोक्याद्युपपद्यतइति ॥ ४९९ ॥ एवंस्वस्वयोग्यस्थानेषुस्थितामुक्ताःयावद्ब्रह्मलयंभोगाननुभूयपुनरुक्तप्रकारेणशेषमार्गगरुडमार्गक्रमेणोत्तरोत्तरंमुक्तचिद्देहेष्वभिविश्यनारायणोदरगताःआनंदमात्रवपुषोध्यानंगताःस्थित्वासृष्टिका

इत्थंस्थानान्यनुप्राप्यभोगाननुभवंतिच । पुनश्चप्रलयेविष्णुंप्रविशंतिहिपूर्ववत् ॥ ५०० ॥
सांद्रामंदनिजानंदंभुंजानाःपुनरेवतु । सृष्टिकालेबहिर्यांतिप्रविशंतियथासुखं ॥ ५०१ ॥
चिदानंदशिरोदेहपाणिपादात्मकाःसदा । सर्वदोषविनिर्मुक्तामुक्ताःक्रीडंतिनित्यशः ॥ ५०२ ॥

लेपुनर्बहिरागत्यश्वेतद्वीपपतिंदृष्ट्वातेनाज्ञप्ताःस्वस्वस्थानेषुविहृत्यपुनःप्रविशंतीत्यादिप्रकारेणानंतकालंमोदंतइत्याह ॥ इत्थमित्यादि श्लोकद्वयेन ॥ ५००–५०१ ॥ ननुमुक्तानांकथंकामतोभोगःसंभवति । भोगायतनस्यशरीरस्यचक्षुरादिकरणानांचाभावात् । जडशरीरादिसद्भावेपुनर्जननादिदोषानुषंगात् । स्वातंत्र्येणैवभोगेभगवत्साम्यंस्यात् । पारतंत्र्येतुनायंभोगः । पराधीनस्ययथेष्टभोगायोगात् । किंचवैषयिकसुखस्यदुःखानुषंगनियमेनानिष्टस्याप्यापत्तिः । तत्तत्काले

आगंतुकविषयसंबंधप्रापककारणाभावेनतल्लाभोपिदुर्घटः । तत्तद्विषयसंपादनायासेनखेदावाप्तेश्च । स्वप्रयत्नासाध्यत्वे ऽन्यानुसरणंचदोषःस्यात् । अंततोविषयकामनैवदोषः । अपिचविषयेनसुखाधिक्येविषयापायेसुखस्याप्यपायेनेष्टहानि रतीवदोषइत्याद्याशंक्याह ॥ चिदानंदेत्यादिना कदाचित्स्वेच्छयैवहीत्यंतेन ॥ अयमाशयः । नतावन्मुक्तस्यदेहाद्य भावः । नित्यनिर्दोषज्ञानानंदाद्यात्मकस्वरूपदेहस्यविद्यमानत्वात् । अतएवजननादिदोषानवकाशः । स्वरूपदेहस्यवावाला ग्रशतांशसमपरिमाणत्वेनकथंतेनभोगइतिचेत् नहिभगवदनुग्रहेणभोगप्राप्तौशरीरपरिमाणंनिमित्तं । तन्वभावेसंध्यवदुपपत्ते रित्युक्तेः । किंचगजाद्यपेक्षयाऽल्पपरिमाणवतांनरादीनांभोगाभावप्रसक्तिरेवंसतिस्यात् । अंगीकृत्यचेदमुदितं । वस्तुतस्तु

स्वरूपंवर्धतेतेषांसर्वेषांपरिमाणतः । तथैवानंदवैचित्र्यकृतेमुक्ताअपीच्छया ॥ ५०३ ॥

पूर्ववत्पृथुपरिमाणंचास्तीत्याह ॥ स्वरूपमिति ॥ अत्रसांप्रदायिकामन्यंते । प्रलयेहरिजठरंप्रविष्टाःसर्वमुक्ताःभगवद्रूपविभाग कालेवासुदेवोदरंप्रविश्यतस्यश्वेतद्वीपगमनानंतरंश्वेतद्वीपेवासुदेवात्तन्महिष्यांमायादेव्यांस्वस्वचरमशरीरसमानाकारतयाजा यंते । तथापूर्ववद्ब्रह्मादीनांदेवानांसाक्षात्परंपरयाचोत्पत्तौतदन्येपिवर्णाश्रममनुष्यादयश्चधर्मादिभ्योदेहलयक्रमेणैवज्ञानानंदा द्यात्मकात्यंताभिन्नस्वरूपेणैवजायंते । अतएवपितृलोककामोभवतिमातृलोककामोभवतीत्याद्युक्तिरपिघटतइति । तदुक्तं 
"पितरंचद्दशेयंमातरंचे"तिऋचोभाष्ये । आनंदमालायांचोक्तंसोयंवायुःश्रीविष्णुप्रेरितोविष्णुमेवप्रविश्यतत्रस्वकीयांलिंगशरीरं

भङ्क्त्वाततःसच्चिदानंदशरीरेणतत्पुत्रोभूत्वासर्वानपिभोगानभुङ्क्तइति। नचात्रमुक्तानांस्थूलतयाजननेउपादानाभावःशंक्यः। "नित्योपाधिनिर्मितानीश्वरशक्त्येति, स्वरूपंजायतेतेषांषोडश्याकलयैवत्वि"तिचगीताभाष्ये स्वरूपांतःकरणस्यैवस्थूलाकार परिणामहेतुतोक्तेः। अत्रजनिर्नामव्यक्तिर्विवक्षितेतिनक्षुद्रोपद्रवः। स्पष्टंचबृहद्भाष्ये "स्वर्णकारोयथास्वर्णमलमग्नौनिहत्यच। शुद्धेनतेनचाभीष्टंकुरुतेरूपमंजसा। एवंतुभगवान्विष्णुर्जीवस्वर्णस्ययन्मलं। अविद्याकामकर्माद्यमात्माग्नौनाश्यसर्वकृत्। स्वेच्छयाकुरुतेरूपंतद्योग्यंतस्यमुक्तिगं। अल्पतेजस्तथाचाल्पंजीवरूपंहिसंसृतौ। तथैवसुमहत्तेजःकरोतिभगवान्महत्"इत्या दौमुक्तस्यज्योतिर्मयजडदेहांगीकारेपिनदोषइत्याशयवानाह॥ तथैवेति॥ स्वरूपदेहेनैवोक्तरीत्याभोगोपपत्तौकिंज्योतिर्मय

शुद्धसत्वात्मकान्येवज्योतीरूपाणिकानिचित्। निजदेहैःसंप्रविश्यरमंतेलीलयाक्वचित्॥ ५०४॥

शरीरग्रहणेनेत्यतउक्तं॥ आनंदवैचित्र्यकृतइति॥ तदुक्तंतत्वप्रदीपिकायां "यद्यपितेषांबहुरूपत्वेनचित्रसुखात्मकैरनेकैः सुलभएवातिबहुलोभोगः। तथापिवश्यप्रकृतीनांवैचित्र्यकौतुकवतांशरीरयोगेनचसुशकइतिगुणएव। अवरेषामिच्छयानभ वति। तेषामिच्छायाएवाभावात्। तद्भोगस्याल्पीयस्त्वात्तदर्थशरीरांतरसंभरणस्यानपेक्षितत्वात्। भोक्तुरिच्छयायदाचिन्मात्र देहकृतोभोगस्तदानबाह्यशरीरमपेक्ष्यं। यदाऽचिन्मात्रदेहकृतस्तदाचिन्मात्राधिष्ठितेनभोगइतिविशेषइति। विशकलिततया तत्रतत्रावरशब्देनाजानजापेक्षयाऽवराउच्यंते। बहुरूपत्वेनेत्यंशविभागयोग्याजानजाद्युत्तमानामेवज्योतिर्देहोक्तेः। तत्वप्रका

शिकायां "ज्योतिर्मयेषुदेहेषुस्वेच्छयाविश्वमोक्षिणः" इत्यत्र विश्वमोक्षिणः सर्वमुक्ताइतिव्याख्यानात्सर्वेषामपिमुक्तानांज्योतिर्मय देहसद्भावइतिकेचिदाहुः । अपरेतुसर्वमुक्ताइतिपूर्णमुक्ताइत्यर्थइतितत्वप्रकाशिकांव्याख्यायतदेकवाक्यतांमन्यंते । "प्रदीपव दावेश" इतिसूत्रान्नजडदेहस्वीकारेपिदोषशंकावकाशः । यथादीपोदीपिकायामनुविश्यतत्स्थंतैलाद्येवभुङ्क्तेनतुपिण्याकादि । एवंमुक्तोभुङ्क्तेइतितत्वदीपोक्तरीत्यातदभिप्रायोद्रष्टव्यः ॥५०२–५०४॥ इदानीमप्रतीकालंबनानांभगवत्सायुज्यभाजां "आदत्ते हरिहस्तेनहरिदृष्ट्यैवपश्यति । गच्छेच्चहरिपादाभ्यांमुक्तस्यैषास्थितिर्भवेत्" इत्याद्युक्तरीत्याभगवदंगानुप्रविष्टैर्भगवदंगानुगृहीतैः

तत्रोत्तमास्तुदेवाद्याःसायुज्यंपरमात्मना । लयक्रमानुसारेणसंप्राप्ताव्यवधानतः ॥ ५०५ ॥

तदंगानुगृहीतैश्चस्वांगैरेवप्रवर्तनं । कुर्वंतिभुंजतेभोगांस्तदंतर्बहिरेववा ॥ ५०६ ॥

स्वांगैःसर्वभोगाद्युपपद्यतइत्याह ॥ तत्रेति ॥ नचभगवदंगैरेवभोगेभगवद्भोग्यसर्वभोगःस्यादितिवाच्यं । "मुक्ताःप्राप्यपरंवि ष्णुंतद्भोगान्लेशतःक्वचित् । बहिष्ठान्भुंजतेभोगान्नानंदादीन्कदाचने" तिबहिष्ठमात्रभोगोक्तेः । तत्रापिनस्वायोग्यभोगः । तदुक्तं "केवलंपरमात्मभोग्येभ्योत्यल्पान्भुंजते यथाराजादिषुमंत्र्यादयःसामान्यभोगान्गीतलास्यादीन् नत्वसाधारणानंतः पुरादिभोगांस्तथेत्यादितत्वप्रदीपिकायां । अत्रतदंगानुगृहीतैश्चेत्ययंभाष्यश्लोकएव । तत्रसाक्षात्सर्वांगसायुज्यंहिरण्यगर्भस्यैव । तदन्येषांतु "लयोयतोमुक्तिरियंसुराणांभोगोविशेषेणचयंवदंति । उक्तश्चबिंबप्रतिबिंबभावःपिंगश्रुतावुक्तलयानुसारतः । बिंबे

लयोयंनियतश्चमुक्तौचिदात्मनांतद्वशताचसर्वदा । आनंदसुव्यक्तिरमुत्रतेषांभवत्यतःश्रेष्ठतएवनिर्गताः । क्रीडंतिभूयश्चसमाविशंतितानेवसायुज्यमिदंवदंति" इत्याद्यनुव्याख्यानोक्त्यनुसारेण उत्तरोत्तरदेहलयक्रमानुसारेणव्यवधानतःपरंपरयासर्वांगसायुज्यमित्याशयवतोक्तंलयक्रमानुसारेणेति। एवंभगवत्सायुज्यभाजांकिंतत्रैवावस्थानमित्यतउक्तंतदंतर्बहिरेववेति ॥५०५–५०६॥ अयमनियमोन्येषामेव । वायोस्तुनसामस्त्येन कदाचिद्बहिरेववा । किंतुकैश्चिदंशैर्भगवदंतःप्रवेशःसर्वदानियतः । रूपांतरैस्तु तदंतर्बहिरेववेति । वायुर्विष्णुंप्रविश्यैवेत्यवधारणादित्याशयेनाह ॥ वायुरिति ॥ आनंदमालायांच "तदंतर्बहिरेववेत्यत्र

वायुर्विष्णुंप्रविश्यैवभोगान्भुङ्क्तेयथेष्टतः ॥ ५०७ ॥ साक्षात्सुराणांसायुज्यंस्वोत्पत्त्यंगेषुकीर्त्यते ।

परीक्षित्पूर्वकाणांतुतद्भवेत्पादमूलतः ॥ ५०८ ॥

एवशब्दात्पुनश्चायंनियमः । प्रलयेसर्वेषामंतरेवेतिस्थितिःपुनःसृष्टौकेषांचिद्बहिरेवेति । पुनरपिवाशब्दात्सृष्टिकालेकेषांचिदंतर्वाबहिर्वेतिविकल्पोभवति। एवंचेत्सर्वाधिकोवायुःकथमित्यतआह॥ सोध्यक्षेतदुपगमादिभ्यइतिसूत्रं। वायुर्विष्णुंप्रविश्यैवेति। अयंभावः । सोयंवायुशब्दितोविरिंचइत्याद्युक्त्वा उपसंहारेतस्मिन्नेवविष्ण्वाख्याश्रयेस्थित्वातत्सहभोगनामकान्सर्वभोगान् भुङ्क्ते । नचपुनस्तदंतर्बहिरेववेतिविकल्पः । ततोनिर्गमेतस्मिन्नेवरूपांतरेणस्थित्युपपत्तेरित्याद्युक्तं ॥ ५०७ ॥ देवानांकिंसाक्षा(त्सर्वांगसा)त्सायुज्यंसर्वेषामपि नेत्याह ॥ स्वोत्पत्तीति ॥ सूर्यादीनांचक्षुराद्यंगजन्यत्वादितिभावः । देवातिरिक्तसायुज्य

भाजामाह ॥ परीक्षिदिति ॥ तदुक्तं "स्वोत्पत्त्यंगेषुदेवानामन्येषांपादमूलतः । मुक्तिस्तुविहिताविष्णोर्निर्दिष्टेषुयथावच" इति द्वितीयतात्पर्ये । निर्दिष्टेषु सर्वांगसायुज्यविषयेदेहलयानुसारेणनिर्दिष्टेषुयथावचस्तथाग्राह्यं । ब्रह्मादिदेवतांगाश्रितत्वेननिर्दिष्टेषुयथावचइतिवा । केचिदत्रैवमुच्यंतेइतिभगवत्प्राप्तिंविनान्यत्रैवमुक्ततयानिर्दिष्टेषुतुयथावचइतिचार्थः ॥ ५०८ ॥ यदुक्तं भोगस्वातंत्र्येभगवत्साम्यमित्यादि तत्राह ॥ तेभोगानिति ॥ "अथभिक्षाचर्यांचरंती" त्याद्युक्तेर्नभोगस्वातंत्र्यं । पारतंत्र्येपि "कामेनमेकामआगा" दित्युक्तन्यायेनभगवत्कामानुसारीच्छावत्त्वान्मुक्तस्यनयथेष्टभोगहानिः । हरिगुरुवशत्वंतुनदोषस्तस्यैव

तेभोगान्हरिदत्तांस्तुमुक्तशेषानलौकिकान् । ज्ञानोत्तरक्रियाव्यक्तान्सुखवैचित्र्यकारकान् ॥ ५०९ ॥

संकल्पमात्रात्संप्राप्तान्भुंजंतोऽन्यानधीनकाः । रमंतेचोपरमंतेकदाचित्स्वेच्छयैवहि ॥ ५१० ॥

परमेष्टत्वात् । वैषयिकसुखांगीकारेदुःखानुषंगइत्यपिमंदं । भोगकरणानामिंद्रियाणांसच्चिदानंदात्मकत्वाद्भोग्यानांचकेषांचिच्चिद्रूपत्वेनकेषांचिच्छुद्धसत्वात्मकत्वेनालौकिकत्वाद्दुःखादेरनवकाशग्रस्तत्वादितिभावः । यदप्युक्तंतत्कालेआगंतुकविषयसंबंधप्रापकाभावइति । तत्र "उपासयाकर्मभिश्चभक्त्याचानंदचित्रते" तिभाष्यव्याख्यानेतत्वप्रकाशिकायां "आत्मज्योतिषाप्रकाशयंतःसुखमेवानुभवंति नदुःखमण्वपिज्ञानोत्तरपुण्यभाजोभोगबाहुल्य" मिति । यदुक्तं अग्निहोत्रादीत्यत्र "नहास्यकर्मक्षीयते अस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजत" इतितत्सूचयतीत्यादिनामुक्तौज्ञानोत्तरमनुष्ठितकर्मणांभावेनतत्कालेऽपेक्षितविषय

प्राप्तिर्भवतीत्यवगमादित्याशयवानाह ॥ ज्ञानेति ॥ यदप्युक्तंतत्तद्विषयसंपादनेनायासइतितत्राह ॥ संकल्पेति ॥ तत्तदुपाय साध्यसाधनसाध्योनभवतिमुक्तानांभोगः । येनायासादिदोषः । किंत्वप्रयत्नादेवकामनामात्रेण । नच कामनादोषइति वाच्यं । "कामःसंकल्पआनंदोमुक्तानांतारतम्यतः । स्वरूपभूतास्तेसर्वेनिर्दोषागुणरूपका"इत्युक्तेः । एतेन स्वप्रयत्नासाध्यत्वे तदर्थमन्यानुसरणंदोषइतिनिरस्तं । यच्चोक्तंविषयापायेनेष्टहानिर्दोषइति । तत्राह ॥ उपरमंतइति ॥ स्रक्चंदनवनितादिषुवि षयेषुस्वेच्छयैकैकोपरमेणविषयांतरस्वीकारेकथमिष्टहानिः । यदासर्वविषयाभावस्तदाकथमितिचेत् भगवद्ध्यानादौकुतूहलिता विशेषेणस्वेच्छयैवसर्वविषयोपरमांगीकारात् । एतेन लयसमयेविषयाभावादिष्टहानिरितिनिरस्तं । अनिच्छादशायांतत्तत्प्राप्ते

नह्रासोनचवृद्धिर्वामुक्तानांविद्यतेक्वचित् । कादाचित्कविशेषस्तुनैवतेषांनिषिध्यते ॥ ५११ ॥

रेवानिष्टरूपत्वात्तदलाभएवसुखरूपः । तदुक्तं "यथाकामंरमंतेयथाकाममुपरमंत"इतिभाष्यतत्वप्रदीपिकायां तदनिच्छायांवि षयोपरमस्यसुखरूपत्वादिति ॥५०९–५१०॥ ननुमुक्तानांध्यानाद्युपासनांगीकारेतद्भावाभावाभ्यांवृद्धिह्रासौस्यातां । अन्यथात द्वैयर्थ्यादित्यतोभाष्यवचनंपठति ॥ नह्रासइति ॥ "हरेरुपासनाचात्रसदैवसुखरूपिणी । भक्तिश्चसुखरूपैवमुक्तानांनचसाधन" मित्युक्तेःध्यानादेःफलरूपतयासाधनरूपत्वाभावान्नोक्तदोषइतिभावः । अत्रवृद्धिह्रासाभावोक्तिरपरोक्षज्ञानव्यंग्यस्य नित्यव्य क्ततयासर्वदाऽलंबुद्धिगोचरत्वेनानुभूयमानस्य प्रचुरतरानंदस्यैव । ज्ञानोत्तरभाविसत्कर्मव्यंग्यानंदवैचित्र्यस्यतु प्रापकतत्त

द्विषयभोगभावाभावाभ्यांव्यक्त्यव्यक्तिरूपकादाचित्कवृद्ध्यादिविशेषरत्ववश्यमंगीकार्यइत्याह ॥ कादाचित्केति ॥ ५११ ॥ उक्ताभिप्रायंव्यनक्ति ॥ आनंदादीति ॥ अयंविशेषोविरिंचादिसर्वमुक्तानामपियथाक्रममंगीकार्यः । मुक्तानामित्यस्यसामान्यवचनत्वात् । तस्यापिभोगविशेषभावाभावाभ्यामानंदवैचित्र्येकादाचित्कविशेषस्यप्रमितत्वात् । ननु "मुक्तानांतुतदन्येषां समुद्रतरलोपमे"त्यनुव्याख्यानसुधायां "ब्रह्मण"इतिविशिष्याभिधानेकोहेतुरित्यतआह ॥ मुक्तानांत्विति ॥ विशेषबलेन वृद्धिह्रासवतीत्यर्थः । यथोक्तं "अवृद्धिह्रासरूपत्वंमुक्तानामित्यादि"इति । चतुर्मुखातिरिक्तमुक्तानामेववृद्धिह्रासवत्त्वेस्यभाष्यवाक्यस्यसंमतितयोदाहरणेनास्यचतुर्मुखातिरिक्तमुक्तपरतायानिश्चयात्नानेनचतुर्मुखस्यवृद्धिह्राससद्भावनिश्चयइतिचेत् न।

आनंदादिगवैचित्र्यव्यक्तिर्भोगविशेषतः । तदभावेनवैचित्र्यव्यक्तिःशक्त्यात्मनैवहि ॥ ५१२ ॥

तत्रानुव्याख्यानेद्दशिरितिप्रक्रांतत्वेनज्ञानएवविशेषाभावस्यतदभिप्रेतत्वेनानंदवृद्धिह्रासाविषयत्वात् । नचाविशेषादानंदपरत्वमितिवाच्यं । "भवतिभूतिकृदेवभूत्या"इतिविशेषाभिधानात् । "उत्तरोत्तरतश्चापिविशिष्टादक्षिणासुखे"इतिरमायाअपिसुखवैचित्र्यस्यप्रमितत्वेनहिरण्यगर्भेकैमुत्यप्राप्तत्वात् । नह्रासोनचवृद्धिर्वेत्यस्यसर्वगुणसाधारणतया यदाज्ञानपरता तदाचतुर्मुखातिरिक्तानांमुक्तानामित्यर्थस्वीकारान्नसुधाविरोधइतिज्ञेयं । नह्रासोनचवृद्धिर्वेत्यस्यपूर्वमानंदस्वरूपपरत्वमुक्तं । अस्तुवावैचित्र्यपरत्वं । नचवृद्ध्यादिप्रतिपादकग्रंथविरोधः । अत्रयथाक्षुद्रनदीप्रवाहस्यसमग्रस्यापिकदाचिद्वृद्धिःकदाचिद्ध्रासः । एवंमुक्तानंदस्यापिसर्वस्यकदाचिद्वृद्धिर्ह्रासश्चसर्वथानेत्यर्थस्यविवक्षितत्वात् । तदुक्तं "प्रवाहतस्तुवृद्धिर्वाह्रासोवानास्तिकुत्रचि"दिति ।

तथापिभगवदानंदइवसर्वथानवृद्धिह्रासाभावोमंतव्यः । किंतुभोगानांविशेषेषुसत्सुभोगतद्विशेषतदल्पत्वादिभिर्मोदप्रमोदमुदाद्यानंदवैचित्र्यविशेषाव्यज्यंते।"भोगानांतुविशेषेषुवैचित्र्यंलभ्यतेक्वचित्"इत्युक्तेः। अत्रकेचित् यथा एकएवसुवर्णपिंडःकिरीटकटककुंडलाद्यनेकभावमापद्यते तथा आनंदाख्यव्यक्तिरेकैवस्रक्चंदनवनिताद्यल्पभोगमहाभोगव्यंग्यत्वरूपविशेषेणनानावैचित्र्यमापद्यते । वस्तुतोनानंदव्यक्तिनानात्वमितिसंगिरंते ॥५१२॥ वैचित्र्यंचनैकप्रकारेण । अपितुनीचनीचापेक्षयोत्तमोत्तमानांगुणतारतम्यक्रमेणभोग्यानामेवातिप्राचुर्यात् । तथास्वाधमभोग्यंयदल्पविषयादिकंतत्समानेनापिविषयेणोत्तमोत्तमानांमहा

वैचित्र्यंस्पष्टतादिश्चतारतम्यक्रमाद्भवेत् ॥५१३॥ इच्छामात्रेणोत्तमानांवैचित्र्यव्यक्तिरिष्यते ।
विषयेभ्योधिकसुखव्यक्तिःप्राकाम्यमिष्यते ॥ ५१४ ॥ इतरेषांसुराणांतुनिस्सीमानंदभोजनं ।
यतोभोगान्विनैवैषांकामितानंदसंभवः ॥ ५१५ ॥

नंदाविर्भावाच्चोत्तरोत्तरमानंदप्राचुर्यं । एवमानंदपरिमाणोत्कर्षस्यशतसहस्रादितउत्तमत्वेपितद्गतस्पष्टतोत्कर्षांशोत्कर्षादेःसहस्रकोट्यनंतगुणितमाधिक्यंज्ञातव्यमित्याशयेनाह ॥ वैचित्र्यमिति ॥ उपपादितमेतत्तारतम्यप्रस्तावे ॥ ५१३ ॥ अत्रदेवानांविषयाभावेपीच्छामात्रेणविषयव्यंग्यमोदादिलाभोभवतीत्याह ॥ इच्छामात्रेणेति ॥ अत्रैकादशतात्पर्यवाक्यंपठति ॥ विषयेभ्य इति ॥ तदुपपादयति ॥ यतइति ॥ अयमाशयः । अणिमाद्यष्टमहासिद्धिषुप्राकाम्यंनामयासिद्धिः सा देवातिरिक्तगताचेत्

"विषयेभ्योऽधिकसुखव्यक्तिःप्राकाम्यमिष्यत"इत्युक्तेः कदलीफलादिविषयेभ्योलोकेयावदानंदःसंभावितः तदपेक्षयातिबहुतरानंदव्यक्तिरूपा । देवगताप्राकाम्यसिद्धिस्तु "यादृशानंदकामःस्यात्तादृशानंदसंभवः । भोगान्विनैवप्राकाम्य"मित्युक्तरीत्या इच्छामात्रेणविविधविचित्रानंदप्राप्तिरकारणिकानिस्सीमाचभवति । ननुतर्हिविषयभोगोव्यर्थः । तदभावेपितत्प्राप्त्यानंदस्यलाभादितिचेत्सत्यं । विषयभोगंविनातेप्रायआनंदकामनांनकुर्युः । यदिकुर्युस्तर्हिसुखलाभइत्येकादशतात्पर्याभिप्रायः । वश्यप्रकृतीनांतेषांनानाकौतुकवशेनसर्वभोगोपपत्तिः । भगवतस्तुविषयभोगाभावेप्यानंदोनित्यव्यक्तइत्यभिप्रायेणभोगस्तुलीलयेत्युक्तिः । "तथाप्यचिंत्यशक्तित्वाज्जातंसुख"मित्युक्तिश्च तदन्येषांभोगेनानंदकामनामात्रेणचागंतुकानंदव्यक्तिरितिनात्रक्षुद्रो

मुक्तानांनजगद्यत्नस्तथापिविबुधाःसदा । मुक्तानांतुनियंतारस्तेषांब्रह्माऽस्यवैहरिः ॥ ५१६ ॥

पद्रवः ॥ ५१४–५१५ ॥ ननुसंकल्पादेवसमस्तसंभवात्सृष्ट्यादिसमस्तकार्यसंभवोपिस्यादित्यतोन्यायविवरणवाक्यंपठति ॥ मुक्तानामिति ॥ नमुक्तानांजगद्व्यापारेच्छाभवति । अतोनजगद्व्यापारसंभवः । ऐश्वर्यरूपत्वात्तदिच्छायुक्तेतिनवाच्यं । जगद्व्यापारविरुद्धस्वभावेतदिच्छायाअयुक्तत्वात् । "नहिकश्चित्सुशक्तोपिचकाराचेतनंचितिं । नहिकामस्तथाभूयात्ततःस्यात्सत्यकामते"त्युक्तेर्नमुक्तानांतादृशसंकल्पइतिभावः । तर्हि "सोमुनैवयथाऽमुष्मात्परांचोलोकास्तांश्चाप्नोती"त्यादौकथंमुक्तानांलोकाधिपत्योक्तिरित्यतउक्तं तथापीति ॥ "मुक्तस्वकीयावरयंतृतास्तिमुक्तावपिब्रह्मपुरःसराणा"मित्यनुव्याख्यानसुधायां

"मुक्तेष्वपिकल्पांतरीयमुक्तान् स्वकल्पमुक्तेष्वप्युत्तमान्समांश्चप्रति नास्तीत्यतोमुक्तेत्याद्युक्त"मित्युक्तरीत्या स्वकल्पेपिमुक्तानामवराणांविबुधानियामकाइत्यर्थः । अत्रकेचित् मुक्तानांदेवानांस्वावरनियामकत्वमंगीकृत्यापि नांतर्नियामकत्वं किंतुराजादिवद्बहिर्नियामकत्वमेव । "तुरीयायामवस्थायांप्राणादेवविबोधन"मितिछांदोग्यभाष्येमुख्यप्राणस्यैवांतर्नियामकत्वोक्तेरिति मन्यंते । तदयुक्तमिवाभाति । तुरीयायामवस्थायामित्यत्र "षोडशींवाकलामृते । तुरीयोदृष्टइत्युक्तोग्रहणादेरगोचर"इतिमांडूकभाष्योक्तमोचकतुरीयसाक्षात्कारावस्थारूपासंप्रज्ञातसमाध्यवस्थायाएवतुरीयावस्थात्वेनोक्तेः मुक्तौप्राणादेवविबोधनमि

प्रतिबिंबाह्विप्रुड्ढ्यानंदस्यचाखिलाः । स्वरूपभूतामुक्तानामानंदाह्विलक्षणाः ।
क्रमेणाधिकपूर्णाश्चस्युःस्पष्टाश्चोत्तरोत्तरं ॥ ५१७॥

त्यर्थाभावात् । अन्यथा "स्वजगद्व्यापृतिस्तेषांपूर्ववत्समुदीरिते"तिभाष्यविरोधः । किंच "गताःकलाःपंचदशप्रतिष्ठादेवाश्च सर्वेप्रतिदेवतास्वि"त्याथर्वणभाष्येगताःमुक्ताःप्राणादिपंचदशकलाभिमानिनोदेवाः अन्येचदेवाःसर्वे प्रतिदेवतासु देवताप्रतिबिंबभूतासुप्रजासु प्रतिप्रतिस्थिताः । "तस्मात्सर्वेषुमुक्तेषुनरेष्वपिनियामकाः । तिष्ठंतिनात्रसंदेहःपरमात्मनिचाखिला"इति, तथातत्वनिर्णयतट्टीकादौचस्पष्टमंतर्नियामकत्वस्योक्तत्वेनतद्विरोधापातात् ॥ ५१६ ॥ ननुतथापिमुक्तानांसत्यकामत्वसाम्यात्किंपरमेश्वरानंदसाम्यमित्यतो "विप्रुडानंदभागिन"इत्यादि हृदिनिधायाह ॥ प्रतिबिंबाह्वीत्यादिना ॥ ५१७ ॥ निगम

यति ॥ एवमिति ॥ "अक्षरधियांत्वविरोधइतिसूत्रं, ज्ञातिभिर्वाज्ञातिभिर्वेतिश्रुतिं, सांसारिकादनंतगुणत्वान्मौक्तिकसुखस्ये"त्यादितत्वप्रदीपंचमनसिनिधायाह ॥ विरोधेत्यादि ॥ ५१८-५२० ॥ वैकुंठादिलोकान्लेशतोविवृणोति ॥ अनंतासनेत्यादिना ॥ नारायणपुरं श्वेतद्वीपः । एतद्द्वितीयतात्पर्यवचनं । "पृथिवीस्थेषुसर्वोच्चोलोकोनंतासनात्मकः । अंतरिक्षात्मकेभ्यश्चश्वेतद्वीपस्थितोहरिः । द्यात्मकेभ्यश्चसर्वेभ्योवैकुंठश्चोच्चउच्यते"इतिछांदोग्यभाष्यानुसारेणोक्तं सर्वतश्चोच्छ्रितानीति ।

एवंविधमहानंदभोगोद्रिक्ताखिलेंद्रियाः । विरोधगंधविधुरैरन्योन्यंप्रीतिपूरितैः ॥ ५१८ ॥

सहमुक्तैःसहैवान्यैःक्रीडंतश्चपरस्परं । सांसारिकादसंख्येयेमग्नाःसुखमहार्णवे ॥ ५१९ ॥

ध्यायंतःकमलानाथंभजंतःपरमादरात् । वैकुंठादिषुलोकेषुयथेष्टंविहरंतिते ॥ ५२० ॥

अनंतासनवैकुंठनारायणपुराणितु । त्रीणिधामानिविष्णोस्तुसर्वतश्चोच्छ्रितानिच ॥ ५२१ ॥

ननुबृहदारण्यके "तस्यामश्राम्य"दितिश्वेतद्वीपस्यभूस्थितत्वमुच्यते । तद्भाष्येच "सृष्ट्वासपृथिवींविष्णुःशेतेनंतोब्धिमध्यगः । तस्यांपृथिव्यांश्वेताख्येद्वीपेमुक्तैरुपासित"इतिश्वेतद्वीपस्यपृथिवीस्थितत्वमुच्यते । तथाचश्वेतद्वीपस्यकथमंतरिक्षस्थत्वमुच्यतइतिचेत् अत्राहुःसांप्रदायिकाः । "सांद्रंक्षीरंतथादधी"तिपंचमतात्पर्योक्तेःक्षीरसमुद्रस्यातिघनीभूतत्वेनघनीभूतक्षीरोपर्यवस्थितस्यश्वेतद्वीपस्यसाक्षाद्भूस्पर्शाभावात्क्षीरार्णवस्यभूम्यपेक्षयाअत्यौन्नत्याच्चतद्विवक्षयाछंदोगभाष्यवाक्यं । बृहदारण्यकवाक्यंतु

पृथिव्यांसांद्रक्षीरोदकं तदुपरिसंबद्धःश्वेतद्वीपइतिपरंपरयापृथिवीस्थत्वंविवक्षित्वाप्रवृत्तमिति । संप्रदायांतरंतुश्वेतद्वीपस्थित भगवद्विमानस्यभूम्याकिंचिदंतरितत्वेनभूसंस्पर्शाभावादंतरिक्षस्थितत्वं । किंचिद्व्यवधानस्याल्पत्वेनाविवक्षयापृथिवीस्थितत्वोक्तिरिति । "अप्राकृतात्सदनाद्वासुदेवोनिःसृत्यलक्षामितभानुदीधितेः"इतिनिर्णये, "श्रीरेवलोकरूपेणविष्णोस्तिष्ठतिसर्वदा, । इतिगीतातात्पर्ये,श्वेतद्वीपोमंटपश्चदिव्यरत्नमयोमहान् । पद्ममेतत्त्रयंदेवी"तितंत्रसारेचकेवललक्ष्म्यात्मकत्वस्यैवप्रमितत्वादित्याशयेनोक्तंमहालक्ष्मीस्वरूपाणीति । केचित्तु श्रीभागभूभागदुर्गाभागभेदेनप्रत्येकंत्रिप्रकारेषुश्रीभागमात्रस्यैवलक्ष्म्यात्मकत्वं

**महालक्ष्मीस्वरूपाणिनित्यान्यत्यद्भुतानिच । यन्मध्येषुसदाभांतिभवनानिरमापतेः ॥ ५२२ ॥**

**प्रासादानिचदिव्यानिहरिलीलाकराणिच । अनंतसूर्यतेजांसिस्वर्णरत्नात्मकानिच ॥ ५२३ ॥**

**विचित्राणिविशालानिविविधान्यसमानिच । यत्रामृताहिराज्ञोगेरमयारमतेहरिः ॥ ५२४ ॥**

मत्वा इतरभागस्यप्राकृतत्वंपुराणवाक्यमनुसृत्याहुः ॥ भवनानीति ॥ "बहूनिस्थानभेदानिकृष्णस्यक्षीरसागरे"इतिदशमतात्पर्योक्तेः । अत्रभवनान्यनेकानिमंतव्यानि लक्षामितभानुदीधितेरित्यनुसारेणाह ॥ अनंतसूर्यतेजांसीति ॥ स्वर्णरत्नात्मकानीति ॥ "विमलाकृतिःप्रकृतिरेवमहामणिहेममय्यखिलवस्तुमयी"तिमध्वविजयोक्तेः सर्वमपिरमात्मकमेवेतिध्येयं । असमानीत्यस्यसर्वोत्तमानीत्यर्थः ॥ यत्रामृतेति ॥ तच्चोक्तंमध्वविजये "कमलापतिःकमलयाऽमलयाकमनीययाकमललोचनया ।

अमृताहिराजमृदुभोगगतःस्वरतोपितत्ररमतेपरम"इति ॥ ५२१-५२४ ॥ गृहकर्मकरीति ॥ "स्वयमिंदिरैवपतिमानकरी गृहकर्मयत्रकुरुतेसुतरां । अपिकिंकरीदशशतीमहिते"त्यादिमध्वविजये ॥ अनंतेंद्रियसंभोग्यैरिति ॥ विजातीयानंतेंद्रिय संभोग्यैरित्यर्थः । उपपादितमेतद्भगवत्प्रकरणे ॥ अनंतानंतरूपेणेति ॥ अश्वत्थकक्षारण्यमध्यसरोविमतपर्यंकादिरूपेणछंदोगा ष्टमाध्यायोक्तप्रकारेण । "पूर्वंहरेश्चक्रमभूद्धिदुर्गे"त्यादिनिर्णयोक्तप्रकारेण लक्ष्मीस्तत्तत्स्वरूपिणीत्यादितत्रतत्रोक्तप्रकारेण वानि

येषुलक्ष्मीर्जगन्मातागृहकर्मकरीसदा । अनंतेंद्रियसंभोग्यैर्विविधैर्विषयैःशुभैः ॥ ५२५ ॥
अनंतानंतरूपेणपतिपादाब्जमादरात् । पूजयत्यनिशंदेवीस्वतःसंपूर्णमीश्वरं ॥ ५२६ ॥
यत्रब्रह्मादिदेवानांभवनान्यप्यनंतशः । नानाकौतुकयुक्तानिबहुसूर्यप्रभाणिच ॥ ५२७ ॥
असंबाधानिदिव्यानिचित्सुवर्णमयानिच । अचिंत्यानिविशालानिह्याभांतिपरितःक्रमात् ॥ ५२८ ॥
अहोअत्यद्भुतंलोकेमाहात्म्यंदृश्यतेस्फुटं । अनादिकालतोमुक्तास्तत्रसंतिह्यनंतशः ॥ ५२९ ॥

तावाहनभूषणफलपुष्पाद्यनंतलोकसजातीयविविधविचित्रप्रकारकानंतानंतरूपेणेत्यर्थः । नचानेनभगवतःकोप्यतिशयइत्याह ॥ स्वतइति ॥ उक्तंपुरस्तादेतत् ॥ ५२५-५२७ ॥ चित्सुवर्णमयानीति ॥ लक्ष्म्यात्मकत्वादितिभावः ॥ ५२८ ॥ वैकुंठादि लोकाहि द्वादशकोट्यादियोजनत्वेनपरिमिताः । तत्रानंतानांविरिंचानां अनंतानामनंतानां अनंतानांसुपर्णानामित्येवंप्रत्येक

मनंतानांदेवऋषिगंधर्वादिमुक्तानामतीतानांभावात् तन्नगराणांपूर्वमिवसुविशालत्वात् तथाभविष्यतामनंतानांमुक्तानांतादृश नगरादिभिर्भाव्यत्वात् एवंबहुविधानंतनगरभवनानामल्पदेशेकथमवस्थितिः पूर्वंजनरहितदेशावस्थितिः पश्चाद्वाऽतिनिबिडत्व मित्याद्यापत्तेश्चेत्याशंकायां लोकात्मकेंदिराचिंत्यशक्त्याऽनंतनगरादेरप्यल्पदेशेस्थितिःसर्वदाजनसांद्रता संबाधाभावश्चेत्येतत्स र्वमुपपद्यतइत्याह ॥ अहोइति ॥ तदुक्तंमध्वविजये "तदनादिकालमितमुक्तिरतेरगणेयशंभुमुखसंघततेः । नगरैर्महापुरमसं हतिमल्लसतिप्रभोरयमहोमहिमेति, विधयोविहंगपतयोऽगणितारमणीयुताश्चफणिपेंद्रमुखाः" इत्यादिच ॥ ५२९–५३० ॥

इतःपरमनंताअप्यागमिष्यंतितत्रच । तथापिजनसांद्रत्वमसंबाधश्चसर्वदा ।

देव्याअचिंत्यशक्तित्वान्नायुक्तंतत्रकिंचन ॥ ५३० ॥ एतच्चमहदाश्चर्यंविमुक्तिःसादिरेवहि ।

स्यादेतत् यद्यनादिकालतोमुक्ताःस्युः । नचैतद्युज्यते । मुक्तियोग्यत्वावच्छिन्नाःसर्वेप्यनादिकालादारभ्यसंसारेस्थित्वास्वस्व योग्यसाधनपरिपाकानंतरंमुच्यंतेइतिहिप्रमाणान्यनेकानि । सतिचैवंकथमनादिमुक्तिप्रत्याशा । तथाचानादिनित्यवैकुंठादेः सर्वदानिःसंख्यमुक्तजनसंकीर्णतानयुज्यतइतिचेत् संतिह्येवमपिप्रमाणानि । नहिकदाचिद्वैकुंठाद्यभावोवा तद्भावेपिविजन तावा तस्यशक्यतेवक्तुं । अतोविरुद्धोभयप्रमेयेनिरवकाशप्रमाणप्रमितेयुगपदणुत्वमहत्त्वन्यायेनाचिंत्यशक्त्यानिर्वाहोऽवश्यं वाच्यइत्याह ॥ एतच्चेति ॥ एतेनेदमपिपरिहृतं । सर्वेषामपिमुक्तियोग्यानामितःपरमनंतकालंसंसारांगीकारेनित्यसंसारित्वं

स्यात् । नहि नित्यसंसारितयाप्रमितानामप्यनंतकालसंसारित्वमपहायान्यन्नित्यसंसारित्वमस्ति । अतएतद्दोषपरिजिहीर्षया इतःपरंपरिमितकालएवसर्वेषामपिविमुक्त्यंगीकारे ततःपरंदेवऋषिमनुजोत्तमाद्यभावेनजगत्प्रवाहविलोपःस्यादिति तद्देषोभय तःपाशारज्जुरित्युक्तन्यायेनैवसमाधानादितिप्रसंगादाह ॥ सर्वेषामिति ॥ ५३१–५३३ ॥ एतादृशेषुवैकुंठादिलोकेषुवासयोग्याःकेइतिजिज्ञासायामाह ॥ लोकेष्वीदृशेति ॥ "अदायादास्तुपुत्राणामुद्रिक्तज्ञानचक्षुषः । नारायणपरादेवाएवतानामुवं

पृथक्पृथक्कसर्वेषामीशशक्त्यातथापितु । अनादिकालतोमुक्ताह्यनंताःसंत्यजादयः ॥ ५३१ ॥

सर्वेषांमुक्तियोग्यानांविमुक्तिर्मितकालतः । नित्यसंसारितानोचेत्सर्वकालेतथापिच ॥ ५३२ ॥

संतिसंसारिणोनंताएतदप्यतिकौतुकं । अचिंत्ययेशशक्त्यैतद्युज्यतेसर्वमेवच ॥ ५३३ ॥

लोकेष्वीदृशनिःसंख्यविभवेषुसुराःसदा । रूपयौवनसंपन्नललनायुतमध्यगाः ॥ ५३४ ॥

तिचे"तिद्वितीयतात्पर्ये । "अश्वत्थवृक्षारण्यादिषुकथंभोगः । तेषांलक्ष्म्यात्मकत्वात् । नहिरमास्वरूपेषुवनादिषुविहारोभगवदन्येषांयुज्यते । तथालक्ष्म्यात्मकजलादियुक्तत्वेनप्रमितेषुअरण्यसुधासमुद्रादिषुसुतरांमुक्तानांविहारोनसंभवति । लक्ष्म्यात्मकजलपानादेरयोग्यत्वादितिचेदत्राहुःसांप्रदायिकाः । मातुरंकेशिशोरवस्थानं मातुःस्तनसंस्पर्शपूर्वकंस्तन्यपानादि यथानविरुद्धं तथारमायामातृत्वात्पोषणादिकर्तृत्वान्नतदात्मकभवनादिषुविहारोदोषाय । किंचाश्वत्थवने "शाखांशाखांमहानद्यःस्रवं

तिपरितस्स्रवाः । धानापूपामांसखंडाःसदापायसकर्दमाः"इतिशुद्धसत्वात्मकपदार्थस्रवणंश्रूयते । तद्भोगोनविरुद्धः । अरण्यादिजलेषुतुरमास्वरूपभूतेषुमुक्तभोगार्थंशुद्धसत्वरूपजलसंमेलनमस्ति । तद्भोगएवमुक्तानां । यथारमागर्भाज्जायमानानांसूतिस्थदेवानांतज्जठरगतजडोपादानकदेहवत्त्वंतथारमात्मकवस्तुगतस्वस्वयोग्यजडभोगोयुक्तएव । "अन्यादृशीहिसुरभुक्तिरतोन्यरूपा । मानुष्यभुक्तिरितिनात्रविचार्यमस्ती"त्युक्तन्यायाच्च । लोकेहंसोपिनीरक्षीरसंकलनेपिक्षीरमात्रंपिबतितथोपपत्तेरितिसर्वमनवद्यं । अत्रदेवशब्दःकर्मदेवादिपरोपिज्ञातव्यः । "अप्रतीकालंबनान्नयती"त्याद्युक्तेः । "विष्णोर्लोकंतदैवैकेयांतिकालांतरे

नानाभोगभुजःसत्यकामाःक्रीडंत्यनंतधा । राजानऋषिगंधर्वप्रमुखाअपिकेचन ॥ ५३५ ॥

क्वचित्क्वचिदिहायांतिदेवभृत्यास्तुकेचन । निस्सीमाद्भुतभोगास्तुशेषवींद्रादिदेवताः ॥ ५३६ ॥

परे"इत्याद्युक्तेश्च । उक्तंपुरस्तादेवैतत् । सुरेतरेषामपिवैकुंठप्राप्तिमाह ॥ राजानइत्यादिना ॥ देवतावाहनपरिचाराणांगंधर्वाप्सरःप्रभृतीनांचतत्रावश्यंभाव्यत्वात् । अत्रवस्तुतोयेऽप्रतीकालंबनाअष्टगंधर्वाःकाश्चिदप्सरसश्च तेषांसद्योवैकुंठप्राप्तिर्निश्चितैव । तदन्येआजानजास्तत्समाऋषिगंधर्वाद्याःकृष्णांगसंगयोग्यागोपांगनाश्चयेतेकालांतरेवैकुंठंप्रापारइत्याहुः ॥ ५३४–५३५ ॥ तदन्यगंधर्वाप्सरःप्रभृतीनांवैकुंठलोकगतदेवतासंसेवनार्थंकदाचिदत्रागमनमात्रं नतुनियतस्थानतयावासइत्याह ॥ क्वचिदिति ॥ कदाचिदागत्यदेवतासेवांविधायान्यत्रवासइत्याहुः । ननु "सूर्यप्रसादात्तुनराःपूर्वद्वारेणकेशवं । प्राप्नुवंत्यथसोमस्यप्रसादा

त्पितरस्तथा । द्वारेणदक्षिणेनैवगंधर्वाःपश्चिमेनतु । अग्निप्रसादादृषयउत्तरेणेंद्रसंश्रयात् । शिवाद्यावायुमाश्रित्ययांत्यूर्ध्वेनह रिंसुराः" इतिछांदोग्यभाष्येमनुष्यादीनामपिवैकुंठप्राप्त्युक्तेःकथमवरगंधर्वादीनांतदभावः । यद्यप्येतद्वाक्यंहृदयस्थभगवत्पुर विषयं । तथापिसमानन्यायत्वाद्वैकुंठादिसाम्येनहृदयपुरेमुक्तिरिति कैमुत्याच्चेयमाशंका । मैवं । अत्रनरशब्देन प्रियव्रत पृथुपरीक्षिदादीनांमनुष्याभिमानिनां धनदपुरंजनादीनांवाविवक्षितत्वात् । तदुक्तंबृहद्भाष्ये लिंगभंगार्थंविरजाप्राप्तिसमयेसर्वे षांवैकुंठगमनस्योक्तत्वात्पश्चात्सकृच्छ्वेतद्वीपगमनस्यनियतत्वात्तदातत्प्राप्तौद्वारविशेषव्यवस्थापकंच । तत्रैवछंदोगभाष्ये "राजनं पृथिवीलोकेराज्यमित्युच्यतेबुधैः । विराज्यमंतरिक्षेतुस्वाराज्यंस्वर्गगंभवेत् । एतेषुमोक्षोपिभवेन्मानुषाणांविशेषिणां । श्वेतद्वीपंततोगत्वाद्दृष्ट्वाविष्णुंचतेततः । अनुज्ञाताःप्रमोदंतेनिर्दुःखास्तुधरादि"ष्विति धरांतरिक्षादिषुनरोत्तमानांस्थित्युक्तेः सकृच्छ्वेतद्वीपगमनस्यचाभिधानादिति । अतएवसूर्यप्रसादात्तुनराःपूर्वद्वारेणेत्यस्य सकृच्छ्वेतद्वीपगमनपरत्वमप्यनुमतमित्य विरोधः । नच मध्वविजयेवैकुंठवर्णनानंतरं "सुराद्यानरांतामुकुंदप्रसादादिमंमोक्षमेतेभजंतेसदेति" इतिनरादीनामपिसदा वैकुंठप्राप्तिरुच्यतइतिवाच्यं । इममित्यस्येत्थंरूपमोक्षमितिसामान्यतोमुक्तिमात्रपरत्वात् । अतएवपूर्ववैकुंठजनकथनप्रस्तावेसु राइत्येवतत्रोक्तमितिनकश्चित्क्षुद्रोपद्रवः । "यतोनिःसीमकास्तेषांदेवानामष्टसिद्धयइत्युक्त्वा देवेष्विंद्रेशवायुश्रीविष्णूनामुत्तरो त्तरं । सिद्धयःपरिपूर्णाःस्युः"इत्येकादशतात्पर्येदेवानांनिःसीमानंदप्रापकाष्टमहासिद्धिसद्भावमभिधाय विशिष्येंद्रादीनामुत्त रोत्तरमाधिक्येनपरिपूर्णत्वोक्तेस्तेषांनिःसीमाद्भुतभोगोस्तीतिज्ञायतइत्याशयेनाह ॥ निःसीमेति ॥ ५३६ ॥ अथानंतानंत

जीवजडात्मकाशेषप्रपंचस्य नानाविधातिविचित्रविशेषसहितस्य ब्रह्मत्वेवायुत्वेचेत्येवंमहाकल्पद्वयेचांतर्बहिःस्थूलसूक्ष्मात्मकानं तानंतरूपजातैःस्थित्वा सृष्टिस्थितिसंयमननियमनादिकर्तृत्वादिरूपेणान्यैरनंतकालेपिमनसापिकर्तुमशक्यानंतानंतप्रकारनिरव धिकाद्भुतपूजां श्रीमद्रमारमणचरणांबुजसेवारूपतयैवानवरतभक्तियोगेन सर्वत्रतत्तत्प्रवर्तकानंतानंदोद्रिक्तभगवद्रूपसाक्षात्कार पूर्वकंतदर्पिततयैवविदधानस्य अनंतस्वीयकल्पद्वयीयसज्जीवाधिकरणकयोग्यताज्ञानभक्तिवैराग्यापरोक्षादिस्वामित्वेन "ब्रह्मा महौघगुणित"मितिमहाफलभाजोऽनादिकालादारभ्यसर्वदोषोज्झिततयाचानवरतभगवत्प्रवणकायकरणवृत्तित्वेन विकर्मलेशा त्यंताभावाधिकरणत्वेनच प्रतिक्षणमेधमानभक्तिज्ञानापाराकूपारपरिमग्नपरमानंदप्रसन्नहृदयस्य अनंताम्नायाधीश्वरीसंसेव्यादि

पदद्वयस्थमुक्तानामधिपश्चतुराननः । गायत्रीत्रिपदीज्ञेयैरनिरुद्धादिरूपकैः ॥ ८३७ ॥

व्यपादारविंदस्य सुपर्णादिभिरप्यज्ञातवेदानुक्तगुणगणपरिपूर्णस्य श्रीवासुदेवपरमप्रेमास्पदतयामहालक्ष्मीकटाक्षप्रेक्षैधितसकल संपत्समृद्धिसमेतस्यापरब्रह्मणोविरिंचस्य देवताधीश्वरैरपिदुरधिगमंभोगप्रकारंस्वयमत्युत्तमंमंदमतिरपितदनुग्रहावगतमल्पाल्प तममपिसंक्षेपतोदर्शयति ॥ पदद्वयस्थमुक्तानामित्यादिना ॥ अत्रब्रह्मणोवायुत्वावस्थायामेवसहास्थितायेमुक्तास्तेषांवाय्वा कारेणैव प्राणनागादिप्रभेदस्वांशैर्नियामकः ब्रह्मत्वावस्थायामेवसहास्थितायेमुक्तास्तेषां विरिंचमहाचतुर्मुखपुरुषविराड्रूपादिभि र्नियामकइतिसांप्रदायिकोर्थः । "स्वजगद्व्यापृतिस्तेषांपूर्ववत्समुदीरिते"त्युक्तेः ॥ गायत्रीत्रिपदीज्ञेयैरिति ॥ तथाह्युक्तंबृहदा

रण्यकभाष्ये "गायत्रीत्रिपदीज्ञेयमनिरुद्धादिकंत्रयं । ब्रह्माव्याप्नोतिमुक्तस्सन्वासुदेवंनकश्चन । लोकस्थमनिरुद्धंचप्रद्युम्नंवेदगं तथा । संकर्षणंवायुसंस्थंप्राप्यब्रह्माविमुक्तिगः" इत्यादिना । तत्रस्थितइतितत्वप्रदीपवाक्यमेतत् ॥ ५३७–५३९ ॥ स्वयंच भोग्यरूपइति ॥ स्रक्चंदनफलपुष्पकौस्तुभमुक्तामालागजाश्वाद्यात्मना वनितारूपत्वेनचेत्यर्थः । उपपादितंवनितारूपत्वं "स्त्रीरूपोमिथुनीभवे"दितिछांदोग्यभाष्यमुदाहृत्य स्वभावतःपुमाकारस्यापिचेतनस्यकौस्तुभमुक्तामालाद्यात्मनाकादाचित्का कारव्यक्त्यंगीकारोननियतपुरुषाकारत्वविरोधी । तथास्त्र्याकारस्यस्वरूपेकादाचित्कव्यक्तिरपिनविरोधिनीतिज्ञेयं । ननुविद्य

लोकवेदप्राणगतैस्तथान्यैरप्यनंतकैः । साक्षात्सर्वांगसायुज्यंप्राप्यनित्यंबहिःक्वचित् ।
कैश्चिदंशैर्विनिर्गच्छन्प्रेरयत्यखिलान्निजान् ॥ ५३८ ॥ तत्रतत्रस्थितस्तत्तद्भोगान्भुङ्क्तेजगत्प्रभुः ॥ ५३९ ॥
स्वयंचभोग्यरूपःसन्स्वात्मानंकमलापतौ । समर्पयतिभुङ्क्तेचस्वमेवंदेवतासुच ॥ ५४० ॥

मानस्यैवस्त्र्याकारस्यव्यक्तिरितिवक्तव्यं । अन्यथाऽविद्यमानस्योत्पादे "मुक्तिर्हित्वान्यथारूपंस्वरूपेणव्यवस्थिति"रित्युक्तिवि रोधात् । व्यक्तिरित्युक्त्ययोगाच्च । तथाचचतुर्मुखरूपेपिस्त्र्याकारत्वापातेन विरिंचाद्यानियतपुंचेतनाः रमाद्यानियतस्त्रीचे तनाः भगवानेकएवोभयात्मकइतिनियमभंगप्रसंगइतिचेत् कौस्तुभाद्याकारतापिकथं । नियतपुरुषाकारताहानेः । वस्तुतःपुरु षाकारस्यापिकादाचित्कतादृशयोग्यतासद्भावेनैकदेशस्वरूपएवकौस्तुभाद्याकारप्राप्तावपि ननियतपुरुषाकारताभंगइतिचेत्

सममितरत्रापि। विरिंचोप्यागंतुकस्त्र्याकारकचैतन्यविकारेणविहृत्यपुनर्निजभावमापद्यते। लयसमयेभगवदुदरप्रवेशकालेविद्य
मानाकारस्यैवस्वरूपनैयत्यप्रयोजकत्वेनपुमाकाराविरोधेनैवलीलयानानाकारककामरूपस्वीकारस्यादोषत्वात् । एतेनाश्वाद्या
कारत्वमपिसमाहितंज्ञातव्यं। केचित्तुस्त्र्याद्याकारकादाचित्कशरीरग्रहणाददोषइतिमन्यंते। स्वं स्वात्मानंभुङ्क्तइत्यर्थः । प्रपं
चितंचैतत् "तेहिदेवाःस्वयंभोग्याःस्वयंभोक्तारएवचे"ति। नचैवंस्वस्त्रीभोगोपीतिभ्रमितव्यं। तस्यभगवदेकभोग्यत्वेनेतरायो

अत्तिमुक्तस्वरूपांश्चज्ञानानंदादिसद्गुणान् ॥ ५४१ ॥ शेषवींद्रेंद्रचंद्रादिदेवैर्मुक्तगणाधिपैः।
निःसीमानंदभोगादिप्रसन्नवदनांबुजैः ॥ ५४२ ॥ सर्वगीर्वाणगंधर्वसेव्यदिव्यपदांबुजैः।
असंख्यज्ञानभक्त्यादिगुणपूगाभिपूरितैः ॥ संस्तूयमानसंपूर्णकल्याणगुणवारिधिः ॥ ५४३ ॥
वाण्यापरमकल्याणपूर्णसद्गुणदेहया। परमप्रिययाप्रेमप्रवाहक्लिन्नचित्तया ॥ ५४४ ॥
मुक्तौस्वेनसमव्याप्तिमासयाहरिभक्तया। भृत्यप्रसादाभिमुखविकसत्कंजनेत्रया ॥ ५४५ ॥

ग्यत्वात्। उक्तन्यायमन्यत्रातिदिशति ॥ एवंदेवतासुचेति ॥ देवाअप्येवंकामरूपस्वरूपेणज्योतिर्मयदेहेनफलपुष्पाद्यात्मना
भगवंतमर्चयंतिस्वयमपिभुंजतेच । स्त्रीरूपंनदेवानांप्रमितं ॥ ५४० ॥ अत्तीति ॥ स्वाधीनशुभस्यस्वाभोग्यत्वानुपपत्तेः।
"भोगाश्चयेयानिचे"त्याद्युदाहृत्यपूर्वंसाधितमेतत् ॥५४१-५४४॥ मुक्तौस्वेनसमव्याप्तिमासयेति ॥ तथाह्युक्तंन्यायविवरणे

"ब्रह्मणश्चब्रह्माण्याश्चस्थानैक्यंगुणतारतम्यंचेति, स्थानैक्यंनगुणैस्ततइतिच । वाक्प्राणौदंपतीचापिसंसृज्येतेजनार्दने । मुक्तौतुतत्प्रसादेनसंसृज्यंतेततःपरे । प्राणद्वारेणसाक्षात्तुप्राणःसंसृज्यतेहरा"विति छंदोगभाष्ये । अन्येषांप्राणद्वारा प्राणवाण्योः साक्षात्सायुज्याभिधानाच्च । वाक्प्राणाविति सहप्रयोगात् । ततःपरेप्राणद्वारेणेत्यत्रवाग्व्यावृत्तेश्च । साक्षात्तुप्राणइत्यत्रप्राण शब्दस्यवागुपलक्षणार्थत्वान्नवाण्याःसाक्षात्सायुज्यानुक्तिशंकावकाशः । एकादशतात्पर्ये "पुरुषेणातिसामीप्यंप्रकृतेर्लय इष्यते । ब्रह्माचप्रकृतिश्चैवमुक्तिगौविलयेयतः । अतस्तौभिन्नदेहौतुज्ञानमात्रौसमीपगा"विति वाण्याःसाक्षाद्धरौलयमभिधाय

सर्वलोकातिशयितदिव्यसुंदरदेहया । बृंदारकेंद्रबृंदाभिवंद्यपादारविंदया ॥ ५४६ ॥

सेव्यमानोनुसवनंगीयमानश्चसादरं । नंदयन्मंदहासेनसुंदरींतामनिंदितां ॥ ५४७ ॥

अनंतानंतरूपेणगायन्ध्यायन्सदाहरिं । अमंदानंदसंदोहोरमतेहर्यनुग्रहात् ॥ ५४८ ॥

भिन्नदेहावित्यन्योन्याप्रविष्टदेहत्वेनैवसमीपगत्वोक्त्यासाक्षात्सायुज्यंनिश्चीयते । यद्यपिप्रागुदाहृतानुव्याख्यानरीत्यासरस्वत्या अपिविरिंचिदेहेलयसद्भावात्तत्रापिसायुज्यमस्ति । तथापितद्रूपांतरसायुज्यपरमितिसर्वमनवद्यं । भृत्याः सुपर्णादयएव ॥ अनिंदितामिति ॥ अनादिकालतःसर्वदोषहीनत्वेनेतिभावः ॥ अनंतानंतरूपेणेति ॥ "परमाणुप्रदेशेपी"त्याद्युक्तविधजीवत्वा वच्छिन्नयावज्जीवतद्देहतत्तद्धर्मादीनांप्रत्येकंनियामकतयाविद्यमानानांतदन्येषामनंतानंतरूपाणामधिकारेप्रमितत्वेनमुक्तौकैमु

त्यसिद्धत्वादितिज्ञेयं । आनंदानांसंदोहःसमूहः । भक्तेभ्योऽमंदानानंदान्संदुहते इतिवा ॥५४५–५४८॥ एवंयथामतिसंग्रहेण मुक्तभोगप्रकारंनिरूप्यशास्त्रांतिमसूत्रोक्तमुदीरयन्नुपसंहरति ॥ एवमिति ॥ मोदंतेसुखमनुभवंति । रमंतिप्रक्रीडंति । सर्वत्र सर्वदाहरिध्यानमवर्जनीयतयानुवर्तते । "नित्यज्ञानस्वरूपत्वान्नित्यंध्यायंतिकेशव"मित्युक्तेरित्याशयेनाह ॥ कमलानाथं

एवंविमुक्ताःसर्वेपिपुनरावृत्तिवर्जिताः । ध्यायंतःकमलानाथंमोदंतेचरमंतिच ॥ ५४९ ॥

इत्थंह्यनंतमुक्ताश्चमुक्तिमेष्यंत्यनंतकाः । यस्यप्रसादमात्रेणसहरिर्मेप्रसीदतु ॥ ५५० ॥

अनंतानंतकल्याणपरिपूर्णगुणात्मकः । कमलारमणोनित्यंपातुमांकरुणार्णवः ॥ ५५१ ॥

शास्त्राब्धिवृद्धिपूर्णेंदुर्गीर्वाणगणसेवितः । वाणीप्रियतमःपातुमध्वाख्यःप्राणनायकः ॥ ५५२ ॥

श्रीविष्णुतीर्थांबुजनाभतीर्थ त्रिविक्रमार्यादिमहानुभावान् ।
भजेसुपूर्णप्रमतिप्रसादप्राप्त प्रकृष्टप्रतिभाप्रगल्भान् ॥ ५५३ ॥
दुर्वादिमत्तेभमहांकुशंलसच्छ्रीमध्वशास्त्रांबुजदिव्यहंसं ।

ध्यायंतइति ॥ ५४९ ॥ एवंसमापितग्रंथस्तत्फलतया मोक्षार्थंभगवत्प्रसादंप्रार्थयते ॥ इत्थमिति ॥ यादृशात्यर्थप्रसादेन भूतानांभविष्यतांचमोक्षलाभस्तादृशप्रसादोमेभूयात् । तेनचाशेषानिष्टनिवृत्तिरानंदावाप्तिश्चस्यादित्यर्थः ॥ ५५० ॥ इदानीं

भगवत्प्रार्थनादिरूपंमंगलमाचरति ॥ अनंतेत्यादिना ॥ प्रतिभयाप्रगल्भानतिशयितान् ॥ ५५१-५५५ ॥ अनंतसमाश्रयमि त्यत्र अनंतशब्दआकाशपरोभगवत्परश्च ॥ ५५६ ॥ महीसुमनसांभूसुराणां ॥ ५५७ ॥ निदाघोघर्मातिशयः । व्रातःसमूहः ।

गुणाब्धिमज्ञानतमोदिनेशंजयार्यमीडेसुजनाब्धिचंद्रं ॥ ५५४ ॥

श्रीमन्नृसिंहार्यमुखेंदुबिंबात्स्रवत्सुतत्वामृतपानतृप्तं ।

नारायणार्यावनिदेवमीडेसज्ज्ञानसिद्ध्यैपरमंगुरुंमे ॥ ५५५ ॥

अंतस्तमोहरमनंतसमाश्रयंश्रीमध्वार्यशास्त्ररतसज्जनकंजबंधुं ।

व्याख्याप्रभाप्रकटितामलतत्वसंघंश्रीविठ्ठलार्यतरणिंशरणंप्रपद्ये ॥ ५५६ ॥

येयेसुपूर्णमतिशास्त्रमहापयोब्धिसुव्यक्तविष्णुमहिमामृतपानतृप्ताः ।

तेषांमहीसुमनसांपदपांसुपूगैःपूतोभवानिसततंस्वभिषिक्तदेहः ॥ ५५७ ॥

श्रीशाज्ञाननिदाघतप्तसुजलव्रातंसमीक्ष्येरितोदेवेशेनतदीयभावमरुतानीतश्रुतीर्थांबुभिः ।

वृष्ट्यातापमपास्ययोव्यजनयत्प्रज्ञादिसस्यादिकान्कैवल्यान्नमदाच्चरक्षतुसमांश्रीमध्वसद्वारिदः ॥५५८॥

देवेशेन सकलामरेश्वरेण । उपमार्थेइंद्रेण । भावमरुता भक्त्याख्यवायुना । "भावोभक्तिःस्वभावश्चप्रावण्यंचेतिकथ्यते" इ

त्युक्तेः । वायोर्मेघनेतृत्वादितिभावः । तीर्थांबुभिःशास्त्रांबुभिः । अन्यत्रकावेर्यादिनद्यंबुभिः । प्रज्ञादिसस्यादिकान् ज्ञानभक्ति वैराग्योपासनादिशालिगोधूमचणकादीन् ॥ ५५८ ॥ श्रीमध्वनिर्जरवरार्यगुरो श्रीमदानंदतीर्थाख्यानां शर्वादिसर्वगीर्वाण महाचार्यवर्याणां गुरो ॥ ५५९ ॥ सत्तत्त्वेति ॥ संति निर्दुष्टानि अबाधितानि परापरतत्वान्येवरत्नानि तेषांनिकराःसमूहाश्च

लक्ष्मीपतेऽमलविचित्रमहाविभूनेसर्वेशसर्ववरदप्रणतार्तिहारिन् ।
श्रीमध्वनिर्जरवरार्यगुरोसुदीनंमांदीननाथपरिपाहिकृपांबुराशे ॥ ५५९ ॥
श्रीविठ्ठलार्यतनुजेनयथावबोधमानंदतीर्थवरनामयुजाकृतायां ।
सत्तत्वरत्ननिकरोत्करमालिकायांश्रीमत्फलप्रकरणंपरिपूर्णमंजः ॥ ५६० ॥
श्रीमध्वशास्त्रसुमहाब्धिगतत्वरत्नैष्वल्पैःसुमंदमतिनारचितापिमाला ।
संधार्यतामविरतंकमलाप्रियेणनारायणेनहृदयेकरुणार्णवेन ॥ ५६१ ॥

तेउत्कराः उद्गतप्रकाशाइति विशेषणस्यपरनिपातः । तेषांमालिकायामित्यर्थः ॥ ५६० ॥ श्रीमध्वशास्त्रेति ॥ यद्यपि श्रीमध्वाचार्यवर्यकृतशास्त्रमहासमुद्रे देवतादुरधिगमान्यनंतानितत्वानिप्रतिपादितानि । अहंतुनानादोषकलुषिततयाऽत्यल्पा धिकारित्वाच्चान्यचित्तः । अतःस्वल्पतमान्येवसामान्यतोमयाऽवगतानितत्वानि । तत्समीकरणेचचित्तकौशलंनास्ति । एव

मल्पमेधसाऽकुशलेनापिरचितासत्तत्वरत्नमाला असमीचीनापि नभगवदुपेक्षाविषयोभवेत् । किंतुपरमकारुणिकतयासहरमया भगवान्नारायणोदिव्यमाणिक्यमालामिवेमामपिमद्वाक्सूत्रप्रोतामर्पितत्वमालांस्वहृदयेनिधाय मह्यंप्रसीदतामित्याशयः ॥५६१॥ नैवंसमर्पणेपिममस्वातंत्र्यं । अपितु कर्ता अर्पयिता भोक्ताच स्वयमेव तथापिकेवलंकृपावशेनैवप्रीयतामित्याशयवानाह ॥ स्थित्वेति ॥ मयिस्थितेषुतत्वाभिमानिषुब्रह्मादिदेवेषुस्थित्वा ॥ ५६२ ॥ ॥ महालक्ष्मीमुखांभोजमध्वास्वादनमा

स्थित्वामत्संस्थदेवेषुयइमांमालिकांव्यधात् । समर्प्यस्वकृतांस्वास्मिन्प्रीयतांस्वयमेवसः ॥ ५६२ ॥

इतिश्रीविठ्ठलाचार्यतनुजेनानंदतीर्थाचार्येणविरचितासत्तत्वरत्नमालासंपूर्णा ॥

नसः ॥ नारायणःसदापातुदीनंमांदीनवत्सलः ॥ १ ॥ क्वाहंसुमंदधिषणःकलुषीकचैतच्छास्त्रंशिवादिविबुधैरधिगम्यमंजः ॥ वैयात्यमद्भुतमिदंयदहंप्रवृत्तस्तत्क्षाम्यतांसुरगणैरपराधजातं ॥ २ ॥ तत्वरत्नप्रकाशोयंस्वप्रकाशायविष्णवे । समर्पितोमयातेन प्रीयतांकमलापतिः ॥ ३ ॥ नमःश्रीसुखतीर्थार्यहृदयांभोजवासिने । रमाप्रणयिनेमोक्षदायिनेशेषशायिने ॥ ४ ॥ इतिसत्तत्वरत्नमालाप्रकाशेफलप्रकरणंसंपूर्णं ॥ १६ ॥

इतिश्रीमद्विठ्ठलाचार्यवर्यतनुजेनानंदतीर्थनामकेनविरचितायांसत्तत्वरत्नमालिकाप्रकाशिकासंपूर्णा ॥

श्रीकृष्णार्पणमस्तु ॥

श्रीः

# सत्तत्वरत्नमालायाः प्रकरणानि ।



एवं प्रकरणानि षोडश ॥ १६ ॥

श्रीः

# सत्तत्वरत्नमालाया विषयानुक्रमणी ।

**इति चतुर्थं [४] मध्यममाधम-मोक्षयोग्यप्रकरणं।** 

**अथ पंचमं [५] ऋज्वतिरिक्त-उत्तममोक्षयोग्यप्रकरणं।** 

**इति द्वादशं [१२] अपरोक्षज्ञानप्रकरणं ।** ,,

**अथ त्रयोदशं [१३] कर्मक्षयप्रकरणं ।** ,,

## विषयानुक्रमणिकासंपूर्णा ।

इदं पुस्तकं मद्रासनगरांतर्वर्ति-तिरुवल्लिकेणी-वास्तव्येन पंडित टी. आर्. कृष्णाचार्येण मुंबय्यां "निर्णयसागरा"ख्यमुद्रणालये रामचंद्र येसु शेडगेद्वारा मुद्राप्य प्रकाशितं ।

शाकः १८४०, सन १९१८.



Published by T. R. Krishnacharya, Proprietor Madhva-Vilas Book-Depot, Triplicane, Madras. S. E.

Printed by Ramchandra Yesu Shedge, at the Nirnaya-Sagar Press, 23, Kolbhat Lane, Bombay.